| विषयः | पृष्ठाङ्कः |
|---|---|
| ऋणधनचक्रम् | ३६२ |
| कादिमते ऋणशोधनप्रकारः | ३६३ |
| हरचक्रम् | ,, |
| तारादिमन्त्रेऽपि सिद्धादि-विचारापेक्षा | ३६४ |
| षट्कर्मयोग्यस्थानम् | ३६६ |
| आसनाधारः | ३६७ |
| षट्कर्मयोग्यमुद्रा | ३६७ |
| षट्कर्मयोग्यकुण्डम् | ३६८ |
| षट्कर्मणि मन्त्रजपयोर्भेदः | ३७० |
| ,, मालाभेदाः | ३७१ |
| ,, जपसंख्या | ३७२ |
| ,, मालाग्रथननियमः | ३७२ |
| ,, कुण्डविशेषफलम् | ,, |
| ,, अग्नेर्जिह्वाभेदाः | ३७३ |
| ,, होमीयमुद्रा | ३७४ |
| ,, अग्निचक्रम् | ,, |
| ,, स्रुक्स्रुवसमिल्लक्षणम् | ३७६ |
| ,, होमद्रव्याणि | ३७७ |
| विशेषप्रयोगः | ३७९ |
| देहसिद्धिः | ३८४ |
| स्तोत्रम् | ३८६ |
| स्पर्शमन्त्रः | ३८८ |

| विषयः | पृष्ठाङ्कः |
|---|---|
| वीरप्रयोगाः | ३८८ |
| पूजायन्त्रम् | ३९० |
| ताराकवचम् | ३९१ |
| धारणयन्त्रम् | ४०२ |
| यन्त्रलिखनप्रकारः | ४०६ |
| यन्त्रसंस्कारः | ,, |
| काम्यबलिः | ४०७ |
| खड्गमन्त्रः | ४०८ |
| बलिमस्तकपतनफलम् | ४०९ |
| ग्राह्यबलिः | ,, |
| खड्गस्य मन्त्रान्तरम् | ४११ |
| बलिपात्रनिरूपणम् | ४१२ |
| निषिद्धबलिः | ४१३ |

## एकादशतरङ्गे

| विषयः | पृष्ठाङ्कः |
|---|---|
| ताराभेदाः तन्मन्त्रभेदाश्च | ४१५ |
| कार्म्मुकसिद्धिप्रकारः | ४१६ |
| अस्त्रनिवारिणीविद्या | ,, |
| महामन्त्राः | ४२० |
| गुप्तषोडशीमन्त्रः | ४२३ |
| ध्यानम् | ४२४ |
| तारिणीकल्पः | ४३१ |
| पूजाक्रमः | ४३२ |

ॐ

नमो नीलसरस्वत्यै

# ताराभक्तिसुधार्णवः

## प्रथमस्तरङ्गः

### मङ्गलाचरणम्

सौनासीरमणिप्रवीणजलदश्यामाभिरामच्छविं
नृत्यत्पीतपटद्वयैककपटप्रोद्यत्परागोज्ज्वलम् ।
वंशीवादनकैतवप्रविलसद्गम्भीरधीरध्वनिं
वन्दे कञ्चिदहं मुदा मधुलिहं हृत्पद्ममध्यस्थितम् ॥

हासव्याजविराजमानकुसुमां वक्षोजराजत्फला-
मुद्यत्कुन्तलकैतवप्रविलसन्मत्तालिमालाकुलाम् ।
स्थाणुस्थां रमणीयनूपुरकृताबालामपर्णामहं
काञ्चित् कल्पलतां नमामि ललितां शैलाधिराजोद्गताम् ॥

ललाटतटसङ्गमाद् व्रजति बालचन्द्रात्मतां
शिरोरुहनिवेशनाद् भवति जाह्नवीरूपधृक् ।
विभाति हृदि कौस्तुभात्मकतया सतां यः सदा
गुरोश्चरणरेणवे निरुपमाय तस्मै नमः ॥

नानातन्त्राणि विज्ञाय गदाधरगुरोर्मुखात् ।
करोति नरसिंहोऽयं ताराभक्तिसुधार्णवम् ॥

शम्भुप्रणीतवचनानि विचिन्वतोऽपि
नैपुण्यमन्यजनतो न विभाति किं मे ।
मध्येसमुद्रमुपजातमहामणीनां
न्यासो गुणेन गुणिनां किमु कौतुकाय ॥

## विद्याप्रशंसा

रुद्रयामले श्रीमहादेव उवाच—
अतः परं किं वक्तव्यं कथयस्व हरप्रिये।
पार्वत्युवाच—
महाविद्यां महादेव कथयस्व मम प्रियाम्।
श्रीमहादेव उवाच—
नष्टे सृष्टे महादेवि नष्टे स्थावरजङ्गमे।
बृहदण्डमभूदेकं सृष्टेः पूर्वं महत्तरम्॥
तत्र जज्ञे स्वयं विष्णुश्चतुर्भुजसमन्वितः।
शङ्ख-चक्र-गदा-पद्म-चतुर्भुजधरो हरिः॥
तस्य नाभौ ततो ब्रह्मा जज्ञे सृष्टस्य च क्षये।
ललाटदेशे तस्यैव रुद्रो जज्ञे स्वयं हरेः॥
ब्रह्मा पप्रच्छ देवेशं विष्णुं त्रिभवमोचनम्।
कस्या विद्यां समाराध्य चतुर्वेदो निगद्यते॥
विष्णुरुवाच देवेशं हरं पृच्छस्व शंकरम्।
( सरस्वती महाविद्या शिवदेहप्रतिष्ठिता॥ )
तस्य तद्वचनं श्रुत्वा ब्रह्मा पप्रच्छ शंकरम्।
कथयास्माकं देवेश नाम्ना नीलसरस्वतीम्॥
ब्रह्मणो वचनं श्रुत्वा प्रजहास महेश्वरः।
शृणुष्वावहितो विप्र विद्यां नीलसरस्वतीम्।
अस्याः प्रसादमासाद्य चतुर्वेदान् वदिष्यसि॥
मेरोः पश्चिमकुले च चोलनामा ह्रदः स्मृतः।
तत्र जज्ञे स्वयं वेदमाता नीलसरस्वती॥
एतस्मिन्नेव काले तु मेरु(रोः?)शृङ्गपरायणः।
जपजाप्यं समासाद्य त्रियुगं च ततः स्थितः॥
ममोर्ध्ववक्त्रान्निःसृत्य तेजोराशिविनिर्गतः।
ह्रदे चोले निपत्यैव नीलवर्णाऽभवत् पुरा॥
ह्रदस्य चोत्तरे भागे ऋषिरेकोऽभवत्ततः।
अक्षोभ्यनाम चाश्रित्य मुनिवेशधरः शिवः॥
एतस्मिन्नेव काले च कैलासशिखरस्थितम्।

पार्वती प्राह देवेशं देवीप्रकृतिसुन्दरी ।
वक्षःस्थले समासीना पृच्छतिस्म नगात्मजा ॥
कथमीशान सार्वज्ञ्यमलभंस्ते तपोधनाः ।
कां विद्यां प्राप्य कवयो भारतादि प्रचक्रिरे ॥
श्रुत्वा नगात्मजावाक्यं विहस्य परमेश्वरः ।
प्राह प्रियां परिष्वज्य साधु साध्विति पूजयन् ॥
शृणु साध्वि महाविद्यामज्ञानेन्धनदाहिनीम् ।
यामवाप्य महात्मानो भारतादि प्रचक्रिरे ॥
नासाध्यं मेनिरे किञ्चित् कवयः शुद्धबुद्धयः ।
वादे सदसि या वाक्यस्तम्भिनी प्रतिवादिनाम् ॥
महावैरिहानिकरी विदुषां बलिदानतः ।
हास्याय या मनुष्याणामशुद्धमपि जल्पयेत् ॥
वादिनं वापि राजानं मन्त्रिणं वशमानयेत् ।
ज्ञानमात्रेण मन्त्रस्य जपात् सर्वज्ञतामियात् ॥
जिह्वायां न्यसनादेव मूकोऽपि सुकविर्भवेत् ।
दीनो धनसमृद्धः स्याद् राजा राज्यमवाप्नुयात् ।
ब्राह्मणो मुक्तिमाप्नोति मन्त्रस्यास्य प्रसादतः ॥
शृणु दद्यान्महेशानि न शूद्राय कदाचन ।
अव्याहता मतिः शास्त्रे विजयो वाक्पतेरिव ॥

फेत्कारिणीतन्त्रे—

कैलासशिखरासीनं चन्द्रखण्डविराजितम् ।
वक्षःस्थले समासीना पृच्छतिस्म नगात्मजा ॥
कथमीशान सार्वज्ञ्यमलभंस्ते तपोधनाः ।
कां विद्यां प्राप्य कवयो भारतादि प्रचक्रिरे ॥
श्रुत्वा नगात्मजावाक्यं विहस्य परमेश्वरः ।
प्राह प्रियां परिष्वज्य साधु साध्विति पूजयन् ॥
शृणु साध्वि महाविद्यामज्ञानेन्धनदाहिनीम् ।
यामवाप्य महात्मानो धर्मकामार्थमुक्तिषु ॥
नासाध्यं मेनिरे किञ्चित् कवयः शुद्धबुद्धयः ।
वादे सदसि या वाचः स्तम्भिनी प्रतिवादिनाम् ॥

विद्याहानिकरी देवि विदुषां बलिदानतः ।
हास्याय या सदस्यानामशुद्धमपि जल्पयेत् ।
वादिनं वापि राजानं मन्त्रिणं वशमानयेत् ।
मन्त्रस्य ज्ञानमात्रेण जपात् सर्वज्ञतां नयेत् ॥

जल्पयेत् प्रतिवादिनमित्यन्वयः ।

## तारामन्त्रः

तथा—सपरं प्रथमं दत्त्वा चतुर्थस्वरभूषितम् ।
रेफारूढं स्फुरद्दीप्तमिन्दुबिन्दुसमन्वितम् ॥
त्रंकारं च ततो दद्यात् चतुर्थेनैव भूषितम् ।
दीर्घोकारसमायुक्तं हकारं योजयेत्ततः ॥
फट्कारं च ततो दद्यात् सम्पूर्णः सिद्धमन्त्रकः ।

सपरं हकारं । चतुथस्वर ईकारः । इन्दुरर्धचन्द्रः । बिन्दुरनुस्वारः । दीर्घेण ऊकारेण समायुक्तं हकारं तेन हूं ।

मत्स्यसूक्ते—अथ वक्ष्ये महादेव्या मन्त्रोद्धारमनुत्तमम् ।
यञ्च ज्ञात्वा नरो भाति वाचस्पतिरिवापरः ॥
मायाबीजं समुद्धृत्य तवर्गप्रथमं तथा ।
रतिबिन्दुवह्नियुतं द्वितीयं बीजमुत्तमम् ॥
कूर्चबीजं तृतीयं तु फट्कारस्तदनन्तरम् ।
सम्पूर्णसिद्धमन्त्रस्तु रश्मिपञ्चकसंयुतः ॥

मायाबीजं ह्रीं । तवर्गप्रथमं तकारं । रतिरीकारः । बिन्दुरनुस्वारः । वह्नी रेफः तेन त्रीं । कूर्चबीजं हूं । पञ्चरश्मिरोंकारः । तारार्णवे—

अनुत्तरं समुद्धृत्य मायोत्तरमतः परम् ।
पपञ्चमसमायुक्तं पञ्चरश्मिः प्रकीर्त्तितः ॥
जीवनीमध्यगा पश्चादेकाक्षी तदनन्तरम् ।
उग्रं दर्पं ततः पश्चान्मन्त्रो देवि प्रकाशितः ॥

अनुत्तरमकारः । मायोत्तमूकारः । पपञ्चमो मकारः । जीवनी ह्रीं । एकाक्षी त्रीं । उग्रं हूं । दर्पं फट् । तत्त्वबोधे—

तारं लज्जां त्रंकामेशीं हूं फड़ित्युग्रतारिका ।
माया त्रीं हूमथास्त्रान्तमित्येकजटयाऽर्चयेत् ॥
अस्त्रहीनमिदं नीलसरस्वत्या विनिर्दिशेत् ।

कामेशी ईकारः ।

ध्यक्षरोऽसौ महामन्त्रः फट्कारान्तो हृदि स्थितः ।
पञ्चरश्मिसमायुक्तोऽथाज्ञानेन्धनदाहकः ॥

तन्त्रचूडामणौ—अस्त्रान्तेयं महाविद्या जटापुञ्जवधारिणी ।
वेदादिमुखयुक्ता चेत् तारा त्रिभवतारिणी ॥

मत्स्यसूक्ते—लीलया वाक्प्रदा चेयं तेन नीलसरस्वती ।
तारकत्वात् सदा तारा सुखमोक्षप्रदायिनी ॥
उग्रापत्तारिणी यस्मादुग्रतारा प्रकीर्त्तिता ।

तथा—लज्जाबीजं वधूबीजं कूर्चबीजं तथाहि फट् ॥
एवं पञ्चाक्षरी विद्या पञ्चभूतप्रकाशिनी ।

तथा—तारास्त्ररहिता त्र्यर्णा महानीलसरस्वती ॥
कुल्लुकेति समाख्याता त्रिषु लोकेषु गोपिता ।

तत्रैव—वशिष्ठेनापि मुनिना शापो दत्तः सुदारुणः ॥
ततः प्रभृति विद्येयं फलदात्री न कस्यचित् ।
शक्तिबीजं त्रपान्तस्थबीजोपरि नियोजितम् ॥
ततः प्रभृति विद्येयं वधूरिव यशस्विनी ।

शक्तिबीजं सकारः । त्रपान्तस्थबीजं त्रींकारः । तेन स्त्रीमिति सिद्धम् ।

तारार्णवेऽपि—वशिष्ठाराधिता चोग्रा न च शीघ्रफला यतः ।
अतस्तेनापि मुनिना शापो दत्तः सुदारुणः ।
ततः प्रभृति विद्येयं फलदात्री न कस्यचित् ॥
शक्तिबीजं त्रपान्तस्थबीजोपरि नियोजितम् ।
ततः प्रभृति विद्येयं वधूरिव यशस्विनी ॥
फलिनी सर्वविद्यानां जयिनी जयकांक्षिणाम् ।
विषक्षयकरी विद्या अमृतत्वप्रदायिनी ॥
मन्त्रस्य ज्ञानमात्रेण विजयी भुवि जायते ।
मूको भवति वागीशो गीष्पतिर्जायते नरः ॥

अत एव तन्त्रचूडामणौ—
क्रिया नववधूशब्दो यथागः कुरुते प्रिये ।
तथैवेयं महाविद्या न कदा कुलगोचरा ॥

इति वधूशब्देन सकारयुक्तमेव द्वितीयबीजमायाति ।
जाते कृष्णावतारे तु पुनः शापात् प्रमुच्यते ।

इति तन्त्रान्तरवचनात् कृष्णावतारपर्यन्तमेव शाप इति तु तत्त्वम्। मत्स्यसूक्ते—

श्रीबीजाद्या यदा विद्या तदा श्रीः सर्वतोमुखी।
एषैव हि महाविद्या मायाद्या सकलेष्टदा।
वाग्भवाद्या महावाक्यस्वरूपा सर्ववाङ्मयी॥

तथा—गुटिकासिद्धि-वेताल-पाताल-वटयक्षिणी।
परपुरप्रवेशश्च आज्ञासिद्धिः प्रजायते॥
जिह्वायां चिन्तनादेव त्रिकालज्ञो भवेद् ध्रुवम्।
यस्तु विद्यामभेदेन चिन्तयेत् साधकोत्तमः॥
जीवन्मुक्तो विमुक्तश्च अन्ते सोऽपि भवेद् ध्रुवम्।

ब्रह्मसंहितायां—अन्ये तु साधिता मन्त्राः सर्वे स्युः फलदायकाः।
गृहीतमात्रफलदो मन्त्रो यमप्यसाधितः।

फेत्कारिण्यां—क्षिप्रप्रसादा जगतां सदा नीलसरस्वती।
विशेषतः कलियुगे मत्प्रभावाद् भविष्यति॥
सिद्धमन्त्रो यदा मन्त्री वालिशस्यापि मूर्द्धनि।
करं दत्त्वा दिशत्याशु सोऽपि श्लोकान् पठत्युत॥

दिशति श्लोकं कुर्वित्याज्ञापयति।

अल्पज्ञमपि विद्वांसो मानयिष्यन्ति वाग्मिनम्।
वाचस्पतिमिवाश्चर्यं पश्य देवज्ञमाद्भुतम्॥
मन्त्रस्य ज्ञानमात्रेण अनुभावत्रयं भवेत्।
तात्कालिकी च कविता परैरनभिभाव्यता॥

तथा—यस्मिन् दिवसे लभते मनुमेनं तत्र लाभः स्यात्।
नियतं लभते प्रत्ययमपि सदसत्कर्मणोरुभयोः।

प्रत्ययं नाशं। सदसत्कर्मणोः पुण्यपापयोः। तथा—

इति नीलसरस्वत्याः प्रपञ्चोऽयं प्रदर्शितः।
ब्रह्मणा पूर्वमस्मभ्यं मया तुभ्यं नगात्मजे॥
नीलसारस्वते मन्त्रे कविताविघ्नकारिणी।
अनास्था च तृतीयं तु न किञ्चिद् विघ्नकारणम्॥

कविताविघ्नकारिणीति—अलौकिकचमत्कारिकवितासक्तस्य उपासनाया-मालस्य-युक्तस्य चाणिमादिमहासिद्ध्यर्थं यत्नो न भवतीत्यर्थः।

इति महामहोपाध्यायठक्कुर-श्रीनरसिंह-विरचिते ताराभक्ति-सुधार्णवे प्रथमस्तरङ्गः॥ १॥

## द्वितीयस्तरङ्गः

### मन्त्रग्रहणनियमः

महोग्रताराकल्पे—

कल्पे दृष्ट्वा तु यस्तारां स्वयं गृह्णाति मानवः।
मन्वन्तरसहस्रेषु निष्कृतिर्न विधीयते।
गुरोर्मुखान्महाविद्यां गृह्णीयात् पापनाशिनीम्॥

महाकालसंहितायाम्—

न शास्त्रमालोक्य वदेन्नाचरेन्न जपेदपि।
न पश्येन्नोपदिश्याच्च न कुर्यान्नैव साधयेत्॥
गुरूपदेशतो लब्ध्वा जपन्यासार्चनादिकम्।
पश्चात् तत् साधयेत् सर्वं सदा तद्भावभावितः॥

### अथ गुरुलक्षणम्

तन्त्रचूडामणौ—कुलीनः सर्वविद्यानामधिकारीति गीयते।
दीक्षाप्रभुः स एवात्र सर्वमन्त्रस्य नापरः॥

कुलीनस्तु कुलार्णवे उक्तः—

यो भवेत् कुलतत्त्वज्ञः कुलागमविशारदः।
कुलार्चनपरः स स्यात् कौलिको दाम्भिकोऽपरः॥
कुलभक्तान् कुलाचारान् कुलज्ञानान् कुलव्रतान्।
प्रीतो भवति यो दृष्ट्वा कौलिकः स तु मे प्रियः॥
तत्त्वत्रयस्वीकरणमूलमन्त्रार्थतत्त्ववित्।
देवतागुरुभक्तश्च कौलिकः स्यात्तु दीक्षया॥

पशोस्तु नाधिकारः।

पशुस्तु द्विविधो देव पूर्वेण सह भैरवः।
अस्याधिकारः पूजायां न गुरुत्वे कदाचन॥

इति भावचूडामणिवचनात्। द्विविधः कुलाचारनिन्दकोऽनिन्दकश्च। शाक्तदीक्षापरमेतत्। गुरुलक्षणं कुलार्णवे—

श्रीगुरुः परमेशानि शुद्धवेशो मनोहरः।
सर्वलक्षणसंयुक्तः सर्वावयवशोभितः॥
सर्वागमार्थतत्त्वज्ञः सर्वमन्त्रविधानवित्।
लोकसंमोहनकरो देववत् प्रियदर्शनः॥
सुमुखः सुलभः स्वच्छः शुद्धान्तश्छिन्नसंशयः।
इङ्गिताकारचेष्टावित् दूरीकृतसुदुर्जनः॥
अन्तर्मुखो बहिर्दृष्टिः सर्वज्ञो देशकालवित्।
आज्ञासिद्धस्त्रिकालज्ञो निग्रहानुग्रहक्षमः॥
वेदवेदान्तविच्छान्तः सर्वजीवदयापरः।
स्वाधीनेन्द्रियसञ्चारः षड्वर्गविजयक्षमः॥
अग्रगण्योऽतिगम्भीरः पात्रापात्रविशेषवित्।
निर्मलो नित्यसन्तुष्टो निर्द्वन्द्वो नित्यशक्तिमान्॥
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्ववाक्।
भक्तिप्रियः सर्वसमो दयालुः शिष्यशासिता॥
स्वेष्टदेवगुरु-प्राज्ञ-वनिता-पूजनोत्सुकः।
नित्ये नैमित्तिके काम्ये रतः कर्मण्यनिन्दिते॥
रागद्वेषभयक्रोधदम्भाहङ्कारवर्जितः।
स्वविद्यानुष्ठानपरो विद्यानां च प्रकाशकः॥
यदृच्छालाभसन्तुष्टो गुणदोषविभेदकः।
स्त्रीधनादिष्वनासक्तो दुःसङ्गव्यसनोज्झितः॥
अलोलुपोऽहिंसकश्चापक्षपाती विचक्षणः।
वित्तविद्यादिभिर्मन्त्रयन्त्रतन्त्राद्यविक्रयी॥
निःसङ्कल्पो निर्विकल्पो निर्णीतात्माऽतिधार्मिकः।
तुल्यनिन्दास्तुतिर्मौनी निरपेक्षो नियामकः॥
इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये।
शुद्धचित्तो दयालुश्च ब्राह्मणो वेदपारगः॥
कुलाचाररतो नित्यं कुलशास्त्रप्रयोजकः।
शान्तः स्वाधीनः सर्वज्ञो लोभमोहविवर्जितः॥
क्रोधमोहपरित्यागी विरागी वीरवन्दितः।
निगमागमवेत्ता च प्रसन्नवरमानसः॥

सर्वाश्रमपरित्यागी ललनार्चनतत्परः ।
ईदृग्लक्षणसंयुक्तं पूजयेद् गुरुमादरात् ॥

महाकपिलपंचरात्रे—
नातिबालो न वृद्धश्च न खञ्जो न कृशस्तथा ।
नाधिकाङ्गो न हीनाङ्गो न खल्वाटो न दन्तुरः ॥
कुल(कृत)ज्ञं वाग्मिनं शूरं प्रतिष्ठागमपारगम् ।
वास्तुविद्याकृताभ्यासं शल्योद्धारविवेकिनम् ॥
क्रियानुक्रमवेत्तारं मुद्रातन्त्रविवेकिनम् ।

तत्त्वसारे—बह्वाशी दीर्घसूत्री च विषयादिषु लोलुपः ।
हेतुवादरतो दुष्टो वागवादी गुरुनिन्दकः ॥
अरोमा बहुरोमा च निन्दिताश्रमसेवकः ।
कालदन्तोऽसितोष्ठश्च दुर्गन्धिश्वासवाहकः ॥
दुष्टलक्षणसम्पन्नो यद्यपि स्वयमीश्वरः ।
बहुप्रतिग्रहासक्त आचार्यः श्रीक्षयावहः ॥

षोडशार्णवे—अपुत्रो मृतपुत्रश्च कुण्डश्च वामनस्तथा ।
कुनखी श्यावदन्तश्च स्त्रीजितश्चाधिकाङ्गकः ॥
हीनाङ्गः कपटी रोगी बहुवल्गी च कुब्जकः ।
एतैर्दोषैर्विहीनो यः स गुरुः शिष्टभाजनः ॥

वाराहीतन्त्रे—स्वनाम्ना न गुरुः कार्यो भार्या च मातृनामिकाम् ।

सोमशम्भुः—देशकालश्रुताचार-वृत्तशीलगुणान्वितः ।
अथ स्वभावसम्पन्नो गुरुः स्याद् गुरुणाकृतः ॥

वीरागमे—कुमारीहिमवन्मध्ये स्वतः कृष्णमृगान्विते ।
देशे जातस्तु यो विद्वानाचार्यत्वमथार्हति ॥

शिवपद्धतौ—मध्यदेशकुरुक्षेत्रनाभोज्जयिनीसम्भवाः ।
अन्तर्वेदिप्रतिष्ठाना आवन्त्याश्च गुरूत्तमाः ॥
गौडाः शाल्वोद्भवाः सौरा मागधाः केरलास्तथा ।
कोशलाश्च दशार्णाश्च गुरवः सप्त मध्यमाः ॥
कर्णाटनर्मदाराष्ट्रकच्छाभीरोद्भवास्तथा ।
कालिङ्गाः कामरूपाश्च काम्बोजाश्चाधमाः स्मृताः ॥

देवीमते—आचार्यः शैवशास्त्रज्ञः शिवदेशसमुद्भवः ।

ब्रह्मचारी गृहस्थो वा शिवभक्तिपरायणः ॥
यजमानानुकूलर्क्षजन्मा देशिक उच्यते ।

हयशीर्षपञ्चरात्रे—गृहस्थं ब्रह्मचर्यस्थं ककाराष्टकवर्जितम् ॥
गुरुं कुर्वीत सततमुपवासव्रते रतम् ॥

शैवागमे—भिक्षुभ्यश्च वनस्थेभ्यो वर्णिभ्यश्च महेश्वरि ।
गृहस्थो भोगमोक्षार्थी मन्त्रदीक्षां न चाचरेत् ॥
त्यक्ताग्नयः क्रियाहीना यतयो निष्परिग्रहाः ।
वनस्थास्तादृशा एव वर्णी न्यूनाश्रमी यतः ॥
अतस्तेषां नाधिकारो दीक्षादाने महेश्वरि ।

शिवसद्भावे—दीक्षायां न गुरुत्वेन यतीन् वैखानसान् प्रिये ।
वृणुयाद् भोगमोक्षार्थी गृहस्थो वर्णिनं तथा ॥

योगिनीतन्त्रे—यतेर्दीक्षां गृहीत्वा तु कदाचिदपि मोहितः ।
प्रायश्चित्तं धेनुरेका त्रिरात्रव्रतमेव वा ॥
प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् ।

रुद्रयामले—पितुर्दीक्षा यतेर्दीक्षा या दीक्षा वनवासिनः ।
विविक्ताश्रमिणो दीक्षा पुत्रायुर्धननाशिनी ॥

सिद्धयामले—यदि भाग्यवशादेव सिद्धविद्यां लभेत् प्रिये ।
तदैव तां तु दीक्षेत त्यक्त्वा गुरुविचारणाम् ॥
स्वेष्टविद्याप्रदाने तु न कुर्याद् गुरुचिन्तनम् ।

मोहशूरोत्तरे—वर्णाचारव्रतो मन्त्री ज्ञानवान् सुसमाहितः ।
नित्यनिष्ठो यतिः ख्यातो गुरुः स्याद् भौतिकोऽपि वा ॥

अत्र यतेर्गुरुत्वोक्तिर्गृहस्थातिरिक्तविषया । हयशीर्षपञ्चरात्रे—
यस्य विष्णौ परा भक्तिर्यथा विष्णौ तथा गुरौ ।
स एव देशिको ज्ञेयः सत्यमेतद् ब्रवीमि ते ॥

नारदपञ्चरात्रे—ब्राह्मणः सर्वकालज्ञः कुर्यात् सर्वेष्वनुग्रहम् ।
तदभावाद् द्विजश्रेष्ठः शान्तात्मा भगवन्मयः ॥
क्षत्रविट् शूद्रजातीनां क्षत्रियोऽनुग्रहक्षमः ।
क्षत्रियस्यापि च गुरोरभावादीदृशो यदि ॥
वैश्यः स्यात् तेन कार्यः स्याद् द्वयोर्नित्यमनुग्रहः ।
सजातीयेन शूद्रेण तादृशेन महामते ।

अनुग्रहाभिषेकौ च कार्यौ शूद्रस्य सर्वदा ॥
वर्णोत्तमेऽथ च गुरौ सति वा विश्रुतोऽपि वा ।
स्वदेशतोऽथवाऽन्यत्र नेदं कार्यं शुभार्थिना ॥
विद्यमाने तु यः कुर्याद् यत्र तत्र विपर्ययम् ।
तस्येहामुत्र नाशः स्यात् तस्माच्छास्त्रोक्तमाचरेत् ॥

चन्द्रयामले—क्षत्रविट्शूद्रजातीनां प्रातिलोम्यं न दीक्षयेत् ।

तन्त्रे—आचार्यमातुलावृत्विक् पितृव्यः श्वशुरो नृपः ।
इति षट् गुरवोऽप्यत्र प्रोक्ता मन्त्रविशारदैः ॥

ज्ञानोन्नयन-योगिनीतन्त्रयोः—

निर्वीर्यं हि पितुर्मन्त्रं तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥

योगिनीतन्त्रे—प्रमादाद्वा तथाऽज्ञानात् पितुर्दीक्षां समाचरेत् ।
प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् ॥

अत्र पितुरित्यनादरे षष्ठी । तेन पित्रादिषु भक्तिरूपो नादरोऽतिपरिचयादिना यदि भवति तदा पुत्रादिना मन्त्रो न ग्राह्य इत्यर्थः । तत्रापि 'भक्तियुक्ताय पुत्राय वसुदाय वे'ति प्रयोगसारवचनात् 'मनुर्विमृष्य दातव्यो ज्येष्ठस्यापि विनीततामि'ति फेत्कारिण्यादिवचनाच्चेति मम प्रतिभाति ।

केचित्तु 'निजकुलतिलकाय ज्येष्ठपुत्राय दद्यादि'ति फेत्कारिण्यादिवचनात् ज्येष्ठपुत्रस्यैव भक्तस्य पितुः सकाशान्मन्त्रग्रहणेऽधिकारो न कनिष्ठपुत्रस्य न वा मातामहादेः सकाशाद् दौहित्र्यादीनामिति वदन्ति ।

अपरे तु 'स्वीयमन्त्रोपदेशो तु न कुर्याद् गुरुचिन्तनमि'ति भैरवतन्त्रवचनादनुपासितमन्त्रस्य पित्रादिसकाशाद् ग्रहणनिषेध इत्याहुः । मत्स्यसूक्ते तु—

निर्वीर्यं हि पितुर्मन्त्रं शैवे शाक्ते न दूष्यति ।

इत्युक्तम् । रुद्रयामले—

न पत्नीं दीक्षयेद् भर्ता न पिता दीक्षयेत् सुताम् ।
न पुत्रं च तथा भ्राता भ्रातरं न च दीक्षयेत् ॥

इदमप्यभक्तविषयमेव । अत एव—

ब्रह्मणा कथितं पूर्वं वशिष्ठाय महात्मने ।
वशिष्ठोऽपि स्वपुत्राय मत्पित्रे दत्तवान् स्वयम् ॥

इति मत्स्यसूक्तवचनमपि संगच्छते । स्त्रीसकाशान्मन्त्रग्रहणं प्रशस्तम् ।

स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता ।

इति योगिनीतन्त्रवचनात् । सापि विधवातो निषिद्धा ।

साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया ।

सर्वमन्त्रार्थतत्त्वज्ञा सुशीला पूजने रता ॥

गुरुयोग्या भवेत् सा हि विधवा परिवर्जिता ।

इति तत्रैवोक्तेः । हयशीर्षपञ्चरात्रे—

सर्वत्र व्यतिरिक्तं तु आत्मानं वेत्ति यो द्विजः ।

सर्वलक्षणहीनोऽपि स गुरुर्नात्र संशयः ॥

पञ्चरात्रप्रबुद्धस्तु सिद्धान्तार्थस्य तत्त्ववित् ।

सर्वलक्षणहीनोऽपि आचार्यः स निगद्यते ॥

वैशम्पायनसंहितायाम्—

स्वप्नलब्धं स्त्रिया दत्तं संस्कारेणैव शुद्ध्यति ।

संस्कारश्च तत्रैव—

स्वप्नलब्धे च कलशे गुरोः प्राणान् निवेशयेत् ।

वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं शुभम् ॥

ततः सिद्धिमवाप्नोति विफलं त्वन्यथा भवेत् ।

चन्द्रपीठे—स्वप्नलब्धः स्त्रिया दत्तो दत्तः केनाप्यसाधितः ।

फलदा अपि ते मन्त्रा गृहीतव्यास्तु सद्गुरोः ॥

इति गुरुलक्षणम्

## अथ शिष्यलक्षणम्

कुलार्णवे—सच्छिष्यं तु कुलेशानि सर्वलक्षणसंयुतम् ।

शमादिसाधनोपेतं गुणशीलसमन्वितम् ॥

शुद्धदेहान्ववायजं धार्मिकं शुद्धमानसम् ।

दृढव्रतं सदाचारं श्रद्धाभक्तिसमन्वितम् ॥

कृतज्ञं पापभीतञ्च साधुसज्जनसम्मतम् ।

आस्तिकं दानशीलं च सर्वभूतहिते रतम् ॥

विश्वासविनयोपेतं वित्तशाठ्यविवर्जितम् ।

असाध्यसाधकं शूरं बलकान्तिसमन्वितम् ॥

अनुकूलक्रियायुक्तमप्रमत्तं विचक्षणम् ।

हितसत्यमितस्निग्धभाषिणं मुक्तदूषणम् ॥

सकृदुक्तगृहीतार्थं चतुरं बुद्धिविस्तरम् ।
गृहतल्पासनोत्सङ्गनिर्विकारमसेवकम् ॥
विमृष्यकारिणं वीरं मनोदारिद्र्यवर्जितम् ।
सर्वकार्यातिकुशलं धीरं सर्वोपकारकम् ॥
अल्पार्थे परनिन्दायां विमुखं सुमुखं प्रिये ।
जितेन्द्रियं सुसन्तुष्टं धीमन्तं ब्रह्मचारिणम् ॥
त्यक्ताधिव्याधिचापल्यं दुःशङ्कातङ्कवर्जितम् ।
गुरुध्यानस्तुतिकथा-सेवनाभजनोत्सुकम् ॥
गुरुदैवतभक्तं च कामिनीपूजनोत्सुकम् ।
गुर्वाज्ञापालकं देवि गुरुकीर्त्तिप्रशंसकम् ॥
गुरुवाक्यप्रमाणज्ञं गुरुशुश्रूषणे रतम् ।
चित्तानुवर्त्तिनं प्रेक्ष्यकारिणं कुलनायिके ॥
लज्जाभिमानगर्वादिवर्जितं गुरुसन्निधौ ।
निरपेक्षं गुरुद्रव्ये तत्प्रसादाभिकाङ्क्षिणम् ॥
रूपध्यानादिनिरतं मोक्षमार्गाभिगामिनम् ।
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत् ॥

## कुशिष्यलक्षणम्

दुष्टान्ववायजं दुष्टं गुणहीनं विरूपिणम् ।
परशिष्यं च पाषण्डं धूर्त्तं पण्डितमानिनम् ॥
हीनाधिकविकाराङ्गं विकलावयवान्वितम् ।
पङ्गुमन्धं च बधिरं मलिनं व्याधिपीड़ितम् ।
उच्छिष्टं दुर्मुखं चापि स्वेच्छावेशधरं विटम् ॥
दुर्विदग्धं कुचेष्टं च कुटिलं भीमवीक्षणम् ।
निद्रालस्ययुतं तन्द्राद्यूतादिव्यसनान्वितम् ॥
कपाटकुड्यस्तम्भादौ तिरोहिततनुं सदा ।
शून्यमुक्तकरं क्षुद्रं श्रद्धाभक्तिविवर्जितम् ॥
किमेकवादिनं स्तब्धं दूषकं चपलं शठम् ।
धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम् ॥
रहस्यभेदकं चापि देवकार्यार्थघातकम् ।
मार्जारबकवृत्तिं च रन्ध्रान्वेषणतत्परम् ॥

मायान्वितं कृतघ्नं च प्रच्छन्नान्तरदायकम् ।
विश्वासघातकं देवद्रोहिणं पापकारिणम् ॥
अविश्वासमविद्याङ्गमनर्थसिद्धिकाङ्क्षिणम् ।
आततायिनमादित्सुं कुत्सितं कूटसाक्षिणम् ॥
सर्वत्र याचकं देवि सर्वाकृष्टाभिगामिनम् ।
असत्यनिष्ठं चासक्तं ग्राम्यादिबहुभाषिणम् ॥
दुर्विचारकुतर्कादिकारकं कलहप्रियम् ।
वृथाक्षेपकरं भ्रान्तं भ्रामकं वाग्विडम्बकम् ॥
परोक्षे दूषणकरं प्रत्यक्षे प्रियवादिनम् ।
वाग्रुक्षवादिनं विद्याचौरमात्मप्रशंसकम् ॥
गुणासहिष्णुं सद्भीतमतिक्रोधसमन्वितम् ।
चार्वाकं दुर्जनसखं सर्वलोकविगर्हितम् ॥
पिशुनं परसन्तापं सर्वप्राणिभयङ्करम् ।
अक्लेशवादिनं मित्रद्रोहिणं भ्रातृवञ्चकम् ॥
जिह्वोपस्थपरं देवि तस्करं पशुचेष्टितम् ।
अकारणद्वेषहास्यक्लेशक्रोधादिकारिणम् ॥
अतिहास्यस्य कर्त्तारं भ्रमान्तःपरिहासकम् ।
कामुकं चातिनिर्लज्जं मिथ्यादुश्चेष्टसूचकम् ॥
असूयामदमात्सर्य-दम्भाहङ्कारसंयुतम् ।
ईर्ष्यापैशुन्यपारूष्य-कार्पण्यक्रोधमानिनम् ॥
अधीरं दुःखितं द्वेष्यमशक्तं तत्त्ववर्जितम् ।
अप्रसिद्धमतिं मूढं चिन्ताकुलितमानसम् ॥
तृष्णालोभयुतं दीनमतुष्टं सर्वयाजकम् ।
बह्वाशिनं कपटिनं भ्रामकं कुटिलं प्रिये ॥
भक्तिश्रद्धादयाशान्ति-धर्माचारविवर्जितम् ।
मातापितृगुरुप्राज्ञमहतां हास्यकारकम् ॥
कुलद्रव्यादिबीभत्सं गुरुसेवाभिमानिनम् ।
स्त्रीदुष्टं समयभ्रष्टं गुरुशप्तं कुलेश्वरि ॥
इत्यादिविगुणोपेतं गुरुः शिष्यं परित्यजेत् ।
स्नेहाद्वा लोभतो वापि यदि गृह्णाति दीक्षयेत् ॥

तस्मिन् गुरौ सशिष्ये तु देवताशाप आपतेत् ।
तस्मादेवंविधं शिष्यं न गृह्णीयात् कथञ्चन ।
यदि गृह्णाति मोहेन तत्पापैर्वाप्यते गुरुः ॥
मन्त्रिपापञ्च राजानं पतिं जायाकृतं यथा ।
तथा शिष्यकृतं पापं प्रायो गुरुमपि स्पृशेत् ॥
ज्ञानेन क्रियया चापि गुरुः शिष्यं परीक्षयेत् ।
संवत्सरं तदर्धं वा तदर्द्धं वा तदर्द्धतः ।
उत्तमानधमे कार्ये नीचानुत्तमकर्मणि ॥
प्राणद्रव्यप्रदानाद्यैरादेशैश्च समासमैः ।
तन्मर्मसूचकैर्वाक्यैर्मायाभिः क्रूरचेष्टितैः ॥
पक्षपातैरुदासीनैरनेकैश्च मुहुर्मुहुः ॥
आक्रुष्टः पीड़ितश्चापि यो विषादं न याति च ।
गुरुः कृपां करोतीति मुदा संचिन्तयेत् सदा ॥
श्रीगुरुस्मरणे वापि कीर्त्तने चापि वन्दने ।
परिचर्यायामाह्वाने प्रेषणेऽन्वेषणे प्रिये ।
आनन्दकम्परोमाञ्च-स्वरनेत्रादिविक्रियाः ॥
येषां स्यात् तेऽत्र योग्याः स्युर्मन्त्रसिद्धिरपीश्वरि ।
बोधकत्वं च विज्ञाय शिष्यो भूयान्न चान्यथा ॥
आदिमध्यावसानेषु योग्याः शक्तिनिपातिनः ।
अधमा मध्यमाः श्रेष्ठाः शिष्या देवि प्रकीर्त्तिताः ॥
आदौ भक्तिर्भवेद् देवि दीक्षार्थं संवदन्ति ये ।
पुनर्विलुप्तभावास्ते आदियोग्या इतीरिताः ॥
दीक्षासमयसंप्राप्ता ज्ञानविज्ञानवर्जिताः ।
तस्मात् प्रध्वस्तवीर्या ये मध्ययोग्या इति स्मृताः ॥
आदौ भक्तिविहीना ये भक्तिर्मध्येऽस्ति नास्ति वा ।
अन्ते प्रभूतभक्तिः स्यादन्तयोग्या भवन्ति ते ॥

नारायणीये—कुर्वन्नाचार्यशुश्रूषां मनोवाक्कायकर्मभिः ।
शुद्धभावो महोत्साहो बोद्धा शिष्य इति स्मृतः ॥
समुपदेश्यः पुत्रश्च व्यत्ययी वसुदस्तथा ।

व्यत्ययी मन्त्रान्तरं दत्त्वा मन्त्रान्तरग्राहकः । उक्तं चान्यत्र—

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थी नोपपद्यत ॥ इति ।

प्रपञ्चसारे—नित्यशः कायवाक्चित्तैस्त्रिद्वैयकाब्दाधिकावधि ।
शुश्रूषुः स परिग्राह्यः स्यात् सुसंयतमानसः ॥

मन्त्रमुक्तावल्यां—तयोर्वत्सरमात्रेण ज्ञानान्योन्यं भविष्यति ।
गुरुता शिष्यता वापि नान्यथेति विनिश्चयः ।
शिष्यश्च सद्गुरोर्मन्त्रं गृहीत्वाऽन्तं परित्यजेत् ।
गुरुत्यागकरः शिष्यः प्रायश्चित्ती भवेद् ध्रुवम् ॥

इति लिङ्गागमवचनात् असद्गुरोर्मन्त्रलाभे च तत्परित्यागोऽपि शास्त्रार्थः ।
तदुक्तं तन्त्रान्तरे—यदि दैवात् पशोर्विद्या लभ्यते कुलजैर्नरैः ।
द्विजं तु कौलिकं प्राप्य पुनर्विद्यामुपालभेत् ॥ इति ।

देव्यागमे—यो गृह्णाति पशोर्दीक्षां तस्याधिर्गात्रपीडनम् ।
भवत्येव न सन्देहो बन्धनं चैव वा भवेत् ॥
वटपत्रे लिखित्वा तु तन्मन्त्रं स्रोतसि क्षिपेत् ।
सद्गुरुं वा समाश्रित्य गृह्णीयात् संस्कृतं मनुम् ॥

कुलार्णवे—श्रीगुरुं लक्षणोपेतं संशयच्छेदकारकम् ।
लब्ध्वा ज्ञानप्रदं देवि न गुर्वन्तरमाश्रयेत् ॥
अनभिज्ञं गुरुं प्राप्य संशयाच्छेदकारकम् ।
शिष्यो गुर्वन्तरं गत्वा तद्दोषैर्नानुलिप्यते ॥

शैवागमेऽपि—गुरवो वहवः सन्ति कुमन्त्रौषधवेदिनः ।
निगमागमशास्त्रोक्तमन्त्रज्ञो दुर्लभो भुवि ॥
सुविज्ञश्चोद्धरेन्मूर्खं न मूर्खो मूर्खमुद्धरेत् ।
शिलां संतारयेन्नौर्हि किं शिलां तारयेच्छिलाम् ॥
मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥

इति तन्त्रवचनानां परस्परविरोधे तु स्वगुरुप्रोक्तप्रकार एव ग्राह्यः । तदुक्तं तत्रैव—
पन्थानो वहवः प्रोक्ता मन्त्रशास्त्रे मनीषिभिः ।
स्वगुरोर्मतमाश्रित्य शुभं कार्यं न चान्यथा ॥

इति शिष्यलक्षणम्

## अथ दीक्षाविधिः

महाकपिलपञ्चरात्रे—

न मन्त्रे चाधिकारोऽस्ति शूद्राणां नियमः परः ।
मन्त्राभावादमन्त्रेण भाषितं सर्वकर्म हि ॥ इति ।

शातातपसंहितायाम्—

यावन्त्यर्णानि मन्त्राणां स्त्रीशूद्राय प्रदापयेत् ।
तावत्यो ब्रह्महत्याः स्युः स्वयमाह प्रजापतिः ॥

भविष्योत्तरे—ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये शुचयोऽमलाः ।
तेषां मन्त्राः प्रदेया वै न तु सङ्कीर्णवर्णिनाम् ॥

देवीयामले—स्वाहा प्रणवसंयुक्तं मन्त्रं शूद्रे ददद्द्विजः ।
शूद्रो निरयगामी स्याद् विप्रः शूद्रत्वमाप्नुयात् ॥

ब्रह्मपुराणे—वैदिको मिश्रितो वापि विप्रादीनां विधीयते ।
तान्त्रिको विप्रभक्तस्य शूद्रस्यापि प्रकीर्त्तितः ॥
स्वागमोक्तेन मार्गेण स्त्रीशूद्रैश्चापि पूजनम् ।
कर्त्तव्यं श्रद्धया विष्णोश्चिन्तयित्वा पतिं हृदि ॥
स्त्रीणामप्यधिकारोऽस्ति विष्णोराराधनादिषु ।
पतिप्रियरतानां च श्रुतिरेषा सनातनी ॥

भविष्योत्तरे—या स्त्री भर्तृवियुक्ता च शुभा स्वाचारसंयुता ।
सा च मन्त्रान् प्रगृह्णातु सभर्त्री तदनुज्ञया ॥
विना स्वधर्मं यत् किञ्चिद् देवताराधनादिकम् ।
परिभ्रश्येत तद् यस्मात् क्षणात् सैकतहर्म्यवत् ॥

कुलार्णवे—विधवायाः सुतादेशात् कन्यायाः पितुराज्ञया ।
स्त्रीशूद्राणामयं मन्त्रो नमोऽन्तश्च सुखावहः ॥
एतज् ज्ञात्वा महेशानि चाण्डालानपि दीक्षयेत् ।
न वैदिकं जपेच्छूद्रः स्त्रियश्चैव कदाचन ॥
नमोऽन्तं शैवमन्त्रं वा वैष्णवं चेष्यते बुधैः ॥

इति । याज्ञवल्क्यसंहिता-शारदायाम्—

एकाब्देन भवेद् योग्यो ब्राह्मणोऽब्दद्वयान् नृपः ।
वैश्यो वर्षैस्त्रिभिः शूद्रश्चतुर्भिर्वत्सरैर्गुरोः ॥

स शुश्रूषुः परिग्राह्यो दीक्षायागव्रतादिषु ।

तन्त्रराजे—एकद्वित्रिचतुःपञ्च-वर्षाण्यालोक्य योग्यताम् ।

भक्तियुक्तान् गुणांश्चापि क्रमाद् वर्णे च सङ्करे ॥

कुलार्णवे—ब्राह्मणः क्षत्रियो वैश्यः शूद्रो भवति वै मनुः ।

अनुलोमेन देयः स्यात् प्रतिलोमेन न क्वचित् ॥

वामकेश्वरे तु—ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः पौरस्त्यजातयः ।

इति पञ्चभेदा उक्ताः । सौत्रामणितन्त्रे—

मायाबीजं ब्राह्मणः स्याच्छ्रीबीजं क्षत्रियः स्मृतः ।

कामबीजं भवेद् वैश्यो वाग्भवं शूद्र ईरितः ॥

चतुर्बीजपरित्यक्तो मन्त्रः पौरस्त्यसंज्ञकः ।

चतुर्बीजं ब्राह्मणानां क्षत्रियाणां त्रिबीजकम् ॥

बीजद्वयं तु वैश्यानां शूद्राणां त्वेकबीजकम् ।

कुलमूलावतारे—श्रीदेव्युवाच—

शाक्त-शाम्भव-सौराणां गाणेशे वैष्णवेषु च ।

ब्रह्मक्षत्रादिवर्णानां संकराणां विशेषतः ॥

प्रवृत्तिं श्रोतुमिच्छामि साधकानां हिताय च ।

येषु येषु च ये मन्त्रास्तद्भेदं वद शंकर ॥

ईश्वर उवाच—

उमा महेश्वरश्चैव दक्षिणामूर्त्यघोरकम् ।

हयग्रीवं च वाराहमष्टाक्षरमतः परम् ॥

प्रणवाद्यं वासुदेवं लक्ष्मीनारायणं तथा ।

वर्णत्रये च दातव्यं नान्यवर्णे कदाचन ॥

पाशुपतं नारसिंहं तथा चैव सुदर्शनम् ।

वर्णद्वये च दातव्यं नान्ययोश्चैव कर्हिचित् ॥

अग्निमन्त्राश्च ये केचित् सूर्यमन्त्राश्च ये तथा ।

तारादिघृणिमन्त्राश्च दातव्याश्च त्रिवर्णके ॥

आनुष्टुभं शक्तिमन्त्रास्तथा विन्ध्यनिवासिनी ।

तथा नीलसरस्वती दातव्या चादिवर्णके ॥

मातङ्ग्युग्रतारा च कालिका श्यामला तथा ।

छिन्नमस्ता च बाला च दातव्या सर्ववर्णके ॥

ताराविस्तु गणेशश्च हरिद्रासंज्ञकस्तथा ।
त्रिवर्णेष्वेव दातव्यः पुरन्ध्रीणां विशेषतः ॥
प्रणवं मायां लक्ष्मीं च वाग्भवं चान्यबीजकम् ।
एतद् बीजेन संयुक्तं दातव्यं चादिवर्णके ॥
मायां लक्ष्मीं वाग्भवं च दातव्यं क्षत्रियेष्वपि ।
लक्ष्मीं च वाग्भवं चापि कथितं वैश्यवर्णके ॥
वाग्भवं चान्यबीजं च शूद्राणां च समीरितम् ।
हृदादि हूं फट्कारादि संकराणां प्रशस्यते ॥

भूतडामरे—कलौ ये सिद्धिदा मन्त्रास्तानथो ब्रूमहे वयम् ।
नृसिंहस्त्र्यक्षरः कूटस्तथानुष्टुब् नृकेशरी ॥
हयग्रीवस्तथा कूटस्तथानुष्टुब् हयाननः ।
कूटश्चिन्तामणिः कूटः क्षेत्रपालश्च भैरवः ॥
त्रिजटैकजटा काली नीलपूर्वा सरस्वती ।
शवरी त्रिपुरा रामा ब्रह्मतारा पिशाचिनी ॥
मातङ्गी धनदा श्यामा महोग्रा कालसुन्दरी ।
उग्रतारा यक्षराजो यक्षिण्यश्चेटिकास्तथा ॥
कलौ कल्पद्रुमैस्तुल्या दृष्टादृष्टफलप्रदाः ।
इमे ते मनवः प्रोक्ताः सर्वतन्त्रेषु गोपिताः ॥

## अथ दीक्षाकालः

तत्रादौ मासाः । श्रीकण्ठसंहितायाम्—

शरत्काले च वैशाखे दीक्षा श्रेष्ठफलप्रदा ।
मार्गफाल्गुनके श्रेष्ठा ज्यैष्ठे चैव तु साऽधमा ॥
माघे मासि तु शुभदा दुष्टा चाषाढमासके ।
आनन्दा श्रावणे मासि पौषे भाद्रे च निन्दिता ॥

आगमकल्पद्रुमे—चैत्रे दुःखाय दीक्षा स्याद् वैशाखे रत्नसञ्चयः ।
मरणं भवति ज्यैष्ठे चाषाढे बन्धुनाशनम् ॥
समृद्धिः श्रावणे नूनं भवेद् भाद्रपदे क्षयः ।
प्रजानाशोऽप्याश्विने तु भवेच्चाशुभमेव च ॥
ज्ञानं स्यात् कार्त्तिके सौख्यं मार्गशीर्षे भवेत् किल ।
पौषे ज्ञानक्षयो माघे भवेन्मेधाविवर्धनम् ॥

फाल्गुने सर्वसिद्धिः स्यान्मलमासं विवर्जयेत् ।

आषाढः क्वचित् समीचीनतयाऽप्युक्तः। यथा—

वैशाखपूर्वजे मासि मन्त्रारम्भः सुदुःसहः ।
वैशाखे धनदायी च ज्यैष्ठे मृत्युप्रदो भवेत् ॥
आषाढ़े पुत्रलाभाय श्रावणे शुभदो मतः ।
भाद्रे चैव ज्ञानहानिस्तथा सद्भिः प्रकीर्त्तिता ॥
आश्विने सर्वसिद्धिश्च कार्त्तिके ज्ञानसिद्धिदः ।
शुभकृन्मार्गशीर्षः स्यात् पौषे दुःखविधायकः ॥
माघे मेधाविवृद्धिश्च फाल्गुने सर्ववश्यता ॥ इति ।

सिद्धान्तशेखरे—शरत्काले च वैशाखे दीक्षा श्रेष्ठफलप्रदा ।
फाल्गुने मार्गशीर्षे च ज्यैष्ठे दीक्षा तु मध्यमा ॥
आषाढ़े श्रावणे माघे कनिष्ठा सद्भिरीरिता ।
निन्दितश्चैत्रमासस्तु पौषो भाद्रपदस्तथा ॥
निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा ।

गौतमीयतन्त्रे—मन्त्रारम्भस्तु चैत्रे स्यात् समस्तपुरुषार्थदः ॥
वैशाखे रत्नलाभः स्याज् ज्यैष्ठे तु मरणं ध्रुवम् ।
आषाढ़े बन्धुनाशः स्यात् पूर्णायुः श्रावणे भवेत् ॥
प्रजानाशो भवेद् भाद्रे आश्विने रत्नसञ्चयः ।
कार्त्तिके मन्त्रसिद्धिः स्यान्मार्गशीर्षे तथा भवेत् ॥
पौषे तु शत्रुपीड़ा स्यान्माघे मेधाविवर्धनम् ।
फाल्गुने सर्वकामाः स्युर्मलमासं विवर्जयेत् ॥

अत्र चैत्रविधिर्गोपालमन्त्रदीक्षापरः। कालोत्तरे—

शरद्वसन्तयोर्योगो दीक्षाकर्मविधौ स्मृतः ।
तयोरसम्भवे वर्षां विनाऽन्यत्र प्रशस्यते ।

क्रियाकाण्डशेखरे—

न विना पर्व दीक्षा स्याद् वर्षासु मधुपौषयोः ।

कारणे—आषाढ़पूर्वमासे च आषाढ़े मार्गशीर्षके ॥
दीक्षां न कारयेद् विद्वानन्यमासे तु कारयेत् ।

इति मासनिर्णयः

## अथ पक्षनिर्णयः

अगस्त्यसंहितायाम्—

शुक्लपक्षेऽथ कृष्णे वा दीक्षा सर्वशुभावहा ।

कालोत्तरे तु—मुक्तिकामैः कृष्णपक्षे भूतिकामैः सिते सदा ।

इत्युक्तम् । गौतमीयतन्त्रे—

शुक्लपक्षे शुभा दीक्षा कृष्णेऽप्यापञ्चमीदिनम् ।

तन्त्रान्तरे—शुक्ले वाञ्छितसिद्धिः स्यात् कृष्णे चैवाऽशुभप्रदा ।

तथा—कृष्णपक्षस्य शुक्लत्वं यावत् कृष्णाष्टमीदिनम् ।

## अथ तिथिनिर्णयः

तन्त्रे—प्रतिपदि द्वितीयायां तृतीयायां शुचिर्भवेत् ।

चतुर्थ्यां वित्तनाशः स्यात् पञ्चम्यां बुद्धिवर्धनम् ॥

षष्ठ्यां ज्ञानक्षयः सौख्यं लभते सप्तमीदिने ।

अष्टम्यां बुद्धिनाशः स्यान्नवम्यां वपुषः क्षयः ॥

दशम्यां राजसौभाग्यमेकादश्यां शुचिर्भवेत् ।

द्वादश्यां सर्वसिद्धिः स्यात् त्रयोदश्यां दरिद्रता ॥

तिर्यग्योनिश्चतुर्दश्यां हानिर्मासावसानके ।

वैष्णवे—पक्षान्ते धर्मवृद्धिः स्यादस्वाध्यायं विवर्जयेत् ।

सन्ध्यागर्जितनिर्घोष-भूकम्पोल्कानिपातनम् ॥

एतानन्यांश्च दिवसान् श्रुत्युक्तानपि वर्जयेत् ।

सारसंग्रहे—पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ।

त्रयोदशी च दशमी प्रशस्ता सर्वकर्मसु ॥

विजयमालिनीतन्त्रे—

पञ्चम्येकादशी शुक्ला सप्तमी च त्रयोदशी ।

दशमी शुक्लपक्षस्य द्वादशी च विशेषतः ॥

मन्त्रसारसंग्रहे—तृतीया पञ्चमी वापि षष्ठी वापि विशेषतः ।

द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वा ॥

रुद्रयामले—कृष्णाष्टम्यां चतुर्दश्यां दीक्षाकर्म शुभप्रदम् ।

रत्नावल्याम्—चतुर्थीं नवमीं षष्ठीमष्टमीं च चतुर्दशीम् ।

पौर्णमासीं विना शेषा हिता उक्ता मुमुक्षुषु ॥

तत्त्वसारसंहितायाम्—

तां तां तिथिं समालोच्य तद्भक्तांस्तत्र दीक्षयेत् ।

तथा—ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः ।

चतुर्दशी शिवस्योक्ता वाचः प्रोक्ता त्रयोदशी ॥

द्वितीया च श्रियः प्रोक्ता पार्वत्याश्च तृतीयिका ।

चतुर्थी गणनाथस्य भानोः प्रोक्ता तु सप्तमी ॥

नित्यामार्गेषु पार्वत्या अष्टमी च चतुर्दशी ।

नारदपञ्चरात्रे—द्वादश्यां शुक्लपक्षस्य सूर्यसंक्रमणे तथा ।

गौतमीयतन्त्रे—द्वादश्यां सर्वथा कार्या चामलायां शुभेऽहनि ।

कृष्णप्रिया द्वादशी सा कृष्णदीक्षाप्रवर्त्तिनी ॥

कालोत्तरे—दिनच्छिद्राणि मुक्त्वा च याश्च स्युस्त्रिदिनस्पृशः ।

तन्त्रान्तरे—अमावास्या सोमवारे भौमवारे चतुर्दशी ।

सप्तमी रविवारे च सूर्यपर्वशतैः समा ॥

## अथ वारनिर्णयः

गौतमीयतन्त्रे—रवौ गुरौ सिते सोमे कर्त्तव्यं बुधशुक्रयोः ।

सिते शुक्लपक्षे सोमवारः प्रशस्तः । कृष्णपक्षे तु निषिद्धः । तदुक्तम्

मन्त्रसद्भावे—मन्त्रारम्भो रवौ शुक्रे बुधे जीवे विशेषतः ।

शनौ मृत्युः क्षयो भौमे सोमे सर्वं च निष्फलम् ॥

रत्नावल्याम्—आदित्यं मङ्गलं सौरिं त्यक्त्वा वारांस्तु भूतये ।

## अथ नक्षत्रनिर्णयः

गौतमीयतन्त्रे—उत्तरात्रयरोहिण्यो रेवती पुष्यवासवम् ।

धनिष्ठा वायुमित्राश्विपित्र्यं त्वाष्ट्रं च नैर्ऋतम् ॥

ऐशवैष्णवहस्ताश्च दीक्षायान्तु शुभावहाः ।

वासवं ज्येष्ठा। वायुः स्वातिः । मित्रमनुराधा । पित्र्यं मघा । त्वाष्ट्रं चित्रा । नैर्ऋतं मूलम् । ऐशमार्द्रा । वैष्णवं श्रवणम् । अगस्त्यसंहितायाम्—

अश्विनी-रोहिणी-स्वाति-विशाखाहस्तभेषु च ।

ज्येष्ठोत्तरात्रयेष्वेवं कुर्यान्मन्त्राभिषेचनम् ॥

रत्नावल्यां—त्रीण्युत्तराणि रोहिण्यः पुष्यकं मृगशीर्षकम् ।

हस्ता स्वातिरनुराधा मघामूलं च रेवती ॥

अभिजिच्छ्रवणं चेति दीक्षानक्षत्रमुत्तमम् ।

कारणे—पौष्णं रोहिण्यथादित्यं श्रवणं चाश्विनी तथा ।

सावित्रं त्वाष्ट्रवायव्यमैन्द्रं नैर्ऋतमेव च ॥

तिष्यं त्रिरुत्तरार्द्रा च सौम्यं शिष्यत्रिजन्मभम् ।

नक्षत्राणि प्रशस्तानि दीक्षाकर्मणि सुव्रते ॥

पौष्णं रेवती । आदित्यं पुनर्वसुः । सावित्रं हस्ता । सौम्यं मृगः ।

नीलतन्त्रे—रोहिणी श्रवणार्द्रा च धनिष्ठा चोत्तरात्रयम् ।

पुष्यः शतभिषक् चैव दीक्षानक्षत्रमुच्यते ॥

तन्त्रे—तृतीये सप्तमे चैव षोड़शाष्टादशे तथा ।

ऊनविंशैकविंशे च त्रयोविंशे तथैव च ॥

पञ्चविंशतिनक्षत्रे शुभकर्माणि वर्जयेत् ।

शैवागमे—अधोमुखे शुभे भे च चन्द्रशुद्धौ विशेषतः ।

कृष्णे ताराबलं कुर्याद् स्वनामादिविचिन्तनम् ॥

रत्नावल्यां—प्रतिपत् पूर्वाषाढ़ा च पञ्चमी कृत्तिका तथा ।

पूर्वभाद्रपदा षष्ठी दशमी रोहिणी तथा ॥

द्वादश्यां सार्पनक्षत्रमर्यम्णा च त्रयोदशी ।

नक्षत्रलुप्ता इत्येते देवानामपि नाशकाः ॥

## अथ योगनिर्णयः

रत्नावल्यां—योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः शुभः ।

सुकर्मा च धृतिर्बुद्धिर्ध्रुवः सिद्धिश्च हर्षणः ॥

वरीयांश्च शिवः सिद्धो ब्रह्मा इन्द्रश्च षोड़श ।

गौतमीयतन्त्रे—शुभयोगेषु सर्वेषु दीक्षा सर्वशुभप्रदा ।

## अथ करणनिर्णयः

गौतमीयतन्त्रे—शुभानि करणान्याहुर्दीक्षायाश्च विशेषतः ।

शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत् ॥

## अथ लग्ननिर्णयः

सारसंग्रहे—मन्त्राद्यारम्भणं मेषे धनधान्यप्रदं भवेत् ।

वृषे मरणमाप्नोति मिथुनेऽपत्यनाशनम् ॥

कर्कटे सर्वसिद्धिः स्यात् सिंहे मेधाविनाशनम् ।
कन्या लक्ष्मीप्रदा नित्यं तुलायां सर्वसिद्धयः ॥
वृश्चिके सर्वसिद्धिः स्याद् धनुर्ज्ञानविनाशनम् ।
मकरः पुत्रदः प्रोक्तः कुम्भो धनसमृद्धिदः ॥
मीनो दुःखप्रदो नित्यमेवं राशिफलं प्रिये ।

शैवागमे—धर्मदः प्रातःकालः स्यात् संगवो राज्यदायकः ।
मध्याह्ने सर्वसिद्धिः स्यात् सायाह्ने मध्यमो भवेत् ॥
रजनी मन्त्रदाने तु निषिद्धा देशिकोत्तमैः ॥

गौतमीयतन्त्रे—चरः सर्वैर्विवर्ज्यः स्यात् स्थिरराशिषु सौख्यदा ।
स्थिरलग्नं विष्णुमन्त्रे शिवमन्त्रे चरं शुभम् ॥
द्विस्वभावगतं लग्नं शक्तिमन्त्रे प्रशस्यते ।
त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ॥
दीक्षायान्तु शुभाः सर्वे रन्ध्रस्थाः सर्वनाशकाः ।

तन्त्र—तृतीयैकादश-षष्ठ-दशमस्थः शुभः शशी ।
जन्मचन्द्रः शुभः प्रोक्तो जन्मनक्षत्रवर्जितः ॥
शुक्लपक्षे द्वितीयस्तु पञ्चमो नवमस्तथा ।
गोचरे ये ग्रहाः शुद्धास्तैर्युक्तोऽपि शुभः शशी ॥
शुभमध्यस्थितो वापि चन्द्रमा शुभदो भवेत् ।

गौतमीयतन्त्रे—पञ्चाङ्गशुद्धे दिवसे स्वोदये चन्द्रसूर्ययोः ।
गुरुशुक्रोदये चैव शस्यते मन्त्रसत्क्रिया ॥

वाराहीतन्त्रे—शुक्रोऽस्तो यदि वा वृद्धो गुर्वादित्यो भवेद् यदि ।
मेषवृश्चिकसिंहेषु तदा दीक्षा न विद्यते ॥

तथा—शिष्यत्रिजन्मनक्षत्रे संक्रान्तौ विषुवेऽयने ।
अन्येषु पुण्ययोगेषु ग्रहणे चन्द्रसूर्ययोः ॥
पञ्चपर्वयुगाद्यासु व्यतिपातादिवासरे ।
अत्र दीक्षा शुभा प्रोक्ता नात्र कार्या विचारणा ॥

योगिनीतन्त्रे—यन्मासतिथिवारादिशोधनं प्रोक्तमेव हि ।
मन्त्रदीक्षापरं तत्तु विज्ञेयं साधकोत्तमैः ॥
विद्यादीक्षापरं नैव तिथिवारादिशोधनम् ।
यदैवेच्छा तथा दीक्षा गुरोराज्ञानुसारतः ॥

अथापवादः क्रियाकाण्डशेखरे—

मौमुक्षवीं प्रत्यथ न कालादिनियमः स्मृतः ।
निन्द्यानि तानि सर्वाणि प्रशस्तानि विमुक्तये ॥

तन्त्रे—शशिदिवाकरयोर्ग्रहणे जन्मनि शिष्यस्य मकरसंक्रान्तौ ।
करुणासमये च गुरोर्नक्षत्रादीष्यते न दीक्षायाम् ॥

रुद्रयामले—सत्तीर्थेऽर्कविधुग्रासे तं तु दामनपर्वणोः ।
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत् ॥

योगिनीतन्त्रे—रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा ।
तत्र लग्नादिकं किञ्चिन्न विचार्यं कदाचन ॥
महाष्टम्यां विशेषेण धनकामार्थसिद्धये ।

अगस्त्यसंहितायाम्—

सूर्यग्रहणकाले तु नान्यदन्वेषितं भवेत् ।
सूर्यग्रहणकालेन समोऽन्यो नास्ति कश्चन ॥
तत्र यद् यत् कृतं सर्वमनन्तफलदं भवेत् ।
न मास-तिथि-वारादि-शोधनं सूर्यपर्वणि ॥
ददातीष्टं गृहीतं यत् तस्मिन् काले गुरोर्नृषु ।
सिद्धिर्भवति मन्त्रस्य विनायासेन वै ततः ॥
कर्त्तव्यं सर्वयत्नेन मन्त्रसिद्धिमभीप्सुभिः ।

शक्तियामले—चन्द्रग्रहसहस्रेण सूर्यग्रहसमो भवेत् ।
ततो लक्षगुणं प्रोक्तं ग्रहणं निजवासरे ॥

तन्त्रान्तरे तु—तत्र सूर्यग्रहः शस्तो न तु चन्द्रग्रहः क्वचित् । इत्युक्तम् ।

विष्णुयामले—देवीबोधं समारभ्य यावत् स्यान्नवमीतिथिः ।
कृता तासु बुधैर्दीक्षा सर्वाभीष्टफलप्रदा ॥

तथा—बोधने चैव दुर्गायाः कालाकालं न शोधयेत् ।
अशोकाख्याष्टमी यत्र रामाख्या नवमी तथा ॥

समयातन्त्रे—युगाद्यायां जन्मदिने विवाहदिवसे तथा ।
विषुवायनयोर्द्वन्द्वे नैव किञ्चिद् विचारयेत् ॥

अन्यत्रापि—अयने विषुवे चैव युगाद्यासु तथैव च ।
ग्रहणे च महातीर्थे न कालस्य विचारणाम् ॥
तुलसीनिकटे बिल्वमूले धात्रीतले तथा ।

अनादिदेवसान्निध्ये महाक्षेत्रे गवां गृहे ॥
देवीपूजादिने वापि नास्ति कालस्य निर्णयः ।

योगिनीतन्त्रे—चन्द्रग्रहे च या दीक्षा या दीक्षा वनचारिणाम् ।
जनकस्य तु या दीक्षा दारिद्र्यं सप्तजन्मसु ॥

रुद्रयामले तु—न कुर्याच्छाक्तिकीं दीक्षामुपरक्ते विभावसौ ।
न कुर्याद् वैष्णवीं दीक्षां तथा चन्द्रमसो ग्रहे ॥ इत्युक्तम् ।

मुण्डमालायाम्—काली तारा महाविद्या षोड़शी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥
वगला सिद्धविद्या च मातङ्गी कमलात्मिका ।
एता एव महेशानि महाविद्या प्रकीर्त्तिताः ॥
नात्र सिद्धाद्यपेक्षाऽस्ति नक्षत्रादिविचारणा ।
कालादिशोधनं नास्ति साध्यादिदूषणं नहि ॥

तत्त्वसागरसंहितायाम्—
तिथिं विनापि दीक्षाया विशिष्टावसरं शृणु ।
दुर्लभे सद्गुरूणान्तु सकृत् सङ्ग उपस्थिते ॥
तदनुज्ञा यदा लब्धा स दीक्षावसरो महान् ।
ग्रामे वा यदि वाऽरण्ये क्षेत्रे वा दिवसे निशि ॥
आगच्छति गुरुर्दैवाद् यदा दीक्षा तदा भवेत् ।

तथा—यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ।
न तिथिर्न व्रतं होमो न स्नानं न जपः क्रिया ॥
दीक्षायाः कारणं किन्तु स्वेच्छावाप्ते तु सद्गुरौ ।

तारामन्त्रे तु विशेषो महोग्रताराकल्पे—
कृष्णपक्षस्य चाष्टम्यां शुभे लग्ने शुभे क्षणे ।
पूर्वभाद्रपदे शुक्रे मित्रतारासुसंयुते ॥
अथवा चानुराधायां रेवत्यां तु प्रशस्यते ।
जानीयाच्छोभनं कालं मन्त्रस्य ग्रहणं प्रति ॥
इषे चैव विशेषेण कार्त्तिके च विशेषतः ।
महाचीनक्रमेणैव न दोषो नीलशारदे ॥

वीरचूड़ामणौ—न सिद्धादिर्न तारा च न राशिचक्रशोधनम् ।
न ऋणं न धनं चक्रं न मासनियमस्तथा ॥

न पक्षतिथिनक्षत्रं त्याज्यौ वारौ कुजार्कजौ ।

इति कालनिर्णयः

## अथ देशः

यामले—पुण्यतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये ।
प्रयागे श्रीगिरौ काश्यां कालाकालं न शोधयेत् ॥

योगिनीतन्त्रे—गयायां भास्करक्षेत्रे विरजे चन्द्रपर्वते ।
चत्वरे च मतङ्गे च तथा कन्याश्रमेषु च ॥
न गृह्णीयात् ततो दीक्षां तीर्थेष्वेतेषु पार्वति ।

## अथ दीक्षामाहात्म्यम्

वाराहीतन्त्रे—अदीक्षिते च मरणं रौरवान्न निवर्त्तते ।
तस्माद् दीक्षां प्रकुर्वीत तन्त्रमाश्रित्य तान्त्रिकाः ॥

मृडानीतन्त्रे—मायया मोहितो यस्तु किल्विषैः परिवेष्टितः ।
स दीक्षामवमन्येत नारकी भविता हि सः ॥

अन्यत्रापि—दीक्षाहीनकृतं कर्म हुतं भस्मनि तुलवत् ।
अनीश्वरस्य मर्त्यस्य नास्ति त्राता यथा भुवि ॥
तथा दीक्षाविहीनस्य नेह स्वामी परत्र च ।

महाहारके तन्त्रे—अथ दीक्षाविहीनो यो वर्त्तते भुवि पापभुक् ।
मोहान्धकारे नरके गर्त्ते पतति दुःखितः ॥
दीक्षाहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ।
यद्न्यत् कुरुते मोहान्न तस्य फलभाग् भवेत् ॥

रुद्रयामले—अदीक्षितेन वामोरू कृतं सर्वमनर्थकम् ।
पशुयोनिमवाप्नोति दीक्षाहीनोऽशुचिर्नरः ॥

वाराहीतन्त्रे—दीक्षामूलं जगत्सर्वं दीक्षा हि परमं तपः ।
दीक्षामाश्रित्य निवसेद् यत्र कुत्राश्रमे नरः ॥
कोटिजन्मनि यत्पापं ज्ञानाज्ञानकृतं च यत् ।
दीक्षाग्रहणमात्रेण सर्वपापैः प्रमुच्यते ॥
ततो वाञ्छितसिद्धिः स्याद् धनधान्यसमृद्धिदा ।
अन्ते देवालयं याति दीव्यभोगसमन्वितः ॥

महाहारके तन्त्रे—दीयते ज्ञानमत्यन्तं क्षीयते पापसञ्चयः ।
तस्माद् दीक्षेति संप्रोक्ता वाञ्छितार्थप्रसाधिनी ॥

ज्ञानं दीव्यं यतो दद्यात् कुर्यात् पापक्षयं नृणाम् ।
तेन दीक्षेति लोकेऽस्मिन् कीर्त्तिता तन्त्रपारगैः ॥
ब्रह्महत्या-सुरापान-स्वर्णस्तेयादि-पातकान् ।
उपपातकलक्षाणि हन्ति दीक्षाश्रयान्नरः ॥
दीक्षितो ब्राह्मणो याति ब्रह्मलोकमनामयम् ।
इन्द्रलोकं क्षत्रियोऽपि प्राजापत्यं तथा विशः ॥
याति गन्धर्वनगरं शूद्रो दीक्षाप्रभावतः ।
चतुर्णामेव वर्णानामतो दीक्षा प्रशस्यते ॥

वैशम्पायनसंहितायाम्—

मनसा कर्मणा वाचा यत् पापं समुपार्जितम् ।
तेषां विश्लेषकरणी परमज्ञानदा यतः ॥
तस्माद् दीक्षेति लोकेऽस्मिन् गीयते शास्त्रवेदकैः ।

तन्त्रान्तरे—पुस्तके लिखितो मन्त्रो येन सुन्दरि जप्यते ।
न तस्य जायते सिद्धिर्हानिरेव पदे पदे ॥

तन्त्रराजे—आचार्यादनभिप्राप्तः प्राप्तश्चादत्तदक्षिणः ।
सततं जप्यमानोऽपि मन्त्रः सिद्धिं न गच्छति ॥
द्विजानामनुपनीतानां स्वकर्माध्ययनादिषु ।
यथाऽधिकारो नास्तीह स्याच्चोपनयनादिषु ॥
तथात्राऽदीक्षितानाञ्च मन्त्रदेवार्चनादिषु ।
नाधिकारोऽस्त्यतः कुर्यादात्मानं शिवसंस्कृतम् ॥

तन्त्रान्तरे—यदृच्छया श्रुतं वापि प्रच्छन्नेन छलेन वा ।
पत्रेक्षितं च गाथावत् प्रजप्तमपि निष्फलम् ॥

प्रयोगसारे—स्नेहाद्वा लोभतो वापि यदि गृह्णात्यदीक्षितः ।
तस्मिन् गुरौ सशिष्ये तु देवताशाप आपतेत् ॥

अन्यत्रापि—गुरुमुख्याः क्रियाः सर्वा भुक्तिमुक्तिफलप्रदाः ।
तस्मात् साध्यो गुरुर्नित्यमत्यर्थं तु समाहितः ॥
गुर्वनुक्ताः क्रियाः सर्वा निष्फला स्युर्यतो ध्रुवम् ।

प्रपञ्चे—कृते श्रुत्युक्तमार्गस्तु त्रेतायां स्मृतिसम्भवः ।
द्वापरे स्यात् पुराणोक्तः कलावागमसम्भवः ॥
अशुद्धाः शूद्रकल्पा हि ब्राह्मणाः कलिसम्भवाः ।

तेषामागममार्गे स्यात् सिद्धिर्न श्रौतवर्त्मना ॥
तस्मादावश्यकी दीक्षा पूर्वोक्तानेकवाक्यतः ।
सम्यग् विचार्य सा ग्राह्या राशिचक्रादिभेदतः ।
कुलार्णवे—अदीक्षिता ये कुर्वन्ति जपहोमादिकाः क्रियाः ।
न फलन्ति प्रिये तेषां शिलायामुप्तबीजवत् ॥

## अथ दीक्षोपयुक्तमण्डपार्थं भूमिपरीक्षा

यामले—प्लवस्थानं च गम्भीरं दीर्घतोयाशयाश्रयः ।
अग्निशालाऽऽग्निहोतॄणां पुण्यस्थानं परिश्रुतम् ॥
द्विजानां सव्रतानां वा आश्रयः स्वाश्रमोऽथवा ।
दीक्षायामतिशस्तानि स्थानान्येतानि पार्वति ॥
न च दीक्षां प्रकुर्वीत निकुञ्जे गहने वने ।
द्विसीम्नि च महारण्ये मात्सर्यमृगसेविते ॥
तन्त्रान्तरे—महानदीनां तीराणि गङ्गासागरसङ्गमः ।
प्रशस्तानि च तीर्थानि क्षेत्राणि चाश्रमा अपि ॥
अरण्यानि च सर्वाणि पर्वताः सकला अपि ।
सनिर्झरोऽप्युपगिरि-देवतायतनान्यपि ॥
महाकपिलपञ्चरात्रे—
तत्र भूमिं परीक्षेत वास्तुज्ञानविशारदः ।
स्फुटिता च सशल्या च वल्मीका रोहिणी तथा ॥
दूरतः परिवर्ज्या भूः कर्त्तुरायुर्धनापहा ।
स्फुटिता मरणं कुर्यादूषरा धननाशिनी ॥
सशल्या क्लेशदा नित्यं विषमा शत्रुतो भयम् ।
ईशकोणप्लवा सा च कर्त्तुः श्रीदा सुनिश्चितम् ॥
अग्निकोणप्लवा या च पुत्रायुर्धननाशिनी ।
दक्षिणप्लवा या भूमिर्नित्यं मृत्यु-भयप्रदा ॥
गृहक्षयकरी सा च भूमिर्या नैर्ऋतप्लवा ।
धनहानिकरी पृथ्वी कीर्त्तिता वरुणप्लवा ॥
वातप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी ।
पूर्वप्लवा वृद्धिकरी वरदा तूत्तरप्लवा ॥

गौतमीयतन्त्रे—भूमेः परिग्रहं कुर्याद् यावदायतनं भवेत् ।
शुक्लमृत्स्ना च या भूमिर्ब्राह्मी सा परिकीर्त्तिता ॥
क्षत्रिया रक्तमृत्स्ना च हरिद् वैश्या प्रकीर्त्तिता ।
कृष्णा भूमिर्भवेच्छूद्रा चतुर्धा परिकीर्त्तिता ॥

महाकपिलपञ्चरात्रे—
ब्राह्मणी भूः कुशोपेता क्षत्रियः स्याच्छराकुला ।
कुशकाशाकुला वैश्या शूद्रा सर्वतृणाकुला ॥

गौतमीयतन्त्रे—ब्राह्मी सर्वार्थसिद्ध्यै स्यात् क्षत्रिया राज्यदा तथा ।
धनधान्यकरी वैश्या शूद्रा तु निन्दिता मुने ॥

प्रयोगसारे—वितस्तिमात्रविस्तारं निर्माय विवरं भुवि ।
निक्षिपेत् ता मृदस्तस्मिन् तासु शिष्टासु शोभनम् ॥
समासु मध्यमं विद्यान् न्यूनास्वधममुच्यते ।

गौतमीयतन्त्रे—ततो भूमिं परीक्षेत वास्तुज्ञानविशारदः ।
शल्यादिशोधनं कुर्यात् तुषाङ्गारादि दूरयेत् ॥
एतस्याकरणे मन्त्री न किञ्चित् फलमाप्नुयात् ।

महाकपिलपञ्चरात्रे—
खन्यमाने जलं यावत् शल्यदोषो विनश्यति ।
दूरनीचस्थितं वारि खनितुं नैव शक्यते ॥
पञ्चहस्तं प्रखातव्यं शल्यदोषोपशान्तये ।
शल्योद्धारं ततः कृत्वा पूरयेत् सुसमं यथा ।
तस्यां भूमौ वास्तुयागं कृत्वा मण्डपमाचरेत् ॥

## अथ वास्तुयागक्रमः

गृहादिकरणे यत्र नार्चितो वास्तुदैवतः ।
तत्र शून्यं भवेत् सर्वं रक्षोविघ्नादिभिर्हतम् ॥
तस्माद् वास्त्वर्चनं सम्यक् कार्यं सम्पदभीप्सुभिः ।

महाकपिलपञ्चरात्रे—
भूमेः परिग्रहे पूर्वं शिलानां स्थापने तथा ।
जलाधारगृहार्थं च यजेद् वास्तुं विशेषतः ॥
अपरेष्वपि कार्येषु यागहोमादिकेषु च ।
वास्तुमण्डलकं कुर्यात् सूत्रयित्वा समं गुरुः ॥

शारदायां—राक्षसं वास्तुनामानं हत्वाऽधिष्ठाय तत्तनुम् ।
स्थितास्त्रिपञ्चाशद् देवास्तेभ्यः पूर्वं बलिं हरेत् ॥

सोमशम्भुः—आकुञ्चितकरं वास्तुमुत्तानमसुराकृतिम् ।
स्मरेत् पूजासु कुड्यादिनिवेशे त्वधराननम् ॥
जानुनी कूर्परासक्ते दिशि वातहुताशयोः ।
पैत्र्यां पादपुटौ रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः ॥

गौतमीयतन्त्रे—विप्राशीषा वेदघोषैर्मङ्गलाचारपूर्वकम् ।
वास्तोर्मण्डलकं कुर्याद् यथाशोभं यथाविधि ॥

शारदायाम्—पूर्वापरायतं सूत्रं विन्यसेद् हस्तमानतः ।
तन्मध्ये किञ्चिदालम्ब्य मत्स्यौ द्वौ परितो लिखेत् ॥
तयोर्मध्ये स्थितं सूत्रं विन्यसेद् दक्षिणोत्तरम् ।
द्वाभ्यां द्वाभ्यां तथाऽग्राभ्यां कोणेषु मकरान् लिखेत् ॥
मत्स्यमध्ये स्थिताग्राणि तत्र सूत्राणि पातयेत् ।
चतुरस्रं भवेत् तत्र चतुःकोष्ठसमन्वितम् ॥
तत्पुनर्विभजेन्मन्त्री चतुःषष्टिपदं यथा ।
ईशानाद्राक्षसं यावद् यावदग्नेः प्रभञ्जनम् ॥
एवं सूत्रद्वयं दद्यात् कर्णसूत्रं समाहितः ॥
ब्रह्माणं पूजयेदादौ मध्ये कोष्ठचतुष्टये ।
दिक्चतुष्के च पूर्वादि यजेदार्यमनन्तरम् ॥
विवस्वन्तं ततो मित्रं महीधरमनन्तरम् ।
कोणार्द्धकोष्ठद्वन्द्वेषु वह्न्यादि परितः पुनः ॥
सावित्रं सवितारं च शक्रमिन्द्रजयं पुनः ।
रुद्रं रुद्रजयं विद्वानापञ्चाप्यापवत्सकम् ॥
तत्कर्णसूत्रोभयतः कोष्ठद्वन्द्वेषु देशिकः ।
शर्वं गुहं चार्यमणं जृम्भकं पिलपिच्छिकाम् ॥
चरकीं च विदारीं च पूतनामर्चयेत् क्रमात् ।
अर्चयेद् दिक्षु पूर्वादि सार्द्धाद्यन्तपदेष्विमान् ॥
अष्टावष्टविभागेन देवता देशिकोत्तमः ।
क्रमादीशानपर्यन्तौ जयन्तः शक्र-भास्करौ ॥
सत्यो वृषान्तरीक्षौ च दिशि प्राच्यां व्यवस्थिताः ।

अग्निः पूषा च वितथो यमश्च गृहरक्षकः ॥
गन्धर्वो भृङ्गराजश्च मृगो दक्षिणदिग्गताः ।
निर्ऋतिर्दौवारिकश्च सुग्रीव-वरुणौ ततः ॥
पुष्पदन्तासुरौ शोषरोगौ प्रत्यग्दिशि स्थिताः ।
वायुर्नागश्च मुख्यश्च सोमो भल्लाट एव च ।
अर्गलाख्योऽदित्यदिती कुवेरस्य दिशि स्थिताः ॥

महाकपिलपञ्चरात्रे तु—

गृहप्रासादकूपानां मण्डपस्य जलस्य च ।
वास्तुमण्डलकं कार्यमष्टहस्तं तु नापरम् ॥ इत्युक्तम् ।

ईशानशिवस्तु—पूज्याश्चतुःषष्टिपदेषु विप्रैरेकोत्तराशीतिपदे नृपाद्यैरित्युक्तवान् ।

हयशीर्षपञ्चरात्रे—एकाशीतिपदं वास्तु गृहकर्मणि शस्यते ।
चतुःषष्टिपदं वास्तु प्रासादेषु प्रशस्यते ॥

महाकपिलपञ्चरात्रे तु—

प्रासादार्थं चतुःषष्टिरेकाशीभिर्गृहे तथा ।

## एकाशीतिपदं वास्तुचक्रम्

| शिखी | पर्जन्यः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | अन्तरिक्षः | वातः |
|---|---|---|---|---|---|---|---|---|
| दितिः | आपः | जयन्तः | इन्द्रः | सूर्यः | सत्यः | भृशः | सावित्रः | पूषा |
| अदितिः | अदितिः | आपवत्सः | अर्यमा | अर्यमा | अर्यमा | सविता | वितथः | वितथः |
| भुजगः | भुजगः | सुमेरुः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | बृहत्क्षत्रः | बृहत्क्षत्रः |
| सोमः | सोमः | सुमेरुः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | यमः | यमः |
| भल्लाटः | भल्लाटः | सुमेरुः | ब्रह्मा | ब्रह्मा | ब्रह्मा | विवस्वान् | गन्धर्वः | गन्धर्वः |
| मुख्यः | मुख्यः | राजयक्ष्मा | मित्रः | मित्रः | मित्रः | इन्द्रः | भृङ्गराजः | भृङ्गराजः |
| अहिः | रुद्रः | शोषः | असुरः | वरुणः | पुष्पदन्तः | सुग्रीवः | जयः | मृगः |
| रोगः | पापयक्ष्मा | शोषः | असुरः | वरुणः | पुष्पदन्तः | सुग्रीवः | दौवारिकः | पिता |

इत्युक्तम्। ब्रह्माणमिति कोष्ठचतुष्टये एकाकारतया मार्जिते। एकाशीतिपदपक्षे तु सोमशम्भुः—मध्ये नवपदो ब्रह्मा शेषास्तु पदिकाः स्मृताः।

षट्पदास्तु मरीच्याद्या दिक्षु पूर्वादिषु क्रमात्॥

तत्राष्टदलकमलमपि लिखेत्। तदुक्तं महाकपिलपञ्चरात्रे—

पञ्चविंशपदे मध्ये ब्रह्माणं त्वर्चयेत् क्रमात्। इति।

कादिमते—सर्वमध्ये यजेत् सम्यग् ब्रह्माणं कमलासनम्।

हेमाभं च चतुर्वक्त्रं वेदाध्ययनशालिनम्॥

पूजा च पञ्चरजोभिः पदानां पूरणं कृत्वा कार्या। तदुक्तं गौतमीयतन्त्रे—

उक्तानामिति देवानां पदान्यापूर्य पञ्चभिः।

रजोभिस्तेष्वथो तेभ्यः पायसान्नैर्बलिं हरेत्॥

## चतुःषष्टिपदं वास्तुचक्रम्

शर्वः। पिलपिच्छिका

(बायीं ओर: जृम्भकः। पूतना; दायीं ओर: स्कन्दः। चरकी)

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अदितिः / ईशानः | पर्जन्यः | जयन्तः | शक्रः | भास्करः | सत्यः | वृषः | अन्तरिक्ष / अग्निः |
| अदितिः | दितिः / [illegible] | जयन्तः | शक्रः | भास्करः | सत्यः | [illegible] / भृशः | पूषा |
| अर्गलः | अर्गलः | आपः / आपवत्सः | अर्यमा | अर्यमा | सविता / सावित्रः | वितथः | वितथः |
| भल्लाटः | भल्लाटः | महीधरः | ब्रह्मा | ब्रह्मा | विवस्वान् | गृहरक्षकः | गृहरक्षकः |
| सोमः | सोमः | महीधरः | ब्रह्मा | ब्रह्मा | विवस्वान् | गृहरक्षकः | गृहरक्षकः |
| मुख्यः | मुख्यः | रुद्रः / [illegible] | मित्रः | मित्रः | इन्द्रजयः / [illegible] | गन्धर्वः | गन्धर्वः |
| नागः | [illegible] / [illegible] | असुरः | पुष्पदन्तः | वरुणः | सुग्रीवः | दौवारिक / [illegible] | भृङ्गराजः |
| [illegible] / [illegible] | शोषः | असुरः | पुष्पदन्तः | वरुणः | सुग्रीवः | दौवारिकः | निर्ऋतिः / [illegible] |

अर्यमा। विदारी

पायसैर्मधुरैः सर्वान् संयजेन्मधुरान्वितैः ।
तत्तद्द्रव्यैर्वा मतिमान् पूजयेद् दोषशान्तये ॥

दिव्यसारस्वते—मध्ये पदानां नवकं मार्जयित्वा प्रपूरयेत् ।
सितेन रजसा भूयस्तद्दिक्षु च चतसृषु ॥
षट्कं सम्मार्ज्य रजसा रक्तेन परिपूरयेत् ।
शिष्टानि च पदान्यत्र यथास्थानं प्रकल्पयेत् ॥
विचित्राणि ततो मध्ये ब्रह्माणं संप्रपूजयेत् । इति ।

ब्रह्मपूजाविधिर्यथा—कर्णिकायां मण्डूकादिपरतत्त्वान्तं केसरेषु मध्ये चाणिमादिसर्वसिद्धयन्ता नवपीठशक्तीः ॐ सर्वज्ञानक्रियाव्यक्तकमलासनाय योगपीठाय नम इति मध्ये पीठं च सम्पूज्य तत्र यथोक्तं ब्रह्माणमावाह्य ॐ नमो ब्रह्मण इति मन्त्रेण पञ्चोपचारादिभिर्ब्रह्माणं पूजयेत् । ततस्तत्परिवारत्वेन अन्यानपि पूजयेत् । एषां ध्यानं तन्त्रान्तरे—

उक्तानां सर्वदेवानां स्वरूपं च निगद्यते ।
अक्षमालां स्रुवं दक्षे वामे दण्डकमण्डलुम् ॥
दधानमष्टनयनं यजेन्मध्येऽम्बुजासनम् ।
सर्वे चतुर्भुजा देवा वास्तुदेहे व्यवस्थिताः ॥
कृताञ्जलिपुटाः सर्वे खड्गखेटकपाणयः ।
ब्रह्माणं संनिरीक्षन्ते तद्वक्त्राभिमुखाश्च ते ॥
स्वस्वस्थानस्थिताश्चैव साधारणमुदाहृतम् ।
मरीचिः श्वेतवर्णः स्याद् विवस्वान् रक्तवर्णकः ॥
शातकुम्भनिभो मित्रः कृष्णवर्णस्तु भूधरः ।
सविता नीलवर्णाभः सावित्रो धूम्रविग्रहः ॥
इन्द्रश्चारुणवर्णाभः शुक्रश्चेन्द्रजयस्तथा ।
रुद्रः प्रबालसदृशः पीतो रुद्रजयस्तथा ॥
आपो गोक्षीरधवल आपवत्सो जपाद्युतिः ।
ईशानः क्षीरधवलः पर्जन्योऽञ्जनसन्निभः ॥
जयन्तोऽञ्जनसंकाशो महेन्द्रश्चामलद्युतिः ।
आदित्यो रक्तवर्णः स्यात् सत्यकश्चित्रवर्णकः ॥
वृषो बन्धूकपुष्पाभः कुन्दाभश्चान्तरिक्षकः ।
उद्यद्दिनकराभोऽग्निः पूषा रक्ताब्जसन्निभः ॥

वितथश्चेन्द्रचापाभो विद्युद्वर्णो गृहरक्षकः ।
यमश्चाञ्जनसङ्काशो गन्धर्वः पद्मरागवत् ॥
भृङ्गराजस्तु भृङ्गाभो मृगो जीमूतसन्निभः ।
निर्ऋतिः पावकाभश्च पीतो दौवारिकः स्मृतः ॥
सुग्रीवो नीलकण्ठाभश्चन्द्राभः पुष्पदन्तकः ।
वरुणः स्फटिकाभाङ्गो भृङ्गाभश्चासुरो मतः ॥
शोषश्चोत्पलसंकाशो रोगश्चैवेन्द्रनीलवत् ।
वायुः कृष्णाभ्रवर्णः स्यान्नागः शङ्खेन्दुसन्निभः ॥
मुख्यो मौक्तिकसङ्काशो भल्लाटः श्वेतपद्मवत् ।
सोमः स्फटिकसङ्काशोऽर्गलो रक्तोत्पलद्युतिः ॥
दितिः कुन्देन्दुधवला कपिला चादितिः स्मृता ।
चरकी शङ्खसदृशी विदारी पावकद्युतिः ॥
पूतना हिमसङ्काशा मेघाभा पिलपिच्छिका ।
खड्गं च पानपात्रं च छुरिकां कर्त्तरीं तथा ॥
दधाना भीमरूपास्ता राक्षस्यः परिकीर्त्तिताः ।
सितो रक्तश्च पीतश्च कृष्णः स्कन्दादिका ग्रहाः ॥
वज्रं शक्तिं च खड्गं च पाशं च विकृताननाः ।
दधाना भीषणाः प्रोक्ता ग्रहाः स्कन्दादिकाश्च ते ॥

अत्र प्रतिदैवतं बलिद्रव्यभेदा मन्त्राश्चोक्ताः महाकपिलपञ्चरात्रे—गौतमीयतन्त्रे च—पायसौदनलाजैश्च युक्तं धूपैः प्रसूनकैः ।

अन्नादिभिश्च संयुक्तं माषभक्तादिमण्डितम् ।
गृहाणेमं बलिं ब्रह्मन् वास्तुदोषं प्रणाशय ॥
गन्धादिशर्करापूपं पायसोपरि संस्थितम् ।
आर्यकाख्य गृहाणेमं सर्वदोषं प्रणाशय ॥
चन्दनाद्यर्चितं नाथ कर्पूरागुरुमण्डितम् ।
विवस्वन् वै गृहाणेमं सर्वदोषं प्रणाशय ॥
सगुडं पायसं नाथ पुष्पादिसुसमन्वितम् ।
गृहाणेमं बलिं हृद्यं मित्र शान्तिं प्रयच्छ मे ॥
माषौदनं समांसञ्च गन्धादिक्षीरसंयुतम् ।
गृहाणेमं महीभृत् त्वं सर्वदोषं प्रणाशय ॥

एवं मध्ये तु संपूज्य ईशानादिबलिं हरेत् ॥

एतेन पूजायामाग्नेयादिक्रमेऽपि बलावीशानादिक्रमः । अन्यत्रापि—

ईशानाद् दक्षिणावर्त्तो बलिः सामान्यभाषितः ।
सर्वेषां खलु वस्तूनां विशेषः पदनिर्णये ॥

क्वचित्तु पूजापि तथैवोक्ता—

ईशकोणादिषु सुरान् पूजयेच्च विधानतः ।
ईशानादिचतुष्कोणसंस्थितान् पूजयेद् बुधः ॥ इति ।

तथा—क्षीरं खण्डसमायुक्तं पुष्पादिभिरलङ्कृतम् ।
गृहाणेमं बलिं ह्यमाप शान्तिं प्रयच्छ मे ॥
दधीदं गुडसंमिश्रं गन्धादिभिः सुसंयुतम् ।
गृहाणेमं बलिं वत्स विघ्नमत्र प्रणाशय ॥
पुष्पादिकुशपानीयं कर्पूरागुरुवासितम् ।
सावित्र वै गृहाणेमं शान्तिमत्र प्रयच्छ मे ॥
पिष्टकं सगुडं नाथ रक्तगन्धादिशोभितम् ।
गृहाणेमं बलिं सूर्य विघ्नमत्र प्रणाशय ॥
शीतमन्नं तथा पुष्पं कुङ्कुमादिसमन्वितम् ।
गृहाणेमं बलिं ह्यं शक्रदेव नमोऽस्तु ते ॥
ओदनं घृतसंयुक्तं वस्त्रगन्धादिमण्डितम् ।
गृहाणेमं बलिं ह्यमिन्द्रजय नमोऽस्तु ते ॥
पक्वापक्वमिदं मांसं वस्त्रपुष्पादिसंयुतम् ।
गृहाणेमं बलिं ह्यं रुद्रदेव नमाम्यहम् ॥
समांसं घृतसंपक्कं गन्धपुष्पादिसंयुतम् ।
गृहाणेमं बलिं रुद्रजय स्वस्ति प्रयच्छ मे ॥
रक्तपुष्पं समांसं वै रक्तवस्त्रादिसंयुतम् ।
विदारी वै गृहाणेमं रक्षोविघ्नं विनाशय ॥
पित्तरक्तास्थिसंयुक्तं रक्तगन्धादिमण्डितम् ।
गृहाणेमं पूतने त्वं रक्षोविघ्नं विनाशय ॥
सघृतं माषभक्तं च रक्तगन्धादिसंयुतम् ।
बलिं गृहाण शर्व त्वं रक्षोविघ्नं विनाशय ॥
मांसं पुष्पादिसंयुक्तं माषभक्तादिसंयुतम् ।

गृहाणेमं बलिं स्कन्द रक्षोविघ्नं निवारय ॥
श्वमांसं पिष्टकैर्युक्तं पक्वमांसोदकान्वितम् ।
अर्यमन् वै गृहाणेमं सर्वविघ्नं विनाशय ॥
रक्तमांसौदनं मत्स्यं गन्धपुष्पसमन्वितम् ।
जृम्भक त्वं गृहाणेमं रक्षोविघ्नं प्रणाशय ॥
छागकर्णान्वितं मांसं वस्त्रगन्धादिसंयुतम् ।
पिलपिच्छि गृहाणेमं रक्षोविघ्नं विनाशय ॥
घृतेन साधितं मांसं वस्त्रगन्धादिसंयुतम् ।
चरकि त्वं गृहाणेमं रक्षोविघ्नं विनाशय ॥
सघृतं साक्षतं भक्तं वस्त्रगन्धाद्यलङ्कृतम् ।
गृहाणेमं बलिं त्वीश वास्तुदोषापहारकम् ॥
उत्पलं पायसैर्युक्तं वस्त्रादिकसमन्वितम् ।
गृहाणेमं बलिं हृद्यं मेघराज नमोऽस्तु ते ॥
पञ्चहस्तं सुपीतं च ध्वजं भक्तादिमण्डितम् ।
गृहाणेमं बलिं हृद्यं जिष्णुसुत नमोऽस्तु ते ॥
ओदनं घृतसम्पूर्णं पञ्चरत्नादिमण्डितम् ।
गृहाणेमं बलिं हृद्यं देवराज नमोऽस्तु ते ॥
रक्तपुष्पयुतं भक्तं रक्तगन्धादिभिर्युतम् ।
गृहाणेमं बलिं हृद्यं भास्कर त्वं नमोऽस्तु ते ॥
वितानं धूम्रवर्णाभं गन्धादिकसुशोभितम् ।
रक्तयुक्तं गृहाणेमं बलिं सत्य नमोऽस्तु ते ॥
इदं तु माषभक्तं वै वस्त्रगन्धादिपूजितम् ।
गृहाणेमं भृष बलिं वास्तुदोषं विनाशय ॥
इदं तु शाद्वलं मांसं नैवेद्यादिसुसंयुतम् ।
गृहाणेमं बलिं हृद्यं व्योम शान्तिं प्रयच्छ मे ॥
सुवर्णं पिष्टकं चाथ वस्त्रगन्धादिभिर्युतम् ।
घृतान्वितं गृहाणेमं सप्तजिह्व नमोऽस्तु ते ॥
क्षीरं लाजसमायुक्तं गन्धपुष्पादिसंयुतम् ।
गृहाणेमं बलिं हृद्यं पूषदेव नमोऽस्तु ते ॥
मांसौदनं गन्धमाल्ययुतं वस्त्रादिभूषितम् ।

वितथेमं बलिं गृह्ण वास्तुदोषं विनाशय ॥
मत्स्यमांसयुतं भक्तं गन्धपुष्पाद्यलङ्कृतम् ।
यमराज गृहाणेमं बलिं शान्तिं प्रयच्छ मे ॥
पक्कमांसौदनं नवनीतं वस्त्रादिमण्डितम् ।
प्रीतिकरं गृहाणेमं गृहरक्ष नमोऽस्तु ते ॥
नानागन्धसमायुक्तं रक्तपुष्पादिभिर्युतम् ।
बलिं गृहाण गन्धर्व सर्वदोषं प्रणाशय ॥
इमां तु शाकुनीं जिह्वां माषभक्तोपरिस्थिताम् ।
गृहाणेमं भृङ्गराज बलिं शान्तिं प्रयच्छ मे ॥
यवं तिलघृतोपेतं गन्धपुष्पादिभिर्युतम् ।
गृहाणेमं बलिं हृद्यं मृगदेव नमोऽस्तु ते ॥
शर्करामण्डितं खण्डं वस्त्रगन्धाद्यलङ्कृतम् ।
प्रीतो बलिं गृहाणेमं रक्षोराज नमोऽस्तु ते ॥
चन्दनागुरुखण्डं च वस्त्रगन्धादिभिर्युतम् ।
गृहाणेमं बलिं हृद्यं दौवारिक नमोऽस्तु ते ॥
इदं तु पायसं नाथ गन्धपुष्पादिमिश्रितम् ।
सुग्रीव वै गृहाणेमं बलिं शान्तिं प्रयच्छ मे ॥
यवाद्यलङ्कृतं दुग्धं भक्तोपरि समर्पितम् ।
गृहाणेमं बलिं हृद्यं जलदेव नमोऽस्तु ते ॥
माषभक्तं कुशस्तम्बं घृतगन्धादिसंयुतम् ।
पुष्पदन्त गृहाणेमं वास्तुदोषं प्रणाशय ॥
मधुना साधितं पिष्टं गन्धाद्यैरुपशोभितम् ।
बलिं गृहाणासुरेन्द्र सर्वदोषं प्रणाशय ॥
घृतं चान्नसमायुक्तं कर्पूरादिसमन्वितम् ।
गृहाणेमं बलिं शोष सर्वशान्तिं प्रयच्छ मे ॥
यवजं तण्डुलं नाथ गन्धपुष्पादिशोभितम् ।
गृहाणेमं बलिं रोग सर्वदोषं प्रणाशय ॥
सघृतं मण्डकं चेदमन्नाद्यैरुपशोभितम् ।
गृहाणेमं बलिं हृद्यं मृगवाह नमोऽस्तु ते ॥
इदं तु कृशरान्नं मे दुग्धगन्धादिसाधितम् ।

पातालेश गृहाणेमं विघ्नमत्र प्रणाशय ॥
नालिकेरोदकं भक्तं पीतवस्त्रादिसंयुतम् ।
गृहाणेमं बलिं मुख्य वास्तुदोषं प्रणाशय ॥
पायसं मधुना मिश्रं पीतपुष्पसमन्वितम् ।
बलिं प्रगृह्यतां सोम सर्वदोषं प्रणाशय ॥
ओदनं घृतसंमिश्रं गन्धपुष्पसमन्वितम् ।
गृहाणेमं बलिं हृद्यं भल्लाट त्वं नमोऽस्तु ते ॥
माषान्नन्तु घृताभ्यक्तं गन्धपुष्पादिमण्डितम् ।
गृहाणेमं बलिं हृद्यमर्गलाख्य नमोऽस्तु ते ॥
क्षीरं खण्डसमायुक्तं नानापूजोपशोभितम् ।
दैत्यमातर्गृहाणेमं सर्वदोषं प्रणाशय ॥
पोलिकां मधुसंमिश्रां वस्त्रगन्धादिसंयुताम् ।
गृहाणेमं बलिं हृद्यं देवमातर्नमोऽस्तु ते ॥
स्वर्गपातालमर्त्येषु ये देवा वास्तुसम्भवाः ।
गृह्णन्त्विमं बलिं हृद्यं तुष्टा यान्तु स्वमन्दिरम् ॥
मातरो भूतवेताला ये वान्ये बलिकाङ्क्षिणः ।
विष्णोः पारिषदा ये च तेऽपि गृह्णन्त्विमं बलिम् ॥
पितृभ्यः क्षेत्रपालेभ्यो बलिं दत्त्वा प्रकामतः ।
अभावादुक्तमार्गस्य कुशपुष्पादिभिर्यजेत् ॥

प्रयोगसारे—वास्तुशेषक्रियाभूतः सर्वरक्षाविभूतिकृत् ।
भूतप्रीतिप्रदश्चास्मिन् दिशाबलिरुदीर्यते ॥
दिक्पालपरिषत्सर्वभूतानुद्दिश्य नामभिः ।
पूजा विसर्जनान्ता यत् स विज्ञेयो दिशाबलिः ॥
दध्यम्बु-रजनी-पुष्प-लाज-सक्तु-तिलान्धसा ।
द्रव्येण वितरेद् दिक्षु बलिं दिक्क्रमयोगतः ॥
सुराणां तेजसां चैव प्रेतानां रक्षसामपि ।
तथा जलानां प्राणानां नक्षत्राणां च तत्पुनः ॥
विद्यानामधिपानाञ्च तान् यथोक्तान् बलिं हरेत् ।
सवाहनपदं प्रोक्त्वा परिवाराय शक्तये ॥
तत्पार्श्वदेभ्यश्च ततः सर्वेभ्य इति संयुतम् ।

भूतेभ्यश्च क्रमाद् भूयः प्रादक्षिण्याद् क्षिपेद् बलिम् ॥
द्विषत्पिशाचवेताल-रक्षोरक्षाभयार्त्तिहा ।
दिशाबलिर्विशेषेण सर्वसम्पत्-समृद्धिदः ॥
वास्तौ ग्रहे प्ररोहे भूतद्रोहे गृहप्रवेशे च ।
वितते च शान्तिहोमे दिशां बलिः सिद्धये प्रयोक्तव्यः ॥

विसर्जनमन्त्रस्तु—तन्त्रान्तरे—

यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय चेति ॥

अत्रायं क्रमः—वास्तुमण्डलं लिखित्वा रजोभिः पदानि परिपूर्य मध्येऽष्टदल-कमलं वक्ष्यमाणरीत्या निर्माय तत्रोक्तप्रकारेण ब्रह्माणं ध्यात्वा तत्तत्पदेषु तत्तद्-देवताश्च सम्पूज्य पूर्वदिशि कुण्डं स्थण्डिलं वा निर्माय तत्र वक्ष्यमाणक्रमेणाग्नि-मुपसमाधाय मण्डलाद् ब्रह्मादिदेवतास्तत्रावाह्य ब्रह्मणेऽष्टोत्तरशतमन्येभ्यो दशदशा-हुतीर्दत्वा पूर्णाहुतिं विधाय पुनर्मण्डले देवानानीय तेभ्यो यथोक्तद्रव्यैर्यथोक्तमन्त्रैश्च बलिं दिशाबलिं च विधाय पुनस्तान् समभ्यर्च्य उक्तमन्त्रेण विसर्जयेत् । ततः आचार्याय दक्षिणां दत्वा शिष्यस्तं प्रणमेदिति ।

इति वास्तुयागविधिः

## अथ मण्डपरचनार्थं पूर्वादिदिग्ज्ञानोपायः

तन्त्रराजे—भानोर्गत्या दिशो ज्ञात्वा कुर्यात् कर्माणि देशिकः ।
वास्तुवैषम्यतो यत्र सम्यग् न ज्ञायते ककुप् ॥
तत्र शङ्कुं प्रतिष्ठाप्य जानीयाच्छक्रदिक्स्थितिम् ।
तद्गत्या दिक्परिज्ञानं शृणु वक्ष्ये यथाविधि ॥
सुसमे भूतले कृत्वा वृत्तं भ्रमणरूपतः ।
तन्मध्यबिन्दौ शङ्कुन्तु स्थापयेद् द्वादशाङ्गुलम् ॥
अग्रच्छायान्वयवशाद् वृत्ते पूर्वापरद्वये ।
पूर्वापराह्वयोः कृत्वा चिह्नेतमभितस्तथा ॥
स्वसमानपरिभ्रान्त्या कृत्वा वृत्तद्वयं पुनः ।
तयोः संश्लेशसंजातमध्यदक्षोत्तरस्थिते ॥
सन्धिद्वये च प्राक्प्रत्यक्सूत्रमध्ये तु विन्यसेत् ।
सूत्रं दक्षोत्तरं तेषामग्रैः प्रागादि कल्पयेत् ॥

क्रियासारेऽपि—कृत्वा भूमिं समां तत्र वृत्तं हस्तमितं समम् ।
द्वादशाङ्गुलमानोच्चं शङ्कुं खादिरनिर्मितम् ॥
अलाभे यज्ञवार्क्षं वा तत्र संस्थापयेत् सुधीः ।
तच्छाया संस्पृशेद् यत्र तन्मध्ये मध्यमं स्मृतम् ॥
तिर्यक् प्रसारयेत् सूत्रं मध्ये याम्योत्तरे स्मृते ।
कोणाः स्युरन्ये चत्वारश्चतुःसूत्रप्रसारणात् ॥
एवमाशापरिज्ञानं समाख्यातं यथा स्फुटम् ।
ज्ञात्वैवं मण्डपादीनि कुर्यात् सम्यग् विचक्षणः ॥

मण्डपस्तु त्रिविधः उत्तमाधममध्यमभेदात् । तदुक्तं प्रतिष्ठासारसंग्रहे—
स्वल्पो द्वादशहस्तोऽयं द्विद्विवृद्ध्या ततः क्रमात् ।

सोमशम्भावपि—······················मण्डपोऽर्ककरोऽथवा ।
द्विहस्तोत्तरया वृद्ध्या शेषाः स्युर्मण्डपाः शुभाः ॥

महाकपिलपञ्चरात्रेऽपि—
हस्तांस्तु द्वादशारभ्य क्रमाद् द्वौ द्वौ प्रवर्द्धयं च ।

एवं च—भूमिशुद्धिं विधायेत्थं रचयेद् यागमण्डपम् ॥
नवहस्तं पञ्चहस्तं त्रिहस्तं वा यथामतीति ॥

गौतमीयतन्त्रवचनेन नवहस्तं पञ्चहस्तमित्यनेन च चतुर्दशहस्तो नवहस्तं त्रिहस्तमित्यनेन च द्वादशहस्तो मण्डप उक्तः । तथा—
पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वा मतान्तरम् ।

इति शारदायामपि । पञ्चभिः सप्तभिरित्यनेन द्वादशहस्तः पञ्चभिर्नवभिरित्यनेन च चतुर्दशहस्तः सप्तभिर्नवभिरित्यनेन च षोड़शहस्तो मण्डप उक्तः । तथा—
अचलदोर्मितमत्र तु मण्डपं मसृणवेदिकमारचयेत् ततः ।

इति क्रमदीपिकायामपि अचलानां सप्तानां दोर्द्वयं तेन चतुर्दशहस्तास्तत्परिमितमित्यर्थः । यथाश्रुते कुण्डाष्टकवेद्यृत्विक्प्रचरणाद्यनुपपत्तेः । यत् तु—
राज्ञां होमाभिषेकादिप्रयोगार्थं तु मण्डपम् ।
विदध्यान्नवहस्तेन विस्तारायामसंयुतम् ॥

इति तन्त्रराजवचनं तद्दीक्षातिरिक्तकर्मोपयुक्तमण्डपपरम् । प्रथमार्धे तथैवोक्तेः ।

सिद्धान्तशेखरे—स्थलादर्काङ्गुलोच्छ्रायं मण्डपस्थलमीरितम् ।

महाकपिलपञ्चरात्रे तु—
उच्छ्रायो हस्तमानं स्यात् सुसमं च सुशोभनम् । इत्युक्तम् ।

शारदायाम्—षोड़शस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः ।
अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाभितः ॥
पञ्चहस्तप्रमाणास्ते निश्छिद्रा ऋजवः शुभाः ।
तत्पञ्चमांशं निखनेन् मेदिन्यां तन्त्रवित्तमः ॥
नारिकेलदलैर्बाह्ये छादयेत् तत्समन्ततः ॥

अष्टहस्तेति । इदं च शोड़शहस्तमण्डप एव ।

मण्डपार्धोच्छ्रितान् वेदसंख्याचूड़ान्वितांस्तथा ।

इति पञ्चरात्रवचनात् । मध्ये बहिर्वा स्तम्भनिवेशनमाग्नेयादिक्रमेण कार्यम् ।

स्तम्भोच्छ्राये शिलान्यासे सूत्रयोजनकीलके ।
खननावटसंस्कार-प्रारम्भो वह्निगोचरे ॥

इति वचनात् । सिद्धान्तशेखरे—

मध्ये स्तम्भचतुष्कं स्यात्तन्मध्ये वेदिका मता ।

तन्त्रान्तरे—वेदिकोणेषु विन्यस्य स्तम्भान् वेदस्वरूपकान् ।

पञ्चरात्रे—सारदारुभवान् स्तम्भान् दृढ़ान् कुर्यादृजून् समान् ॥

क्रियासारे—यज्ञीयवृक्षो वेणुर्वा क्रमुकः स्तम्भकर्मणि ।
अन्ये विशुद्धवृक्षा वा भवेयुर्नान्यभूरुहाः ॥
गृहशल्यः स्वयं शुष्कः कुटिलश्च पुरातनः ।
असौम्यभूमिजनितः सन्त्याज्यः स्तम्भकर्मणि ॥

मध्यमाधमयोर्द्वादशस्तम्भप्रमाणं त्रैराशिकेनानेयम् ।

पञ्चमांशं न्यसेद् भूमौ सर्वसाधारणो विधिः ।

इति वास्तुशास्त्रवचनात् ।

पञ्चमांशेन वा खातं सर्वेषां च शिवोदितम् ।

इति सिद्धान्तशेखरवचनाच्च खननं सर्वमण्डपस्तम्भानां पञ्चमांशेनैव । नारिकेलदलैरित्याद्युपलक्षणम् ।

कटैः सद्भिस्तु संछाद्या विजयाद्यास्तु मण्डपाः ।

इति वास्तुशास्त्रवचनात् । मन्त्रमुक्तावल्यां—

दिक्षु द्वाराणि चत्वारि विदध्यात् पञ्चमांशतः ।

पञ्चरात्रे—कनीयसि स्याद् द्विकरं चतुरङ्गुलवृद्धितः ॥
मध्यमोत्तमयोर्द्वारमिति न्यस्येन्मनोहरम् ॥

नवहस्तमान मण्डपाद् बहिर्द्वारेषु तोरणचतुष्टयं कुर्यात् ।

तदुक्तं—मण्डपद्वारबाह्ये च वेदिमानेन दिक्क्रमात् ।
प्लाक्षमौदुम्बराश्वत्थ-वटोत्थतोरणं न्यसेत् ॥ इति ॥

सोमशम्भुः—प्लक्षोदुम्बरकाश्वत्थवटजास्तोरणाः क्रमात् ॥
पूर्वादितो विधातव्या यद्वाद्यन्तविपर्ययः ।
अलाभादेकमेवैषां सर्वाशासु निवेशयेत् ॥

सिद्धान्तशेखरे—एकमेषामलाभे स्यात् तदभावे शमीद्रुमः ।
जम्बूखदिरसाराश्च तालो वा तोरणे स्मृताः ॥

महाकपिलपञ्चरात्रे—
देवास्तोरणरूपेण संस्थिता यज्ञमण्डपे ।
विघ्नविध्वंसनार्थं च रक्षार्थं त्वध्वरस्य च ॥
न्यसेन्न्यग्रोधमैन्द्र्यां तु याम्यां चोदुम्बरं तथा ।
वारुण्यां पिप्पलं चैव कौवेर्यां प्लक्षकं न्यसेत् ॥
सुशोभनं तु पूर्वस्यामृग्वेदादिषु मन्त्रितम् ।
इषे त्वेति च मन्त्रेण सुभद्राख्यं तु दक्षिणे ॥
सुकर्माख्यं तु वारुण्यां सामवेदादिकेन तु ।
शन्नो देवीति मन्त्रेण सुहोत्रं तूत्तरे न्यसेत् ॥

शारदायां—द्वारेषु तोरणानि स्युः क्रमात् क्षीरमहीरुहाम् ।
स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक् ॥
दशाङ्गुलप्रमाणेन तत्परीणाह ईरितः ।
तिर्यक् फलकमानं स्यात् स्तम्भमानार्द्धमानतः ।
शूलानि कल्पयेन्मध्ये तोरणे हस्तमानतः ॥

सप्तहस्तैरित्युत्तममण्डपपक्षे । यद्व वास्तुशास्त्रे—
पञ्चहस्तप्रमाणास्ते विस्तारेण द्विहस्तकाः ।
षडङ्गुलादिवृद्ध्या तु सप्तहस्तास्तथोत्तमे ॥

षडङ्गुलादीति । तेन अधममण्डपे तोरणस्तम्भयोरन्तरालभूमिर्द्विहस्ता । मध्यमे षडङ्गुलाधिकद्विहस्ता । उत्तमे द्वादशाङ्गुलाधिकद्विहस्ता । एतेन मण्डपभेदेन तिर्यक्-फलकमानमप्युक्तं भवति । अधमोत्तमयोः पञ्चसप्तहस्तोच्छ्रायताकथनान्मध्यमे षड्-हस्तोच्छ्रायतोक्ता भवति । पिङ्गलामते—
शूलेन चिह्निताः कार्या द्वारशाखाः स्वमस्तके ।
ऋजु वै मध्यशूलं स्यात् किञ्चिद् वक्रं च पक्षयोः ॥

उभयं तत्समाख्यातं त्र्यङ्गुलं रोपयेत् तदा ।

क्रियासारे—तोरणं घटयित्वैवं मूर्ध्नि शूलत्रयं न्यसेत् ॥

शूले नवाङ्गुलं दैर्घ्यं तुरीयांशेन विस्तृतिः ।

शेषाणां द्व्यङ्गुला वृद्धिर्वंशश्चाङ्गुलवृद्धितः ॥

अयश्च त्रिशूलविन्यासः शैवशाक्तादौ । वैष्णवे तु विशेषो वास्तुशास्त्रे—

मस्तके द्वादशांशेन शङ्खचक्रगदाम्बुजम् ।

प्रागादिक्रमयोगेन न्यसेत्तेषां स्वदारुजम् ॥

शारदायां—दिक्षु ध्वजान्निबध्नीयाल्लोकपालसमप्रभान् ।

वितानदर्भमालाद्यैरलंकुर्वीत मण्डपम् ॥

प्रतिष्ठासारसंग्रहे—पीतरक्तादिवर्णाश्च पञ्चहस्ता ध्वजाः स्मृताः ।

द्विपञ्चहस्तैर्दण्डैस्ते वंशजैः संयुता मताः ॥

द्विपञ्चहस्तैर्दशहस्तैः । अन्यत्रापि—

पञ्चहस्ता ध्वजाः कार्या वैकल्पे तु द्विहस्तकाः ।

दण्डश्च दशहस्तः स्यादष्टदिक्षु च तान् न्यसेत् ॥

हयशीर्षपञ्चरात्रे—ध्वजेन रहिते ब्रह्मन् मण्डपे तु वृथा भवेत् ।

पूजाहोमादिकं सर्वं जपाद्यं यत् कृतं बुधैः ॥

रक्षकेण विना यद्वत् क्षेत्रं नश्यति क्षेत्रिणः ।

ध्वजं विना देवगृहं तथा नश्येत सर्वथा ॥

विष्णुपारिषदाः क्रूराः कूष्माण्डाद्यास्तु ये स्मृताः ।

पूजादिकं तु गृह्णन्ति देवं दृष्ट्वा न रक्षितम् ॥

दृष्ट्वा ध्वजांस्तु देवस्य मण्डपे ज्वलनप्रभान् ।

नश्यन्ति सर्वे ते चार्करश्मिक्षिप्तं तमो यथा ॥

सिद्धान्तशेखरे—चूतपल्लवमालाढ्यं वितानैरुपशोभितम् ।

विचित्रवस्त्रसंछन्नं तुलास्तम्भविभूषितम् ॥

सफलैः कदलीस्तम्भैः क्रमुकैर्नारिकेलजैः ।

फलैर्नानाविधैर्भोज्यैर्दर्पणैश्चामरैरपि ॥

भूषितं मण्डपं कुर्याद्गलपुष्पसमुज्ज्वलम् ।

हयशीर्षपञ्चरात्रे—दर्पणैश्चामरैर्घण्टैः स्तम्भान् वस्त्रैर्विभूषयेत् ।

कलशैर्घटिकाभिश्च साधारैः कर्करैस्तथा ॥

तत्र प्रतितोरणमेकैकः कलशः स्थाप्यः । प्रतिद्वारपार्श्वं द्वौ द्वौ । प्रतिकोणं

चैकैकः। तदुक्तम्—गन्धपुष्पाम्बरोपेतान् कुम्भांस्तेषु विनिक्षिपेत्।
तेषु तोरणेषु। ध्रुवं धरां वाक्पतिं च विघ्नेशं तेषु पूजयेत्।
मण्डपस्य तु कोणस्थकलशेषु क्रमादमी॥
अमृतो दुर्जयश्चैव सिद्धार्थो मङ्गलस्तथा।
पूज्या द्वारस्थकुम्भेषु शक्राद्यास्तन्मनूत्तमैः॥
अन्यत्रापि—मण्डपे कलशौ द्वौ द्वौ द्वारे द्वारे निवेशयेत्।
गालितोदक-सम्पूर्णा-वाम्रपल्लवशोभितौ॥
शारदायां—तत्त्रिभागमिते क्षेत्रेऽरत्निमात्रसमुच्छ्रिताम्।
चतुरस्रां ततो वेदीं मण्डलाय प्रकल्पयेत्॥
अन्यत्रापि—ततो मण्डपसूत्रं तु त्रिगुणं परिकल्पयेत्।
पूर्वादिषु क्रमात् तस्य मध्यभागेन वेदिका॥
सिद्धान्तशेखरेऽपि—नवांशं मण्डपं कृत्वा मध्यांशे वेदिका मता।
अरत्निमात्रसमुच्छ्रितां हस्तमात्रोन्नताम्।
तैश्चतुर्भिर्भवेन्मुष्टिर्वितस्तिस्तैस्त्रिभिर्गुणैः।
अरत्निस्तद्द्वयेन स्याद्धस्तस्तद्द्वयतः शिवे॥
इति तन्त्रराजवचनेनारत्निहस्तशब्दयोः पर्यायतोक्तेः।
तत्रैव—··················तत् त्रिभागैकभागतः।
विदध्यान्मध्यतो वेदीं करमात्रसमुन्नतामित्युक्तेश्च। मन्त्रमुक्तावल्यामपि - इष्टकाभिर्मृदा वापि वेदी दर्पणसन्निभा।
राजहस्तोच्छ्रया कार्या विदुषा सिद्धिमिच्छता॥
क्रियासारेऽपि—त्रिभागं मण्डलं कृत्वा मध्यभागस्तु वेदिका।
हस्तमानं तदुत्सेधं चतुरस्रं समं यथा॥
तथा—वक्रपार्श्वा क्लिन्नमध्या परुषा द्रुगशोभना।
मानहीनाधिका या सा कर्त्तुः कर्मविनाशिनी॥
मण्डपान्यथाभावे दोष उक्तः—क्रियासारे—
अनुक्तसाधनैः क्लृप्तो यदि वा कुटिलाकृतिः।
मानाधिकोऽथवा न्यूनो मण्डपः कर्मनाशकः॥
आख्यातसाधनैः क्लृप्तः शोभनः सममानकः।
मनोज्ञो मण्डपो योऽसौ कर्मकर्त्तुः शुभावहः॥
इति मण्डपलक्षणम्

## अथ कुण्डानि

शारदायाम्—प्राक् प्रोक्ते मण्डपे विद्वान् वेदिकाया बहिस्त्रिधा ।
क्षेत्रं विभज्य मध्यांशे पूर्वादि परिकल्पयेत् ॥
अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमात् ।
चतुरस्रं योनिमर्धचन्द्रं त्र्यस्रं सुवर्त्तुलम् ॥
षडस्रं पङ्कजाकारमष्टास्रं तानि नामतः ।
आचार्यकुण्डं मध्ये स्याद् गौरीपतिमहेन्द्रयोः ॥
सिद्धान्तशेखरे—पुरन्दरेशयोर्मध्ये वृत्तं वा चतुरस्रकम् ।
तदाचार्यस्य निर्दिष्टमिति ॥
क्रियासारे—वृत्तं वा चतुरस्रं स्यान्मध्यस्थानं वृषेशयोः ।

## अथ चतुरस्रकुण्डम्

तन्त्रराजे—प्राक् प्रत्यक् सूत्रमास्फाल्य तन्मध्ये चिह्नकल्पनम् ।
कृत्वा तत्पूर्वतः पश्चाद् द्वादशाङ्गुलमानतः ॥
परं प्रमृज्य तत्रापि विदध्याच्चिह्नयुग्मकम् ।
प्राक्प्रत्यक्चिह्नमानेन तयोरेवावलम्बतः ॥
दक्षिणोत्तरतो हंसपदे कृत्वा ततस्तयोः ।
प्रसार्य सूत्रं तत्रापि मार्जयित्वोक्तमानतः ॥
ततस्तदग्राण्यालम्ब्य मध्यचिह्नस्य मानतः ।
कुर्याद्धंसपदं कोष्ठान्यभितस्तेषु पातयेत् ॥
चतुष्टयं तु सूत्रं च चतुरस्रं भवेत् समम् ।
तस्मिन्नन्यानि कुण्डानि वदामि तव मानतः ॥
गौतमीयतन्त्रे—पूर्वापरायतं सूत्रं हस्तमानं प्रसार्य च ।
तस्याग्रयोर्मत्स्ययुग्मं कुर्यात् स्पष्टं यथा भवेत् ॥
द्विभागौ कृत्य तत्सूत्रं पातयेद् दक्षिणोत्तरम् ।
तदग्रयोर्मत्स्ययुग्मं कुर्यात् स्पष्टं यथा भवेत् ।
चतुर्दिक्षु चतुःसूत्रं पातयेत् तत्प्रमाणतः ।
चतुरस्रं चतुःकोष्ठं भवेदतिमनोहरम् ॥
कोणसूत्रद्वयं दद्यात् प्रमाणं तेन लक्षयेत् ।
चतुरस्रं भवेत् कुण्डं सर्वलक्षणलक्षितम् ॥

तथा—अनेन जनयेत् सर्वकुण्डानि मनुवित्तमः ।

शारदायां—चतुर्विंशत्यङ्गुलाढ्य हस्तं तन्त्रविदो विदुः ।
कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः ॥
मध्यस्य दैर्घ्यमानेन मानाङ्गुलमुदीरितम् ।
यवानामष्टभिः क्लृप्तं मानाङ्गुलमुदीरितम् ॥

अत्र भूवदनसमासार्द्ध मध्यमलम्बेन संगुणयेदित्युक्तरीत्या षट्सप्तत्यधिक-पञ्चशताङ्गुलानि हस्तमात्रकुण्डस्य क्षेत्रफलं द्विहस्तादौ तद्द्वैगुण्यादि । एकहस्त-कुण्डकर्णसूत्रेण द्विहस्तकुण्डमध्यसूत्रम् एवं तत्कर्णसूत्रेण चतुर्हस्तकुण्डमध्यसूत्रमव-गन्तव्यम् । एवमग्रेऽपि ।

तदुक्तं गौतमीयतन्त्रे—

कर्णसूत्रप्रमाणेन द्विहस्तं कुण्डमुद्धरेत् ।
सर्वकुण्डेषु सर्वत्र वर्धयेद् विधिनामुना ॥ इति ।

वस्तुत एकहस्तक्षेत्रफलं द्विगुणत्रिगुणादि कृत्वा तन्मूलमानीय द्विहस्त-त्रिहस्तादिकुण्डमध्यसूत्रपरिमाणं ज्ञेयम् ।

खनेत् तत्तत्प्रमाणेन गुणितेन यथाक्रमम् ।

इति ज्ञानार्णववचनात् । गुणिताज्ञाने द्विहस्तादिकुण्डमध्यसूत्रपरिमाणमभि-युक्तवचनाद् बोध्यम् । यथा—

विस्ताराङ्गुलमानमेककरतो यावद् दश स्याज्जिना-
वेदत्रीणि कुसागराः शरयवोपेता भुजङ्गाम्बुधिः ।
निष्पादाम्बुधिसायकावियवमङ्क्ष्वर्धयुग्रामषट्-
नागांगानियवानिद्वङ्मुनियवेनोनाश्च षट् पर्वताः (?) ॥

एवञ्च चतुर्विंशत्यङ्गुलान्येकहस्तस्य व्यासः २४ चतुस्त्रिंशद् द्विहस्तस्य ३४ एकचत्वारिंशदङ्गुलानि पञ्चयवाश्च त्रिहस्तस्य ४१ अष्टचत्वारिंशदङ्गुलानि चतु-र्हस्तस्य ४८ त्रिपञ्चाशङ्गुलानि षड्यवाश्च पञ्चहस्तस्य ५३ अष्टपञ्चाशदङ्गुलानि सप्तयवाश्च षड्ढस्तस्य ५८ त्रिषष्टिरङ्गुलानि चत्वारो यवाश्च सप्तहस्तस्य ६३ सप्तषष्टिरङ्गुलानि सप्तयवाश्चाष्टहस्तस्य ६७ द्वासप्ततिरङ्गुलानि नवहस्तस्य ७२ पञ्च-सप्ततिरङ्गुलानि सप्तयवाश्च दशहस्तस्य ७५ । द्विहस्तादिकुण्डानि तु प्रयोगोप-युक्तानि प्रसङ्गादत्रोक्तानि दीक्षायामेकहस्तकुण्डस्यैवोपयोगात् ।

इति चतुरस्रकुण्डलक्षणम्

## अथ योनिकुण्डलक्षणम्

तन्त्रराजे—तन्मध्यपञ्चमांशेन विकाश्य ब्रह्मसूत्रकम् ।
पूर्वतः पश्चिमद्वन्द्वं कोष्ठयोर्मध्यदेशतः ॥
तत्कोणमानेन तथा भ्रामयेत् पश्चिमाग्रकान् ।
उत्तराग्रावधि तथा दक्षिणाग्रावधि प्रिये ॥
तन्मध्यतिर्यक्सूत्राग्रद्वयावष्टम्भतस्तथा ।
विकाशितब्रह्मसूत्रावधि सूत्रद्वयं भवेत् ।
योनिकुण्डमिदं भद्रे स्याच्चतुर्षूभयात्मसु ॥

इति योनिकुण्डलक्षणम्

## अथार्धचन्द्रकुण्डलक्षणम्

यथा—चतुष्कोणे क्षेत्रे जिनलवकमध्यस्थितगुणे
विहायाधः सार्द्धं द्वयमुपरि तावच्च मतिमान् ।
कलांशेनांशस्योनितमुपरि तिर्यक् कुरु गुणं
भ्रमार्धं तन्मानादपि शशिदलं कुण्डमिति तु ॥

अत्रापि तान्त्रिकवचनानि विसंवादिक्षेत्रफलकानि ।

इत्यर्धचन्द्रकुण्डलक्षणम्

## अथ त्रिकोणकुण्डलक्षणम्

क्षेत्रस्य मध्यमगुणे जिनभागसक्ते श्रोण्योः पृथक् शरलवान् परिवर्ध्य धीमान् ।
अग्रे जिनाष्टमनवेन दशाथ सूत्रैस्त्र्यस्त्रित्रिभिर्भवति कुण्डमिह प्रयुक्तैः ॥

इत्यभियुक्तदिशापि समसूत्रतायाः अभावः । तस्माद्द्वात्रिंशदङ्गुलं मध्यमलम्बं षट्त्रिंशदङ्गुलां च भुवं विधाय सूत्रत्रयदानेन त्रिकोणकुण्डं सम्पादनीयम् । तेन समसूत्रता क्षेत्रफलपूर्णता च भवतीत्याकलनीयम् ।

इति त्रिकोणकुण्डलक्षणम्

## अथ वृत्तकुण्डलक्षणम्

षोडशधा कृतमध्यमसूत्रक्षेत्रे पुरःपरिवर्धितक्षेत्रभागे (?) ।
एकक एव ततोन्तरचिह्नान् मण्डलकुण्डमिति भ्रमणात् स्यात् ॥

अन्यानि तु वचनानि विसंवादिक्षेत्रफलकानीत्युपेक्षितानि ।

इति वृत्तकुण्डलक्षणम्

## अथ षट्कोणकुण्डलक्षणम्

क्रियासारे—क्षेत्रं वस्वंशकं कृत्वा बहिः पार्श्वद्वयेऽंशकौ ।
न्यस्त्वाऽनेन प्रमाणेन मध्यात् तुल्यं यथा न्यसेत् ॥
कोणान्यन्यानि चत्वारि पार्श्वयोश्च द्वयं द्वयम् ।
षट्सूत्राणि न्यसेत् तेषु तत् स्यात् षट्कोणकुण्डकम् ॥

सिद्धान्तशेखरे—चतुरस्रे समे सिद्धे क्षेत्रमष्टांशकं बहिः ।
अग्रयोर्गर्भसूत्रस्य योजयेत् तत्प्रदेशतः ॥
गर्भमध्यप्रमाणेन सूत्रेण भ्रमयन्त्रकम् ।
गर्भमध्ये बहिर्भागे विन्यस्य भ्रमणाद् भवेत् ॥
उत्तरे दक्षिणे बाह्ये मत्स्ययोर्द्वितयं ततः ।
मीने बाह्यांशके मीने मीनयुग्मे ततः क्रमात् ।
सूत्रषट्कं न्यसेत् तत्तु कुण्डं षट्कोणमीरितम् ॥

इति षट्कोणकुण्डलक्षणम्

## अथ पद्मकुण्डलक्षणम्

पद्मकुण्डे मध्यसूत्रं चतुर्विंशतिधा भजेत् ।
भ्रामयेत् कर्णिकावृत्तं त्र्यंशवृत्तार्धमानतः ॥
षडंशवृत्तार्धमान-भ्रमिवृत्ते तु केशराः ।
नवांशवृत्तार्धमाने वृत्ते स्यात् पत्रमध्यभूः ॥
द्वादशांशात् तु वृत्तार्धाद् वृत्तं पत्रोर्ध्वभूः स्मृता ।
दलाग्राणान्तु वृत्तार्धं कृत्वा पञ्चदशांशकैः ॥
न्यूनैः पञ्चभिरेकांशश्चतुःषष्ट्यंशकैर्भ्रमात् ।
रेखाग्रेभ्यः पत्रसीम्नो दलाग्राणि प्रकल्पयेत् ॥

वचनान्तराणि तु विसंवादिक्षेत्रफलानीत्युपेक्षितानि । तत्र कर्णिका त्र्यङ्गुलोच्चा षडङ्गुलव्यासा कार्या । तदुक्तं—कामिके—
उत्सेधं तु ततः कुर्यात् कर्णिकार्धांशमानतः ॥

इति पद्मकुण्डलक्षणम्

## अथाष्टकोणकुण्डलक्षणम्

कुण्डेऽष्टास्रे मध्यसूत्रं चतुर्विंशतिधा भजेत् ।
एकत्रिदशमांशाढ्यं ह्यंशवृद्ध्या च वर्तुलम् ॥
तन्मध्ये दिक्चष्टसूत्रदानादष्टास्रकं समम् ।

वचनान्तराणि तु विसंवादिक्षेत्रफलकानि विषमसूत्रप्रतिपादकानीत्युपेक्षितानि ।

इत्यष्टकोणकुण्डलक्षणम्

एतावत्कुण्डकरणासमर्थस्तु चतुरस्रकुण्डानि वृत्तकुण्डान्येव वा सर्वत्र कुर्यात् । 'कुण्डानि चतुरस्राणि वृत्तनामाकृतीनि वे'त्याम्नायरहस्यस्य 'शस्तानि तानि वृत्तानि चतुरस्राणि वा सदे'ति सोमशम्भोश्च वचनात् । मध्यमस्तु पञ्चकुण्डीपक्षः । एक-कुण्डकरणपक्षस्तु कनिष्ठः । 'नव पञ्चाथ वैकं वा कर्त्तव्यं लक्षणान्वित'मित्याम्नाय-रहस्यवचनात् । तन्निवेशनमपि तत्रैवोक्तम्—'विधाने पञ्चकुण्डानामीशाने पञ्चमं भवेदि'ति । ज्ञानरत्नावल्यामपि —'दिक्षु वेदास्रवृत्तानि पञ्चमं त्वीशगोचरमि'ति ।

नारदीये तु—यत्रोपदिश्यते कुण्डचतुष्कं तत्र कर्मणि ।

वेदास्रमर्धचन्द्रं च वृत्तं पद्मनिभं तथा ॥

कुर्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः ।

पञ्चमं कारयेत् कुण्डमीशदिग्गोचरं द्विज ॥

इत्युक्तम् । एककुण्डपक्षे निवेशनमुक्तमाचार्यैः—

अथवा दिशि कुण्डमुत्तरस्यां प्रविदध्याच्चतुरस्रमेकमेवेति ।

सोमशम्भुना तु—एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद् बुधः ।

इत्युक्तम् । एतच्च कुण्डं चतुरस्रं वृत्तं वा कार्यम् । तदुक्तं क्रियासारे—

चतुरस्रं भवेत् कुण्डं वृत्तं कुण्डमथापि वा ।

स्थिरार्चने चरार्चायां नित्ये हवनकर्मणीति ॥

पिङ्गलामतेऽपि—कुण्डमेककरं वृत्तं मेखलाकण्ठनाभिमत् ।

नित्ये कर्मणि दीक्षायां शान्तौ पुष्टौ मतं शुभमिति ॥

## अथ खातम्

शारदायां—यावान् कुण्डस्य विस्तारः खननं तावदीरितम् ।

प्रयोगसार-दिव्यसारस्वतयोरपि—

चतुरस्रं चतुःकोष्ठं सूत्रैः कृत्वा यथा पुरा ।

हस्तमानेन तन्मध्ये तावन्निम्नायतं खनेत् ॥

गणेश्वरविमर्शिण्याम्—

चतुर्विंशाङ्गुलायामं तावत् खातसमन्वितम् ।

यत्तु—'हस्तमात्रं खनेत् तिर्यगूर्ध्वं मेखलया सहे'ति मोहशूरे 'व्यासात् खातः करः प्रोक्तो निम्नं तिथ्यङ्गुलेन त्विति विश्वकर्मणि 'कुण्डं जिनाङ्गुलैस्तिर्यगूर्ध्वं मेखलया सहे'ति प्रथमतन्त्रे, 'खातं कुण्डप्रमाणं स्यादूर्ध्वं मेखलया सहे'ति

सिद्धान्तशेखरे च प्रोक्तम् तत्तु स्वल्पतरहोमविषयं, सुकुमारमालत्यादिपुष्पहोमविषयं चेत्येवध्येयम्। गौतमीये—

ततः कुण्डं खनेन्मन्त्री यथाशास्त्रविधानतः।
त्यक्त्वा सर्पस्य गात्रं च शिरोदेशं प्रयत्नतः॥
शिरोघाते भवेन्मृत्युः पिण्डेषु पिण्डघातनम्।
पुच्छे तु दुःखसम्भूतं क्रोडे सर्वार्थसाधनम्॥

नागशिर आदिनिर्णयस्तन्त्रान्तरे—

वास्तुप्रमाणेन तु गात्रकेण वामेन शेते खलु नित्यकालम्।
त्रिभिस्तु मासैः परिवृत्त्य भूमौ तं वास्तुनागं प्रवदन्ति सिद्धाः॥
भाद्रादिके वासवदिक्शिराः स्यान्मार्गादिकेषु त्रिषु याम्यमूर्धा।
प्रत्यक्शिरा स्यात् खलु फाल्गुनादौ ज्येष्ठादि कौवेरशिराः स नागः॥

## अथ कण्ठमानम्

महाकपिलपञ्चरात्रे—

चतुर्विंशतिभागेन कण्ठो वै परिकीर्त्तितः।
खाताद् बाह्येऽङ्गुलः कण्ठः सर्वकुण्डेष्वयं विधिः॥
चतुर्विंशतिमं भागमङ्गुलं परिकल्पयेत्।

## अथ मेखला

पिङ्गलामते—खातादेकाङ्गुलं मुक्त्वा मेखलानां स्थितिर्भवेत्।
शारदायाम्—कुण्डानां यादृशं रूपं मेखलानाञ्च तादृशम्॥

वायवीयसंहितायां—

मेखलानां त्रयं वापि द्वयमेकमथापि वा।

क्रियासारे—नाभियोनिसमायुक्तं कुण्डं श्रेष्ठं त्रिमेखलम्।
कुण्डं द्विमेखलं मध्यं नीचं स्यादेकमेखलम्॥

सोमशम्भौ—त्रिमेखलं द्विजे कुण्डं क्षत्रियस्य द्विमेखलम्।
मेखलैका तु वैश्यस्येति।

तत्रैव—कुण्डानां यश्चतुर्विंशो भागः सोऽङ्गुलसंज्ञकः।
विभज्यानेन कर्त्तव्या मेखलाकण्ठनाभयः॥

महाकपिलपञ्चरात्रे—

कुण्ठषड्भागिका त्वाद्या द्वितीयाष्टांशका स्मृता।
तृतीया द्वादशांशा स्यादिति।

योगिनीहृदये—मेखला शृणु मे देवि हस्तादिषु विशेषतः ।
षड्नागकांशसंभागैर्मिताः स्युर्गोपिताः शुभाः ॥
तन्त्रान्तरे—या या तु मेखला पूर्वा सा सा भूमिरुदाहृता ।
अत्र बाह्यमारभ्य पूर्वत्वं बोध्यम् । क्रियासारे—
प्रधानमेखलोत्सेधमुक्तमत्र नवाङ्गुलम् ।
तद्बाह्यमेखलोत्सेधं पञ्चाङ्गुलमिति स्मृतम् ॥
तद्बाह्यमेखलोत्सेधमङ्गुलद्वितयं क्रमात् ।
चतुस्त्रिद्व्यङ्गुलो व्यासो मेखलात्रितयान्वितः ॥
अत्रोच्चतोक्तिर्मूलभूमिमवधीकृत्य । लक्षणसंग्रहे—
प्रथमा द्व्यङ्गुलायामा उन्नता सा नवाङ्गुलैः ।
मध्यमा त्र्यङ्गुला बाह्ये तृतीया तु यमाङ्गुलैः ॥
यत्तु—सत्वपूर्वकगुणान्विताः क्रमाद् द्वादशाष्टचतुरङ्गुलोच्छ्रिताः ।
सर्वतोऽङ्गुलचतुष्कविस्तृता मेखलाः सकलसिद्धिदा मता ॥
इत्याचार्यैरुक्तम् । तत्फलविशेषपरम् । अत एव—
प्रथमा मेखला तत्र द्वादशाङ्गुलविस्तृता ।
चतुर्भिरङ्गुलैस्तस्याश्चोन्नतिश्च समन्ततः ॥
तस्याश्चोपरि वप्रः स्याच्चतुरङ्गुलमुन्नतः ।
अष्टाभिरङ्गुलैः सम्यग् विस्तीर्णं तु समन्ततः ॥
तस्योपरि पुनः कार्यो वप्रः सोऽपि तृतीयकः ।
चतुरङ्गुलविस्तीर्णश्चोन्नतश्च तथाविधः ॥
इति वशिष्ठसंहितापि तथैव । यच्च—
व्यासे चतुर्विंशतिधा विभाजिते तिस्रश्चतुस्त्रीक्षणभागविस्तृताः ।
समन्ततः कण्ठबहिस्तु मेखला नवर्त्तुरामांशकतुङ्गता मताः ॥
विस्तारतुल्योन्नतयस्तु कैश्चिदुक्ता इमाः केनचिदर्कभागै-
राद्योच्चतोक्ता परयोस्तु नागवेदांशमाना विदधे क्रमेण ॥
इति वाजयेयिभिरुक्तम्, तत्तु प्रमाणाभावादुपेक्षणीयम् । गौतमीये—
सात्त्विकी मेखला पूर्वा द्वितीया राजसी स्मृता ।
तृतीया तामसी ज्ञेया इत्युक्तं कुण्डलक्षणम् ॥
पञ्चमेखलापक्षे तन्मानमुक्तं लक्षणसंग्रहे—
मेखलाः पञ्च वै कार्याः षड्पञ्चाब्धित्रिपक्षकैः ।

सिद्धान्तशेखरेऽपि—

षड्बाणाब्धिवह्निनेत्रमिताः स्युः पञ्च मेखलाः ॥

द्विमेखलापक्षे तन्त्रान्तरे—

षष्ठांशेनाऽष्टमांशेन मेखलाद्वितयं मतम् ।

एकमेखलापक्षे पिङ्गलामते—

एका षड़ङ्गुलोत्सेध-विस्तारा मेखला मता ।

महाकपिलपञ्चरात्रेऽपि—

सा चतुर्थांशविस्तारा मेखलैकाऽथवा स्मृता ।

प्रथमतन्त्रेऽपि—कण्ठाङ्गुलाद् बहिः कार्या मेखलैका षड़ङ्गुला ।

सिद्धान्तशेखरेऽपि—

कुण्डानां मेखलां कुर्यादेकां चेत् षड्भिरङ्गुलैः ॥

## अथ योनिलक्षणम्

शारदायां—होतुरग्रे योनिरासामुपर्यश्वत्थपत्रवत् ।

सोमशम्भौ—तासामुपरि योनिः स्यान्मध्येऽश्वत्थदलाकृतिः ।

स्वायम्भुवे—प्रागग्नियाम्यकुण्डानां प्रोक्ता योनिरुदङ्मुखा ।

पूर्वा मुखाः स्मृताः शेषा यथाशोभं व्यवस्थिताः ॥

त्र्यैलोक्यसारेऽपि—

दक्षिणस्था पूर्वयाम्ये जलस्था पश्चिमोत्तरे ।

नवमस्यापि कुण्डस्य योनिर्दक्षदलस्थिता ॥

स्वायम्भुवे—मेखला मध्यतो योनिः कुण्डार्द्धत्र्यंशविस्तृता ।

अङ्गुष्ठमानोष्ठकण्ठी कार्याऽश्वत्थदलाकृतिः ॥

सिद्धान्तशेखरेऽपि—

दीर्घार्कपर्वभिर्योनिर्विस्तारेणाऽष्टकाङ्गुला ।

उन्नतिर्द्व्यंगुलेनाऽस्याः·················· ॥

प्रयोगसारेऽपि—त्रिभागां मध्यतो योनिमायामे द्वादशाङ्गुलाम् ।

द्वादशांशोच्छ्रितां कुर्यात् किञ्चित् कुण्डनिवेशिनीम् ॥

एवञ्च—मुष्ट्यरत्नेकहस्तानां कुण्डानां योनिरीरिता ।

षट्चतुर्द्व्यङ्गुलायाम-विस्तारोन्नतिशालिनीति ॥

इति शारदावचनं—

तत् षडङ्गुलमायामं विस्तारं चतुरङ्गुलमिति ।

क्रियासारवचनं चैकमेखलपक्ष इति राघवभट्टाः। वस्तुतस्तु षट्चतुर्द्व्यङ्गुलेति समुच्चितमेवायामादिष्वन्वेति। तदुक्तं पञ्चरात्रे—

अर्काङ्गुलोच्छ्रयां योनिं विदध्यात् तावदायताम्।

अन्यत्रापि—उत्सेधायामतस्तुल्या योनिः स्याद्वा दशाङ्गुला।

इदमपि वशिष्ठसंहितायामुक्तं स्थूलमेखलापक्षे। नारदीये तु—

कुण्डत्र्यंशेन विस्तारो योनेरुच्छ्रायतोऽङ्गुला।

कुण्डार्धेन तु दीर्घा स्यादित्येकाङ्गुलतोच्चता॥

उक्ता। त्रैलोक्यसारेऽपि—

दैर्घ्यात् सूर्याङ्गुला योनिस्त्र्यंशोना विस्तरेण तु।

एकाङ्गुलोच्छ्रिता सा त्विति।

पिङ्गलामतेऽपि—विस्तारोऽष्टाङ्गुलो योनेरुच्छ्रायोऽङ्गुलसम्मितः।

अष्टाङ्गुलविस्तारत्वं चादिभागे—अग्रे सङ्कुचितत्वादश्वत्थपत्रवदित्युक्तेः।

त्रैलोक्यसारे—……………प्रविष्टाभ्यन्तरे तथा।

कुम्भद्वयसमायुक्ता चाश्वत्थदलवन्मता॥

वायवीयसंहितायामपि—

मेखलां मध्यतः कुर्यात् पश्चिमे दक्षिणेऽपि वा।

शोभनां मध्यतः किञ्चिन्निम्नामुन्मूलिकां शनैः॥

अग्रेण कुण्डाभिमुखीं किञ्चिदुत्सृष्टमेखलाम्।

शारदायां—एकाङ्गुलं तु योन्यग्रं कुर्यादीषदधोमुखम्।

अग्रैकांशेन विस्तारोन्नतिशालिनी योन्युपरि परितो नेमिरपि कार्या। तदुक्तं रामवाजपेयिना—कुण्डं व्यासदलायताऽथ वितता त्र्यंशेन तुङ्गा चतु-

र्विंशांशेन च तावता परिधिना योनिः समन्ताद् युता।

तावन्माननिजाग्रकेण विशती कुण्डान्तरेऽन्तर्विला

साऽधोवृत्तदलद्वयेन रुचिरा चाश्वत्थपत्राकृतिरिति॥

अन्तर्विलेति। यथा श्रुतिघृतधारणार्थं विलमेवं विलवतीत्यर्थः। अधोवृत्तेति। मूलभागे कुम्भाकारवृत्तार्धद्वययुतेत्यर्थः।

## अथ नालम्

शारदायां—स्थलादारभ्य नालं स्याद् योन्या मध्ये सरन्ध्रकम्।

पञ्चरात्रेऽपि—स्थलादारभ्य नालं स्याद् बाह्यमेखलया समम्॥

प्रयोगसारे तु—योन्याः पश्चिमतो नालमायामे चतुरङ्गुलम् ।
त्रिद्व्येकाङ्गुलविस्तारं क्रमान्न्यूनाग्रमिष्यते ॥ इत्युक्तम् ।
चतुरङ्गुलतोत्सेध-विस्तारा बाह्यमेखला ।
सलग्ना चतुरस्रा नालमूले वेदिः कार्येति सम्प्रदायः ।

## अथ नाभिलक्षणम्

शारदायाम्—कुण्डानां कल्पयेदन्तर्नाभिमम्बुजसन्निभम् ।
तत्तत्कुण्डानुरूपं वा मानमस्य निगद्यते ॥
मुष्ट्यरत्न्येकहस्तानां नाभिरुत्सेधतारतः ।
द्वित्रिवेदाङ्गुलोपेता कुण्डेष्वन्येषु वर्धयेत् ॥
यवद्वयक्रमेणैव नाभिं पृथगुदारधीः ।
रामवाजपेयिना तु सर्वकुण्डानुगतमेकमेव लक्षणमुक्तम्—
कुण्डार्कांशस्तुङ्गतायां द्विनिघ्नः सव्यासा स्यान्नाभिता कल्पनीयः ।
शारदायां—त्वल्पान्तरत्वात् स्थूलदृष्ट्योक्तम् ।
शारदायां—योनिकुण्डे योनिमब्जकुण्डे नाभिं विवर्जयेत् ।
शारदायाम्—नित्यं नैमित्तिकं काम्यं स्थण्डिले वा समाचरेत् ।
अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समन्ततः ॥
यन्त्रपीठे—त्रिरस्रं चतुरस्रं च वितस्त्युच्छ्रायसंमितम् ।
सिकताद्यैर्विधातव्यं स्थण्डिलं हस्तमात्रकम् ।
द्विरङ्गुलोच्छ्रितो वप्रः प्रथमः परिकीर्त्तितः ॥
द्व्यङ्गुलोच्छ्रायसंयुक्तं वप्रभूमिमथोपरि ।
द्व्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः ॥
होमाधिके तत्रैव—सार्धद्विगुणिता वापि करणीं स्थण्डिलं तथा । इत्युक्तम् ।

## अथ स्रुग्लक्षणम्

शारदायाम्—प्रकल्पयेत् स्रुचं यागे वक्ष्यमाणेन वर्त्मना ।
श्रीपर्णी शिंशपाक्षीरशाखिष्वेकतमं गुरुः ॥
गृहीत्वा विभजेद्धस्तमात्रं षट्त्रिंशता पुनः ।
विंशत्यंशैर्भवेद् दण्डो वेदिस्तैरष्टभिर्भवेत् ॥
एकांशेन मितः कण्ठः सप्तभागमितं मुखम् ।
वेदिस्त्र्यंशेन विस्तारः कण्ठस्य परिकीर्त्तितः ॥

अग्रं कण्ठसमानं स्यान्मुखे मार्गं प्रकल्पयेत् ।
कनिष्ठाङ्गुलिमानेन सर्पिषो निर्गमाय च ॥
वेदिमध्ये विधातव्या भागेनैकेन कर्णिका ।
विदधीत बहिस्तस्या एकांशेनाऽभितोऽवटम् ॥
तस्य खातं त्रिभिर्भागैर्वृत्तमष्टांशतो बहिः ।
अंशेनैकेन परितो दलानि परिकल्पयेत् ॥
मेखला मुखवेद्योः स्वाग्नेमिरर्द्धांशमानतः ।
दण्डमूलाग्रयोः कुम्भौ गुणवेदाङ्गुलैः क्रमात् ॥
गण्डीयुगं यमांशैः स्याद्दण्डस्यानाह ईरितः ।
षड्भिरंशैः पृष्ठभागो वेद्याः कूर्माकृतिर्भवेत् ॥
हंसस्य वा हंसिनो वा पोत्रिणो वा लिखेन्मुखम् ।
मुखस्य पृष्ठभागेऽस्याः संप्रोक्तं लक्षणं स्रुचः ॥

श्रीपर्णी गाम्भारी । क्षीरशाखिनः अश्वत्थोदुम्बरवटप्लक्षाः ।
फेत्कारीतन्त्रे—कारस्करैणामलकीपलाशखदिरैरपि ।

सुवर्णरूप्यताम्रैर्वा अयोभिरपि कारयेत् ।

वायवीयसंहितायां—

स्रुक्स्रुवौ तैजसौ ग्राह्यौ न कांस्यायससीसकौ ।
यज्ञदारुमयौ वापि तान्त्रिकैः शिल्पिसंमतौ ॥
पर्णे वा ब्रह्मवृक्षादेरच्छिद्रे मध्य उच्छ्रिते ।

अत्रायसे विधिनिषेधौ क्रूरसौम्य-कर्मविषयौ । तदुक्तं तन्त्रान्तरे—

सौवर्णौ स्रुक्स्रुवौ स्यातां सौम्यकर्मणि सर्वतः ।
भवेतामायसावेतौ स्तम्भनादिषु कर्मसु ॥

अन्यत्रापि—तदलाभे पलाशस्य पर्णाभ्यां हूयते हविः ।

वशिष्ठसंहितायामपि—

पलाशपत्रे निश्छिद्रे रुचिरे स्रुक्स्रुवौ मतौ ।
विदध्याद् वाश्वत्थपत्रे संक्षिते होमकर्मणि ॥

हस्तमात्रमिति बाहुमात्रमित्यर्थः ।

स्रुचं बाहुप्रमाणेन होमार्थं विदधीत वै ।

इत्यगस्त्यसंहितावचनात् । 'षट्त्रिंशदङ्गुला स्रुक् स्यादि'ति फेत्कारिणीवच-नाच्च । वेदीत्र्यंशेन वेदीतृतीयभागेन नत्वंशत्रयेण वेदीपदवैयर्थ्यापत्तेः । अत्र दलानां

खननं नास्ति प्रमाणाभावात्। स्रुवमधिकृत्यैव मन्त्रमुक्तावल्याम्—

कण्ठाधः कारयेन्मार्गं विद्वानाज्यस्य निर्गमे।
वेधं च मुखतः कुर्यात् तप्तलोहशलाकया॥

वशिष्ठसंहितायां—शुषिरं कण्ठदेशे स्यात् विशेद् यावत् कनीयसी।

## अथ स्रुवलक्षणम्

शारदायाम्—स्रुचश्चतुर्विंशतिभिर्भागैरारचयेत् स्रुवम्।
द्वाविंशत्था दण्डमानमंशैरेतस्य कीर्त्तितम्॥
चतुर्भिरंशैरानाहः कर्षाज्यग्राहि तच्छिरः।
अंशद्वयेन निखनेत् पङ्के मृगपदाकृति॥
दण्डमूलाग्रयोर्गण्डी भवेत् कङ्कणभूषिता।
स्रुवस्य विधिराख्यात इति॥

गण्डी कलशः। 'मूलाग्रयोः कारयेद् द्वौ कुम्भौ चातिमनोहरावि'ति मन्त्रमुक्तावलीवचनात्।

## अथाङ्कुरार्पणम्

शारदायाम्—प्रागेव दीक्षादिवसात् सप्तभिर्विधिवद् दिनैः।
सर्वमङ्गलसम्पत्त्यै विदध्यादङ्कुरार्पणम्॥

सिद्धान्तशेखरे—

प्रतिष्ठायां च दीक्षायां स्नपने चोत्सवे तथा।
संप्रोक्षणे च शान्त्यर्थं विवाहे मौञ्जिबन्धने॥
सर्वमङ्गलकार्येषु कारयेदङ्कुरार्पणम्।
प्रतिष्ठादिवसात् पूर्वं नवमे सप्तमे दिने॥
पञ्चमे वा तृतीये वा सद्यो वा चाङ्कुरार्पणम्।

महाकपिलपञ्चरात्रेऽपि—

पुण्याहघोषणं कृत्वा ब्राह्मणैः सह देशिकः।
मङ्गलाङ्कुरसंरोपं कुर्यात् तत्रैव चाहनि॥
सप्तमान्नवमाद् वापि प्रागेव यज्ञकर्मणः।

तन्त्रान्तरेऽपि—शस्तयागदिवसात् तु पुरस्तात् सप्तमेऽहनि शुभे नवमे च।
पञ्चमेऽथ सुदिने सुमुहूर्त्ते मङ्गलाङ्कुरविधिं विदधीत॥

अन्यत्रापि—गुरुर्विशुद्धः प्रागेव शुद्धाहात् सप्तमेऽहनि।

सङ्कल्प्योपोष्य कर्त्तव्यमङ्कुरारोपणं शुभम् ॥
कुर्यान्नान्दीमुखं श्राद्धं पूर्वेद्युः स्वस्तिवाचनम् ।
स्वगृह्योक्तप्रकारेण तदेतद् विदधीत वै ॥

संहितायामपि—सर्वत्राभ्युदयश्राद्धमङ्कुरोत्पादनं तथा ।
आदावेव प्रकुर्वीत कर्मणोऽभ्युदयात्मनः ॥

शारदायाम्—मण्डपस्योत्तरे भागे शालां पूर्वापरायताम् ।
गूढां कुर्यात् ततस्तस्यां मण्डलं रचयेत् सुधीः ॥

इयञ्च दक्षिणैकद्वारवती ज्ञेया । तथा—

पञ्चहस्तप्रमाणानि पञ्चसूत्राणि पातयेत् ।
पूर्वापरायतान्येषामन्तरं द्वादशाङ्गुलम् ॥
दक्षिणोत्तरसूत्राणि तद्वदेकादशाऽर्पयेत् ।
पदानि तत्र जायन्ते चत्वारिंशत् प्रमार्जयेत् ॥
पङ्क्तया वीथीश्चतस्रोन्तश्चतुष्कोभयपार्श्वयोः ।
वीथ्यौ द्वे च चतुःकोष्ठत्रयमत्राऽवशिष्यते ॥

प्रयोगसारेऽपि—

प्रसार्यास्फोटयेत् सूत्रं यथा याम्योत्तरायतम् ।
पञ्चहस्तप्रमाणेन द्वे द्वे पार्श्वे च पातयेत् ॥
तद्वत् पूर्वोक्तमानेन द्वादशद्वादशाङ्गुले ।
प्राक् प्रत्यक् च समं पश्चात् सूत्राण्येकादश क्रमात् ॥
पातयेत् तासु रेखासु पूर्वसूत्रान्तरान्तरम् ।

शारदायाम्—पदानि रञ्जयेत् तानि श्वेतपीतारुणासितैः ।
रजोभिः श्यामलेनाऽथ वीथीरापूरयेत् सुधीः ॥

प्रपञ्चसारे तु—'पीतारक्तसितासितं प्रतिपदं वह्न्यादिशर्वान्तकमि'ति रञ्जनक्रमोऽप्युक्तः । शारदायाम्—

पात्राणि त्रिविधान्याहुरङ्कुरार्पणकर्मसु ।
पालिकाः पञ्चमुख्यश्च शरावाश्च चतुः क्रमात् ॥
प्रोक्ताः स्युः सर्वतन्त्रज्ञैर्हरिब्रह्मशिवात्मकाः ।
एषामुच्छ्राय उत्सेधः षोडशद्वादशाष्टभिः ॥
अङ्गुलैः क्रमशस्तानि शुभान्यावेष्ट्य तन्तुना ।
प्रक्षाल्य देशिकस्तेषु पदेष्वाहितशालिषु ॥

सुगन्धदर्भकूर्चेषु पश्चिमादि निवेशयेत् ।

महाकपिलपञ्चरात्रे—

पालिकावक्त्रविस्तारः षोड़शाङ्गुल उच्यते ।
भवेत् कण्ठविलं वा स्यात् तदष्टाङ्गुलविस्तृतम् ॥
पादपीठस्य विस्तारं षड़ङ्गुलमुदाहृतम् ।
चतुरङ्गुल उत्सेधस्तत्सन्धिश्चाङ्गुलं भवेत् ॥
तत्सन्धेस्तु भवेन्नाहं पादपीठार्द्धमेव च ।
भवेत् पञ्चमुखी चैवं घटिका सर्वकामदा ॥
चतुरङ्गुलविस्ताराण्याहुर्वक्त्राणि पञ्च वै ।
चत्वारि च चतुर्दिक्षु ऊर्ध्वमेकं यथाविधि ॥
घटिकायामविस्तारो द्वादशाङ्गुल उच्यते ।
आचार्या कथयन्त्येके षोड़शाङ्गुलमेव च ॥
द्वादशाङ्गुलविस्तारं शरावस्य मुखं स्मृतम् ।
चतुरङ्गुलविस्तारमधस्तान्मूलमुच्यते ॥

अन्यत्रापि—तालमात्रमिह पञ्चमुखी स्याद् व्यासतोच्छ्रयमिता घटिका स्यात् ।
दिक्षु तन्मुखचतुष्टयमेकं मध्यतस्तु समवर्त्तितभागम् ॥
तालविस्तृतमुखं तु शरावं व्यासतोच्छ्रयगतार्धमिताङ्घ्रि ।
दण्डमस्य चतुरङ्गुलनाहं कण्ठमस्य विलवर्जमुदग्रम् ।
सम्भवे कनकरूप्यताम्रोतो मार्त्तिकान्यभिनवान्यथवा स्युः ॥

प्रयोगसारे—..................तेषु पात्राणि विन्यसेत् ।
वह्न्यादीशानपर्यन्तं चतुष्केषु पृथक् पृथक् ॥

सारस्वतमते—प्रोक्तेषु तेषु पात्रेषु ब्रह्मविष्णुशिवान् यजेत् ।

सिद्धान्तशेखरेऽपि—

संपूजयेच्छरावेषु रुद्रं चन्दनपुष्पकैः ।
पालिकासु तथा विष्णुं ब्रह्माणं घटिकासु च ॥

शारदायाम्—करीषबालुकामृद्भिस्तानि पात्राणि पूरयेत् ।

प्रयोगसारे—मृद्बालुकाकरीषैश्चोर्ध्वतः पात्राणि पूरयेत् ।

मृत्तिकायां विशेषः सिद्धान्तशेखरे—

गन्धादिभिश्च कुद्दालं पूजयित्वा दिनान्तरे ।
गीतनृत्यसमायुक्तं गजवाजिसमन्वितम् ॥

गुर्वादयो रथारूढा गजारूढास्तथाऽपरे ।
गत्वा तीरं तड़ागस्य नद्याः पुष्पवनस्य वा ॥
तत्र शुद्धं भुवो भागं दर्भैः संमृज्य चास्त्रतः ।
अभ्युक्ष्य चार्घतोयेन तत्तन्मन्त्रमनुस्मरन् ॥
हृदा भूमिं समावाह्य गन्धपुष्पैः समर्चयेत् ।
कुद्दालीमस्त्रमन्त्रेण खात्वा भूमिमथो मृदम् ॥
गृहीत्वा वामदेवेन पूरयेत् कांस्यपात्रके ।
हृदा मृदं च संमृज्य वस्त्रेणाच्छाद्य धारयेत् ॥
पुरं वा निलयं वापि सर्वमङ्गलनिःस्वनैः ।
गुरुः प्रदक्षिणं कृत्वा मण्डपं त्वानयेत् ततः ॥
एतत् कर्म दिवाकाले कुर्याद्रात्रौ न बुद्धिमान् ।

शारदायाम्—सुधाबीजेन बीजानि दुग्धैः प्रक्षाल्य तन्त्रवित् ।
मूलमन्त्राभिजप्तानि पञ्चघोषपुरःसरम् ॥
आशीर्वाग्भिर्द्विजातीनां मङ्गलाचारपूर्वकम् ।
निर्वपेत् तेषु पात्रेषु देशिको यतमानसः ॥

सारस्वतमते तु—
बीजानि तानि प्रक्षाल्य जलैः क्षीरेण च क्रमात् ।

इति प्रथमतो जलेन प्रक्षालनमुक्तम् । सिद्धान्तशेखरे—
बीजमुख्येन मूलेन प्राङ्मुखो वाऽप्युदङ्मुखः ।
वापयेत् सर्वबीजानि पालिकादिष्वनुक्रमात् ॥
बीजानामधिपः सोमस्तस्माद्रात्रौ तु निर्वपेत् ।

बीजमुख्येनेति । बीजं बीजाक्षरं मुख्यमादौ यस्य तेनेत्यर्थः । सारस्वतमते—
बीजेभ्यो दैवतेभ्यश्च स रात्रौ कान्तिमान् यतः ।
तस्माद् गुरुस्तु बीजानि निशायामेव वापयेत् ॥

शारदायाम्—शालीश्यामाढ़कीमुद्ग-तिलनिष्पावसर्षपाः ।
कुलत्थकङ्गुमाषाश्च बीजान्यङ्कुरकर्मणि ॥

सारस्वते—स्कन्दं प्रियङ्गौ निष्पावे वायुमग्निं कुलत्थके ।
आढ़क्यां निर्ऋतिं सोमं मुद्गे वैवस्वतं तिले ॥
प्रजापतिं शालीबीजे त्वनन्तं सर्षपेऽर्चयेत् ।
इन्द्रं श्यामे तु मासे च वरुणं तु नगात्मजे ।

सिद्धान्तशेखरे—सोमं संपूजयेन्नित्यमधिवासदिनावधि ।
अधिवासदिने प्राप्ते सोममुद्वासयेद् गुरुः ॥

प्रयोगसारे—त्र्यम्बकाय च शर्वाय शङ्कराय शिवाय च ।
सर्वलोकप्रधानाय शाश्वताय नमो नमः ॥
विकीर्याऽनेन मन्त्रेण हरिद्राचूर्णमिश्रितम् ।
तोयं प्रवर्षयेत् तेषु सिञ्चेत् तोयैर्दिनं प्रति ॥

शारदायाम्—हरिद्राद्भिः समभ्युक्ष्य वस्त्रैराच्छाद्य देशिकः ।
बलिं त्रिविधपात्राणां दिक्षु पूर्वादितः क्षिपेत् ॥
प्रणवाद्यैर्नमोऽन्तैश्च रात्रौ रात्रीशनामभिः ।

वस्त्रैरिति बहुवचनं कपिञ्जलाधिकरणन्यायेन त्रित्वपरम् । तेन चतुष्टयं चतुष्टय-मेकैकेन वस्त्रेणाच्छादयेदिति फलितम् । तथा—

भूतानि पितरो यक्षा नागा ब्रह्मा शिवो हरिः ।
सप्तानामपि रात्रीणां देवताः समुदीरिताः ॥
भूतेभ्यः स्युर्लाजतिल-हरिद्रादधिसक्तवः ।
सान्नाः पितृभ्यः सतिलास्तण्डुलाः परिकीर्त्तिताः ।
करम्भलाजा यक्षेभ्यो नारिकेलोदकान्विताः ।
सक्तुपिष्टं च नागेभ्यो ब्रह्मणे पङ्कजाक्षतम् ॥
सापूपमन्नं शर्वाय विष्णवे स्याद् गुडौदनम् ।

नवरात्रपक्षे—'वैष्णवं च दौग्धान्नम् । कृशरं च वैष्णवेयं यदि नवरात्रं क्रमेण बलिरुक्तः ॥' इत्याचार्यैरुक्तम् । इदं चाद्यदिनद्वये बोध्यम् । पञ्चदिनपक्षे यक्षमारभ्य दिनत्रयपक्षे ब्रह्माणमारभ्य बलिः । शारदायाम्—

ततो लोकेश्वरेभ्योऽपि विधिवद् वितरेद् बलिम् ।

सारस्वतमते—प्ररूढान्यङ्कुराण्यन्यो न वीक्षेत कदाचन ।
आचार्य एव प्रविशेत् तच्छिष्यो वा तदाज्ञया ॥

सिद्धान्तशेखरे—

यजमानाभिवृद्ध्यर्थ-मङ्कुराणि परीक्षयेत् ।
सम्यगूर्ध्वं प्ररूढानि कोमलानि सितानि च ।
धूम्रवर्णान्यपूर्णानि तथा तिर्यग्गतानि च ॥
श्यामलानि च कुब्जानि वर्जयेदशुभानि च ।
अवृष्टिं कुरुते कृष्णं धूम्राभं कलहं तथा ॥

अपूर्णं जननाशं च दुर्भिक्षं श्यामलाङ्कुरम् ।
तिर्यग्गते भवेद् व्याधिः कुब्जे शत्रुभयं भवेत् ॥
अशुभे चाङ्कुरे जाते शान्तिहोमं समाचरेत् ।
मूलमन्त्रेण जुहुयाद् गुरुर्मूर्त्तिधरैः सह ॥
अघोरास्त्रेण चास्त्रेण शतं वाथ सहस्रकम् ।

सारस्वतमते—प्ररूढैरङ्कुरैः कर्त्तुर्निर्दिशेच्च शुभाशुभम् ।
श्यामैः कृष्णैरङ्कुरैरर्थहानिस्तिर्यग्रूढैर्व्याधिरान्दोलितैस्तैः ।
कुब्जैर्दुःखं दुष्प्ररूढैर्मृतिश्च रोगा भुग्नैः स्थानदेशेष्टहानिः ॥ इति
अङ्कुरार्पणलक्षणं समाप्तम्

इति महामहोपाध्याय-ठक्कुर-श्रीनरसिंह-विरचिते
तारामक्ति-सुधार्णवे
द्वितीयस्तरङ्गः

# तृतीयस्तरङ्गः

## अथ दीक्षा

शारदायाम्—चतुर्विधा सा सन्दिष्टा क्रियावत्यादिभेदतः।
क्रियावती वर्णमयी कलात्मा वेधमय्यपि ॥
ताः क्रमेणैव कथ्यन्ते तन्त्रेऽस्मिन् सम्पदावहाः।
देशिको विधिवत् स्नात्वा कृत्वा पौर्वाह्णिकीः क्रियाः ॥
यायादलंकृतो मौनी यागार्थं यागमण्डपम्।

गौतमीये—शिष्यः स्नातः सुवेशश्च सर्वद्रव्यसमन्वितः।
आचार्यं वृणुयाद् भक्त्या वस्त्रालङ्कारभूषणैः ॥
कुर्यान्नान्दीमुखं श्राद्धं ब्राह्मणान् परितोषयेत्।
गोभूहिरण्यवस्त्राद्यैस्तोषयेद् गुरुमात्मनः ॥
यथा ददाति सन्तुष्टः प्रसन्नो वरदो मनुम्।

तथा—ऋत्विजं वृणुयात् तत्र दशपञ्चद्वयं तथा।

यामले—तत आचमनं कृत्वा शिष्योऽपि विजितेन्द्रियः।
आजन्मपापनाशार्थमुत्सृजेत् तिलकाञ्चनम् ॥

शारदायाम्—गुरुमुपक्रम्य—
आचम्य विधिना तत्र सामान्यार्घ्यं विधाय च।
द्वारमस्त्राम्बुभिः प्रोक्ष्य द्वारपूजां समाचरेत् ॥

स्नानसन्ध्यातर्पणद्वारपूजादिकं नित्यार्चनतरङ्गे वक्ष्यते। तथा—
किञ्चित् स्पृशन् वामशाखां देहलीं लङ्घयेद् गुरुः।
अङ्गं संकोचयनन्तः प्रविशेद् दक्षिणाङ्घ्रिणा ॥
नैर्ऋत्यां दिशि वास्त्वीशं ब्रह्माणं च समर्चयेत्।
पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयेद् यागमण्डपम् ॥
चतुष्पथान्तं तच्छुद्धिं विदध्याद् वीक्षणादिभिः।
वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ॥
तेनैव ताडनं कुर्याद् वर्मणाऽभ्युक्षणं मतम्।
चन्दनागुरुकर्पूरैर्धूपयेदन्तरं सुधीः ॥

विकिरान् विकिरेत् तत्र सप्तजप्तांश्छराणुना ।
लाजचन्दनसिद्धार्थ-भस्मदूर्वाङ्कुराक्षताः ॥
विकिरा इति सन्दिष्टाः सर्वविघ्नोघनाशकाः ॥
अस्त्रजप्तेन दर्भाणां मुष्टिना मार्जयेच्च तान् ।
ईशस्य दिशि वर्धन्या आसनाय प्रकल्पयेत् ॥

सोमशम्भौ तु—

विकिरान् शुद्धलाजान् वा सप्तशस्त्राभिमन्त्रितान् ।
अस्त्राम्बुप्रोक्षितानेतान् कवचेनाऽवगुण्ठितान् ॥
नानाप्रहरणाकारान् विघ्नौघविनिवारकान् ।
दर्भाणां तालमानेन कृतान् षट्त्रिंशता दलैः ॥
सप्तजप्तांच्छिवास्त्रेण मुष्टिं रोधय सत्तम ॥ इत्युक्तम् ।

शारदायाम्—पुण्याहं वाचयित्वा तु ब्राह्मणान् परितोष्य च ।
उक्तेषु मण्डलेष्वेकं वेदिकायां समालिखेत् ॥

मण्डलं सर्वतोभद्रादि । सर्वतोभद्रमण्डलं यथा शारदायाम्—

चतुरस्रे चतुष्कोष्ठे कर्णसूत्रसमन्विते ।
चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम् ॥
मध्ये मध्ये यथा मत्स्या भवेयुः पातयेत् तथा ।
पूर्वापरायते द्वे द्वे मन्त्री याम्योत्तरायते ॥
पातयेत् तेषु मत्स्येषु समं सूत्रचतुष्टयम् ।
पूर्ववत् कोणकोष्ठेषु कर्णसूत्राणि पातयेत् ॥
यावच्छतद्वयं मन्त्री षट्पञ्चाशत्पदान्यपि ।
तावत् तेनैव विधिना तत्र सूत्राणि पातयेत् ॥
षट्त्रिंशतापदैर्मध्ये लिखेत् पद्मं सुलक्षणम् ।
बहिः पङ्क्त्या भवेत् पीठं पङ्क्तियुग्मेन वीथिका ॥
द्वारशोभोपशोभास्रान् शिष्टाभ्यां परिकल्पयेत् ।
शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत् ॥
पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः ।
तन्मध्यं विभजेद् वृत्तैस्त्रिभिः समविभागतः ॥
आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम् ।
तृतीयं तत्र पत्राणामुक्तांशेन दलाग्रकम् ॥

बाह्यवृत्तान्तरालस्य मानं यद् विधिना सुधीः ।
निधाय केशराग्रेषु परितोऽर्द्धनिशाकरान् ॥
लिखित्वा सन्धिसंस्थानि तत्र सूत्राणि पातयेत् ।
दलाग्राणां च यन्मानं तन्मानं वृत्तमालिखेत् ॥
तदन्तराले तन्मध्य-सूत्रस्योभयतः सुधीः ।
आलिखेद् बाह्यहस्तेन दलाग्राणि समन्ततः ॥
युग्मशो दलमूलेषु केशराणि प्रकल्पयेत् ।
एतत् साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः ॥
पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत् ।
अवशिष्टैः पदैर्विद्वान् पीठगात्राणि कल्पयेत् ॥
पदानि वीथिसंस्थानि मार्जयेत् पङ्क्तिभेदतः ।
दिक्षु द्वाराणि रचयेद् द्विचतुःकोष्ठकैस्ततः ॥
पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः ।
उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनन्तरम् ॥
अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम् ।
रञ्जयेत् पञ्चभिर्वर्णैर्मण्डलं तन्मनोहरम् ॥
पीतं हरिद्राचूर्णः स्यात् सितं तण्डुलसम्भवम् ।
कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम् ॥
विल्वादिपत्रजं श्याममित्युक्तं पञ्चवर्णकम् ।

अन्यत्रारुणान्तरमुक्तम्—

तथा दोषारजः क्षारसंयुक्तं रक्तमुच्यते ।

इति । श्यामान्तरमुक्तं प्रयोगसारे—

श्यामं श्यामच्छदोद्भूतं रजः प्रोक्तं स्वकर्मसु ।

इति । तन्त्रान्तरेषु विशेषः—

शक्तस्तु वाञ्छेद् यदि सिद्धिमुग्रां तद्वर्णरत्नैरिह मण्डलानि ।
आभूषयेन्मौक्तिकपुष्परागमाणिक्यनीलैर्हरितैश्च रत्नैः ॥

महाकपिलपञ्चरात्रे तु—अस्यावश्यकतोक्ता—

पीतं क्षितिस्तु विज्ञेया शुक्लमापः प्रकीर्त्तिताः ।
तेजो वै रक्तवर्णं स्याच्छ्यामं वायुः प्रकीर्त्तितः ॥
आकाशं कृष्णवर्णञ्च पञ्चमं तु महामुने ।

सितेऽधिदेवता रुद्रो रक्ते ब्रह्माधिदेवता ॥
पीतेऽधिदेवता विष्णुः कृष्णे चैवाऽच्युतः स्मृतः ।
श्यामेऽधिदेवता नागः समाख्यातो मयाऽनघ ॥
शुक्लं ग्रहापदं हन्ति रक्तं क्रूरगणोद्भवाम् ।
कृष्णं सर्वासुरोत्साहं नीलं वैनायकीं तथा ॥
पैशाचीं राक्षसीं चैव निहन्ति हरितं रजः ।
तस्माद्धोमेऽभिषेके च यागे चैव विशेषतः ॥
वर्त्तयेन्मण्डलं तैस्तु देवसन्तुष्टिकारकम् ।

शारदायाम्—अङ्गुलोत्सेधविस्ताराः सीमारेखा सिताः शुभाः ।
कर्णिकां पीतवर्णेन केशराण्यरुणेन च ॥
शुक्लवर्णेन पत्राणि तत्सन्धीन् श्यामलेन च ।
रजसा रञ्जयेन्मन्त्री यद्वा पीतैव कर्णिका ॥
केशराः पीतरक्ताः स्युररुणानि दलान्यपि ।
सन्धयः कृष्णवर्णाः स्युः पीतेनाऽप्यसितेन वा ॥
रञ्जयेत् पीठगर्भाणि पादाः स्युररुणप्रभाः ।
गात्राणि तस्य शुक्लानि वीथिषु च चतसृषु ॥
आलिखेत् कल्पलतिका दलपुष्पफलान्विताः ।
वर्णैर्नानाविधैश्चित्रैः सर्वदृष्टिमनोहराः ॥

गौतमीये तु—तद्बही रुचिरान् कुर्याच्चतुरः कल्पशाखिनः ।
ललितान् रूढकुसुमान् फलपल्लवशालिनः ॥
जलजैः स्थलजैश्चापि सुमनोभिः समन्वितान् ।
हंससारसकारण्ड-शुकभ्रमरकोकिलैः ॥
मयूरचक्रवाकाद्यैरारूढविटपान्तरान् । इत्युक्तम् ।

शारदायाम्—द्वाराणि श्वेतवर्णानि शोभा रक्ताः समीरिताः ।
उपशोभाः पीतवर्णाः कोणान्यसितभानि च ॥
त्रिस्रो रेखाः बहिः कुर्यात् सितरक्तासिताः क्रमात् ।
मण्डलं सर्वतोभद्रमेतत् साधारणं स्मृतम् ॥

वशिष्ठसंहितायान्तु विशेषः—
पीतं पूर्वे सितं देयं पश्चिमेऽप्युत्तरे तथा ।
रक्तं तु दक्षिणे कृष्णं पाटलं बहिसंस्थितम् ॥

नैर्ऋत्ये नीलवर्णं तु वायव्ये धूम्रवर्णकम् ।
ईशे गौरं विनिर्दिष्टमष्टपत्रेष्वयं क्रमः ॥

तत आसन उपविश्य भूतशुद्धिमातृकान्यासान्तर्यागजलार्घ्यस्थापनादि विधाय सर्वतोभद्रमण्डलकमलोपरि आधारशक्त्यादिपीठमन्त्रपर्यन्तं सम्पूज्य कलशस्थापनं कुर्यादिति सकलतन्त्रक्रमः। शारदायाम्—

हेमादिरचितं कुम्भमस्त्राद्भिः क्षालितान्तरम् ।
चन्दनागुरुकर्पूरधूपितं शोभनाकृतिम् ॥
आवेष्टिताङ्गं नीरन्ध्रं तन्तुना त्रिगुणात्मना ।
अर्चितं गन्धपुष्पाद्यैः कूर्चाक्षतसमन्वितम् ॥
नवरत्नोदरं मन्त्री स्थापयेत् तारमुच्चरन् ।

तन्त्रान्तरे—सप्तविंशतिदर्भाणां वेण्या ग्रन्थिविभूषितम् ।
वेष्टयेत् सर्वयज्ञेषु तत् कूर्चं परिकीर्त्तितम् ॥

शारदायाम्—ऐक्यं सङ्कल्प्य कुम्भस्य पीठस्य च विधानवित् ।
क्षीरद्रुमकषायेण पलाशत्वग्भवेन वा ॥
तीर्थोदकैर्वा कर्पूरगन्धपुष्पसुवासितैः ।
आत्माभेदेन विधिवन्मातृकां प्रतिलोमतः ॥
जपन्मूलमनुं तद्वत् पूरयेद् देवताधिया ।
शङ्खे क्वाथाम्बुसम्पूर्णे गन्धाष्टकमभीष्टदम् ॥
विलोड्य पूजयेत् तस्मिन्नावाह्य सकलाः कलाः ।
दश वह्नेः कलाः पूर्वं द्वादश द्वादशात्मनः ॥
कलाः शोड़श सोमस्य पश्चात् पञ्चाशतं कलाः ।
जपित्वा प्रतिलोमेन मूलमन्त्रं च मन्त्रवित् ॥
समाहितेन मनसा ध्यायन्मन्त्रस्य देवताम् ।
प्राणप्रतिष्ठां कुर्वीत तत्र तत्र विचक्षणः ॥
कलात्मकं शङ्खसंस्थं क्वाथं कुम्भे च निक्षिपेत् ।
चन्दनागुरुकर्पूर-चोरकुङ्कुमरोचनाः ॥
जटामांसीकपियुता शक्तेर्गन्धाष्टकं विदुः । इति ।

हेमादीति । आदिपदाद्राजतादि । चोरो भट उरग इति प्रसिद्धः । कपिर्गोढी-मनेति प्रसिद्धः । महाकपिलपञ्चरात्रे—

सौवर्णं कलशं रम्यं रौप्यं ताम्रमथापि वा ।

निर्दोषं मृन्मयं वापि चन्दनेन विलेपितमिति ॥

कलशपरिमाणं तु—पञ्चाशदङ्गुलव्यास उत्सेधः षोडशाङ्गुलः ।

कलशानां प्रमाणं तु मुखमष्टाङ्गुलं भवेत् ॥

इति तन्त्रान्तरे प्रोक्तम् । वायवीयसंहितायामपि—

सौवर्णं राजतं वापि ताम्रं मृन्मयमेव वा ।

गन्धपुष्पाक्षताकीर्णं कुशदूर्वाङ्कुरार्चितम् ॥

सितसूत्रावृतं कण्ठे नववस्त्रयुगावृतम् ।

तन्तौ विशेषस्तन्त्रान्तरे—

कन्याकर्त्तितसूत्रेण त्रिगुणेन च वर्मणा ।

गुणत्रयात्मकेनैव वेष्टयेदभितः सममिति ॥

शारदायाम्—पञ्चादश्वत्थपनस-चूतकोमलपल्लवैः ।

इन्द्रवल्लीसमाबद्धैः सुरद्रुमधिया गुरुः ॥

कुम्भवक्त्रं पिधायाऽस्मिंश्चषकं सफलाक्षतम् ।

संस्थापयेत् फलधिया विधिवत् कल्पशाखिनाम् ॥

ततः कुम्भं निर्मलेन क्षौमयुग्मेन वेष्टयेत् ।

मूलेन मूर्त्तिमिष्ट्वास्मिंच्छाखायां कल्पशाखिनाम् ॥

आवाह्य पूजयेत् तस्यां मन्त्री मन्त्रस्य देवताम् ।

तथा—अङ्गानि लोकपालान्तं यजेदावरणान्यपि ।

पञ्चायतनदीक्षापक्षे पञ्चकलशान् संस्थाप्य तत्तद्देवतामावाह्य पूजयेत् । 'प्रोक्तेनैवं कलशविधिनैकेन वानेककुम्भैरि'ति प्रपञ्चसारवचनात् । तत्र देवतास्थापनक्रम उक्तो ज्ञानमालायाम्—

यदा तु शङ्करं मध्ये ऐशान्यां श्रीपतिं यजेत् ।

आग्नेय्यां च तथा हंसं नैर्ऋत्यां पार्वतीसुतम् ॥

वायव्याञ्च सदा पूज्या भवानी भक्तवत्सला ।

यदा तु मध्ये गोविन्दमैशान्यां शङ्करं यजेत् ॥

आग्नेय्यां गणनाथं च नैर्ऋत्यां तपनं तथा ।

वायव्यामम्बिकां चैव यजेन्मन्त्री समाहितः ॥

सहस्रांशुं यदा मध्ये ऐशान्यां पार्वतीपतिम् ।

आग्नेय्यामेकदन्तञ्च नैर्ऋत्यामच्युतं यजेत् ॥

वायव्यां पूजयेद् देवीं भोगमोक्षैकभूमिकाम् ।

भवानीं तु यदा मध्ये ऐशान्यां माधवं यजेत् ॥
आग्नेय्यां पार्वतीनाथं नैर्ऋत्यां गणनायकम् ।
प्रद्योतनं तु वायव्यामाचार्यस्तु प्रपूजयेत् ॥
हेरम्बं तु यदा मध्ये ऐशान्यामच्युतं यजेत् ।
आग्नेय्यां पञ्चवक्त्रं तु नैर्ऋत्यां जगदम्बिकाम्॥
वायव्यां द्युमणिं चैव यजेन्मन्त्री ह्यतन्द्रितः ।
स्वस्थानवर्जिता देवाः शोकदुःखभयप्रदाः ।
तन्मण्डलस्थितो राजा साधकश्च विनश्यति ।

तन्त्रान्तरे—शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करे
भास्ये नागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः ।
देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरा-
र्येनाः शङ्करभागतो निगदिता व्यस्तास्तु ते हानिदाः ॥

पूजाक्रमस्तु तन्त्रान्तरे—
मुख्ये पुष्पाञ्जलिं दत्त्वा गणेशाद्यर्चनं भवेत् ।
गणेश एव मुख्यश्चेत् तत्र सूर्यक्रमाद् भवेत् ॥ इति ।

चामुण्डातन्त्रे—
श्यामायां भैरवी तारा छिन्नमस्ता तु भैरवे ।
मञ्जुघोषे तथा रौद्रे पञ्चाङ्गो नेष्यते बुधैः ॥

पञ्चाङ्गो यागः पञ्चायनदीक्षारूपः । शारदायाम्—
दक्षिणे स्थण्डिलं कृत्वा तत्राधाय हुताशनम् ।
संस्कृत्य विधिवद् विद्वान् वैश्वदेवं समाचरेत् ॥
तत्र सम्पूज्य गन्धाद्यैर्देवतामुक्तविग्रहाम् ।
तारव्याहृतिभिर्हुत्वा मूलमन्त्रेण मन्त्रवित् ॥
सर्पिष्मता पायसेन पञ्चविंशतिसंख्यया ।
हुत्वा व्याहृतिभिर्भूयो गन्धाद्यैः पुनरर्चयेत् ॥
तां योजयित्वा पीठस्थमूर्त्तौ वह्निं विसर्जयेत् ।
अवशिष्टेन हविषा विकिरेत् परितो बलिम् ॥
देवतायाः पार्श्वदेभ्यो गन्धपुष्पाक्षतान्वितम् ।

अत्र वैश्वदेवपदेन नित्यहोम एव उच्यते । सर्वदेवसम्बन्धित्वव्युत्पत्तेरिति कौमुदीकृतः । नित्यहोमाद् भिन्न एवायं वह्निसंस्कारश्रुतेः । "अग्न्याधानादिकं कर्म

नित्यहोमे न विद्यते" इति वशिष्ठसंहितायां नित्यहोमे वह्निसंस्कारनिषेधात्। एतद्धोमानन्तरं च लौकिकाग्नौ—

परिषिच्य ततो देवि नित्यहोमं समाचरेत्।
मूलमन्त्रेण देवेशि जुहुयात् पञ्चाहुतीः क्रमात्॥
प्राणापानौ तथा व्यान उदानश्च समानकः।
एतत्स्वरूपं जानीयादाहुतीनां च पञ्चकम्॥
षडाहुतीः षडङ्गेषु नित्यहोमोऽयमीरितः।

इति ज्ञानार्णवोक्तनित्यहोमः कार्य इति राघवभट्टाः। तन्न। अत्र तन्त्रान्तरे क्वचिदपि वैश्वदेवस्य कर्मान्तरत्वाश्रुतेः।

नित्ये नैमित्तिके काम्ये एतदग्निमुखं स्मृतम्।

इत्यगस्त्यसंहितायां नित्यहोमेऽपि वह्निसंस्कारश्रुतेश्च। तस्मान्नित्यहोमे शारदाज्ञानार्णवोक्तक्रमयोर्विकल्प एवेति तत्त्वम्। शारदायाम्—

सहस्रावृत्य संजप्य मूलमन्त्रमनन्यधीः।
तं जपं सर्वसम्पत्त्यै देवतायै समर्पयेत्॥
ततः शम्भोर्दिशि गुरुर्विकिरे पूर्वसंचिते।
हेमवस्त्रादिसंयुक्तां कर्करीं तोयपूरिताम्॥
संस्थाप्य तस्यां सिंहस्थां खड्गखेटकधारिणीम्।
घोररूपां पश्चिमास्यां पूजयेदस्त्रदेवताम्॥
चलासनेन संपूज्य तामादाय गुरुः पुनः।
रक्षेति लोकपालानां नालमुक्तेन वारिणा॥
देवाज्ञां श्रावयन्नन्तः परिवृत्य प्रदक्षिणम्।
अस्त्रमन्त्रं समुच्चार्य यथापूर्वं निवेशयेत्॥
अभ्यर्च्य भूयो गन्धाद्यैरस्त्रं तत्र स्थिरासने।
ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत्॥
अस्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके।
तण्डूलान् शालिसम्भूतान् मूलमन्त्राभिमन्त्रितान्॥
प्रसृतीनां पञ्चदश क्षिप्त्वा चास्त्रमनुं जपेत्।
प्रक्षाल्य पात्रवदनं पिधाय कवचाणुना॥
प्राङ्मुखो मूलमन्त्रेण देशिकेन्द्रश्चरुं पचेत्।
स्रुवेणाज्येन संस्विन्ने दद्यात् तत्राभिघारणम्॥

मूलेन पश्चात् तत्पात्रं कवचेनाऽवतारयेत् ।
अस्त्रजप्ते कुशास्तीर्णे मण्डले विधिवद् गुरुः ॥
तं विभज्य त्रिधा भागमेकं देवाय कल्पयेत् ।
अन्यमग्नौ प्रजुहुयादपरं देशिकः स्वयम् ॥
शिष्येण सार्धं भुञ्जीत विहिताचमनस्ततः ।

संस्कृत इति । अयञ्च संस्कार आचार्यकुण्ड एव । आचार्यकर्त्तव्यत्वात् । तदुक्तं प्रयोगसारे—कुण्डमस्त्रेण संप्रोक्ष्य तत्राधाय हुताशनम् ।
सन्निधानादिकं देवं यथावत्पूजयेत् ततः ॥
कृत्वा तण्डुलनिर्वापं तस्मिन् क्षीरे पचेच्चरुम् ।

इति । अन्यमग्नौ प्रजुहुयादिति । आचार्य ऋत्विक् चेति शेषः । तत्क्रमस्तु तत्रैव आचार्यकुण्डे आचार्यकर्त्तव्याग्निसंस्कारमुक्त्वा—
ततोऽन्येष्वपि कुण्डेषु संस्कृतेषु यथाविधि ।
आचार्यो विहरेदग्निं पूर्वादिषु समाहितः ।
ऋत्विजो गन्धपुष्पाद्यैरङ्गाद्यावरणान्विताम् ।
तन्त्रोक्तदेवतामिष्ट्वा पञ्चविंशतिसंख्यया ॥
मूलेनाज्येन जुहुयुः साज्येन चरुणा तथा ।

इत्युक्तः । कुण्डान्तरसंस्कारस्तु ऋत्विक्कर्त्तृकः । शिष्येणेति । अत्र विशेषः सोमशम्भौ—चरोस्तृतीयभागं तु ग्रासत्रितयसम्मितम् ।
अष्टग्रासप्रमाणं वा दशनस्पर्शवर्जितम् ॥
पालाशे पुटके मुक्तौ भुक्तौ पिप्पलपत्रके ।
हृदा संभोजयेन्मन्त्री पूतैराचामयेज् जलैः ॥

शारदायाम्—आचान्तं शिष्यमानीय सकलीकृत्य देशिकः ।
तालप्रमाणं हृज्जप्तं क्षीरवृक्षादिसम्भवम् ॥
दन्तकाष्ठं तदा दद्याच्छिष्याय विनतात्मने ।
दन्तान् विशोध्य यत्नेन तत् प्रक्षाल्य विसर्जयेत् ॥

नारायणीये—दन्तकाष्ठं हृदा जप्तं क्षीरिवृक्षादिसम्भवम् ।
सम्मार्ज्य दन्तांस्तच्छित्वा प्रक्षाल्यैतद् भुवि क्षिपेत् ॥
दिक्षु पूर्वाद्यधोर्ध्वासु तस्याग्रपतनं क्रमात् ।
वृद्धिस्तापो मृतिर्वित्तं क्षयं शान्तिर्गदो धनम् ॥
सुखवृद्धिः परं दुःखं फलान्येतानि शंसति ।

वायवीयसंहितायामपि—त्यक्तं तद्दन्तधवनं दृश्यते गुरुणा यदि ।
प्रागुदक्पश्चिमैशाग्रं शिवमन्यच्छिवेतरम् ॥
अशस्ताशामुखे तस्मिन् गुरुस्तद्दोषशान्तये ।
शतमर्धं वा जुहुयात् तदर्धं मूलमन्त्रतः ॥

तन्त्रान्तरे—अथाऽत्र चूतवृक्षस्य द्वादशाङ्गुलमानतः ।
दन्तकाष्ठं प्रदातव्यं तद्दन्ताग्रविचर्वितम् ॥
ऊर्ध्वास्यं क्षेपयेत् तत्र मण्डले पीठमुन्नयेत् ।
पश्चिमोत्तररुद्रेन्द्रे शुभपातोऽन्यथाऽशुभः ॥
दुर्निमित्तविनाशाय जुहुयाच्छतमस्त्रतः ।

शारदायाम्—यथाविधि तमाचान्तं शिखाबन्धाभिरक्षितम् ।
विधाय सार्धममुना वेद्यां दर्भास्तरे गुरुः ॥
शयीत तस्यां तां रात्रिमधिवासः समीरितः ।

नारायणीये—पुनस्तं शिष्यमाचान्तं शिखाबन्धाभिरक्षितम् ।
कृत्वा वेद्यां सहानेन स्वपेद् दर्भास्तरे गुरुः ॥

पिङ्गलामते—स्वप्रमाणवमाश्रित्य स्वापयेत् पूर्वमस्तकम् ।

सोमशम्भावपि—गृहस्थान् दर्भशय्यायां पूर्वशीर्षास्त्ररक्षितान् ॥
हृदा सद्भस्मशय्यायां यतीन् दक्षिणमस्तकान् ॥

वायवीयसंहितायाम्—
देवस्य दक्षिणे भागे शिष्यं तमधिवासयेत् ।
आहतास्तरणास्तीर्णे सदर्भशयने शुचिः ॥
मन्त्रिते च शिवं ध्यायन् प्राक्शिरस्को निशि स्वपेत् ।
शिखाबद्धस्य सूत्रस्य शिखया तच्छिखां गुरुः ॥
आवेष्ट्याहतवस्त्रेण तमाच्छाद्य च वर्मणा ।
रेखात्रयं च परितो भस्मना तिलसर्षपैः ॥
कृत्वास्त्रजप्तैस्तद्बाह्ये दिगीशानां बलिं हरेत् ।

महाकपिलपञ्चरात्रे—
गुरुपादार्चनं कृत्वा उपवासी जितेन्द्रियः ।
दर्भशय्यां गतो रात्रौ दृष्ट्वा स्वप्नं निवेदयेत् ॥

योगिनीतन्त्रे—यज्जाग्रतो दूरमुदेति दैवमावृत्य मन्त्रान् प्रयतश्चिरेतान् ।
लब्धैकभुग्दक्षिणपार्श्वशायी स्वप्नं परीक्षेत यथोपदेशम् ॥

भगवन् देवदेवेश शूलभृद्‌ वृषवाहन ।
इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वतः ॥
एवं सुप्तः कुशास्तीर्णे ततः प्रयतमानसः ।
निशान्ते पश्यति स्वप्नं शुभं वा यदि वाऽशुभम् ॥

पिङ्गलामते—तारो हिलिद्वयं शूलपाणये द्विठ ईरितः ।
स्वप्नमानवमन्त्रोऽयं शम्भुना परिकीर्त्तितः ॥
नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने ।
वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥
स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः ।
क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर ॥

मन्त्रतन्त्रप्रकाशे—ॐ हृत्सकललोकाय विष्णवे प्रभविष्णवे ।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ।
स्वप्नमानवमन्त्रोऽयं कथितो नारदादिभिः ॥

नारदीये—परं ब्रह्म स्वरूपस्त्वमन्तश्चरसि विश्वधृक् ।
शुभाशुभगतिं देव स्वप्ने मे विनिवेदय ॥
इत्युच्चार्य नमस्कुर्याज्जानुभ्यामवनीं गतः ।
प्रसन्नो वाग्यतस्तस्मिन् शयीतेष्टं विचिन्तयेत् ॥

## अथ शुभस्वप्नाः

योगिनीतन्त्रे--त्रिविधं दर्शनं तस्य यथार्थमयथार्थकम् ।
अपाकजं यत् स्वस्थानां संयतानां हि दर्शनम् ॥
यथार्थमयथार्थं तदस्वस्थानां विकारजम् ।
अपाजकं मानसं च यथार्थफलमुच्यते ॥

आगमसिद्धान्ते—आद्ये वर्षाद् वत्सरार्धाद् द्वितीये यामे पाको वर्षपादात् तृतीये ।
यामे पाकः शर्वरीतुर्ययामे सद्यः पाको यो विसर्गेषु दृष्टः ॥

तथा—क्रूरेऽधमा मध्यमा स्याददृष्टे उत्तमोत्तमे ।
स्वप्ने पश्यति वै देवं निजेष्टं सर्वतामुखम् ॥
गुरुं प्रसादसुमुखं निर्मलं चन्द्रमण्डलम् ।
गङ्गां भागीरथीं भानुं लिङ्गिनं निगमेश्वरम् ॥
प्रसन्नां तत्र जानीयात् सिद्धिं स्वप्ननिदर्शने ।

नारदपञ्चरात्रे—क्षितिलाभः क्षतं चाब्धितरणं चाग्निपूजनम् ।

होमश्च ज्वलिते वह्नौ संग्रामे विजयस्तथा ॥
हंसकोकमयूराणां रथारोहणमेव च ।
महाकपिलपञ्चरात्रे—कन्यां छत्रं रथं दीपं प्रासादं कमलं नदीम् ।
कुञ्जरं वृषभं माल्यं समुद्रं फलिनं द्रुमम् ॥
पर्वतं च हयं मेध्यमाममांसं सुरासवम् ।
एवमादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥
यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥
नदीसमुद्रतरणमाकाशगमनं तथा ।
भास्करोदयनं चैव प्रज्वलन्तं हुताशनम् ॥
ग्रहनक्षत्रताराणां चन्द्रमण्डलदर्शनम् ।
हर्म्यस्यारोहणं चैव प्रासादशिरसोऽपि वा ॥
नागाश्ववृषभेन्द्राणां तरुशैलाग्ररोहणम् ।
विमानगमनं चैव सिद्धमन्त्रस्य दर्शनम् ॥
एवमादीनि संदृश्य नरः सिद्धिमवाप्नुयात् ।
स्वप्ने तु मदिरापानमाममांसस्य भोजनम् ॥
कृमिविष्ठानुलेपं च रुधिरेणाभिषेचनम् ।
भोजनं दधिभक्तस्य श्वेतवस्त्रानुलेपनम् ॥
सिंहासनं रथं यानं ध्वजं राज्याभिषेचनम् ।
रत्नान्याभरणादीनि दृष्ट्वा स्वप्ने प्रसीदति ॥
नारदपञ्चरात्रे—गुरुर्देवो द्विजः कन्या गोगजाश्वाश्च केशरी ।
दर्पणं शङ्खभेर्यौ च तन्त्रीवाद्यं च रोचनम् ॥
ताम्बूलभक्षणं चैव तथा वध्यभिवन्दनम् ।
सिद्धान्नमाममांसं च मद्यस्त्रीमदिरासवाः ॥
छत्रं यानं सितं वस्त्रं तथान्यच्छ्वेतचन्दनम् ।
माल्यमुक्ताफले हारः पूर्णः समुदितः शशी ॥
प्रचण्डकिरणः सूर्यो निम्नगाऽथ महोदधिः ।
प्रफुल्लपादपः शाली रोचना कुङ्कुमं मधु ॥
लाजाः सिद्धार्थका बीजं नवभाण्डं च पायसम् ।
उपासकोऽप्यथाचार्यो गायत्री वरसंगता ॥

सर्वे स्वप्ने शुभाः प्रोक्ताः सिद्धिमोक्षफलप्रदाः ।

नारदीये—ग्रहणं तु पुरन्ध्रीणामगस्त्यागमनं तथा ।
दशनं श्वेतनागेन बन्धनं शृङ्खलादिभिः ॥
रोदनं ताडनं चैव धावनं चाङ्गघातनम् ।
मृल्लोहत्रपुकांस्यस्य सीसकस्यापि कुत्सितात् ॥
धातोर्लाभस्तथा पुष्पं फलरत्नाद्युभवावपि ।
व्यजनं स्वयमन्येन धमनं च विभावसोः ॥
एवमादीनि चान्यानि शुभान्याहुर्मनीषिणः ।

## अथाशुभस्वप्नाः

नारदपञ्चरात्रे—अतोऽन्ये विपरीतास्तु मनसः खेददाश्च ये ।
गर्हिता लोकविद्विष्टाः स्वप्नास्ते ह्यशुभावहाः ॥

महाकपिलपञ्चरात्रे—चाण्डालं करभं काकं गर्त्तं शून्यममङ्गलम् ।
तैलाभ्यक्तं नरं नग्नं शुष्कवृक्षं सकण्टकम् ॥
प्रासादमतलं दृष्ट्वा नरो रोगमवाप्नुयात् ।

कपिलः—दृष्ट्वा दुःस्वप्नकं चैव होमात् सिद्धिमवाप्नुयात् ।

पिङ्गलामते—शुभे शुभं भवेत् तस्य जुहुयादशुभे शतम् ।
अस्त्रेणेति क्रमाद् विद्वान् विधिः शिष्याधिवासने ॥

नारदपञ्चरात्रे—दृष्ट्वा समाचरेद्धोमं दन्तकाष्ठोदितं मुने ।
केवलेनाऽथवाऽज्येन सिंहमन्त्रेण शान्तये ॥

निबन्धे ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुं फट् नम इति महासिंहमन्त्रः । तथा—
शतं सहस्रं साष्टं वा यथाशक्त्याऽथवा द्विजः ।
अस्त्रसंपुटितेनैषां नाम्ना स्वाहान्वितेन च ॥
दोषान् जहि जहीत्येवं पदं नामावसानकम् ।

अस्त्रसिंहमन्त्रयोर्विकल्पः । नारदीये—
भक्षणं पक्वमांसस्य कर्णनासादिकर्त्तनम् ।
लेपनं रक्तगन्धेन कर्दमेनापि लेपनम् ॥
वेष्टनं कृष्णसर्पेण रक्तमाल्येन वेष्टनम् ॥
आलिङ्गनं च कुस्त्रीणां हसनं नर्त्तनं तथा ।
खरोष्ट्रमहिषानाञ्च दर्शनारोहणक्रिया ।
पातनावेशनाभ्यङ्गं दक्षिणाशागतं तथा ॥

वमनं रुधिरादीनां लाभस्तेषां तथैव च।
अङ्गभङ्गोऽथ निद्रा च यमकिङ्करदर्शनम् ॥
दिव्यभौमान्तरीक्षाणामुत्पातानाञ्च दर्शनम्।
नृपगोगुरुविप्राणां भर्त्सनं विषभक्षणम् ॥
दर्शनं भीमसर्पाणां पुंसि मैथुनमेव च।
एवमादीनि चान्यानि गर्हितानि विदुर्बुधाः ॥
गुरुस्तत्प्रतिकाराय सहस्रं प्रजपेन्मनुम्।
तिलैः सहस्रञ्च हुनेद्देवं शान्तिमुदीरयेत् ॥

## अथ स्वप्ननिवेदनम्

तत्रैव—शिष्यस्तु शुचिराचान्तः पुष्पहस्तो गुरूत्तमम्।
प्रणम्य शिरसा हृष्टस्तस्मै स्वप्नं निवेदयेत् ॥
स्वप्ने चाक्षिसमक्षं वा आश्चर्यमपि हर्षदम्।
अकस्माद् यदि वा पश्येत् नाख्यातव्यं गुरोर्विना ॥

महाकपिलपञ्चरात्रे—गुरुपादार्चनं कृत्वा उपवासी जितेन्द्रियः।
दर्भशय्यां गतो रात्रौ दृष्ट्वा स्वप्नं निवेदयेत् ॥

अत्रोपवासविधिः कालान्तरीयस्वप्नपरीक्षापरः। दीक्षायां प्रोक्तपायसभोजनस्यावश्यकत्वात्। पिङ्गलामते—
सद्योऽधिवासमथवा प्रकुर्वीत यथाविधि।

मन्त्रतन्त्रप्रकाशे—दिनद्वयेनैव कुर्याद् दीक्षाकर्म विचक्षणः।
सद्योऽधिवासनं वा स्यादेकस्मिन् दिवसे यदि ॥

## अथ कुण्डसंस्काराः

अथोक्तहोमोपयुक्ताग्निसंस्कारः। तत्र प्रथमं कुण्डसंस्कारो यथा—

शारदायाम्—अष्टादश स्युः संस्काराः कुण्डानां तन्त्रचोदिताः।
वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ॥
तेनैव ताडनं दर्भैर्वर्मणाऽभ्युक्षणं स्मृतम्।
अस्त्रेण खननोद्धारौ हृन्मन्त्रेण प्रपूरणम् ॥
समीकरणमस्त्रेण सेचनं वर्मणा मतम्।
कुट्टनं हेति मन्त्रेण वर्ममन्त्रेण मार्जनम्।
विलेपनं कलारूपकल्पनं तदनन्तरम्।
त्रिसूत्रीकरणं पश्चाद् हृदयेनाऽर्चनं मतम् ॥

अस्त्रेण वज्रीकरणं हृन्मन्त्रेण कुशैः शुभैः ।
चतुष्पथं तनुत्रेण तनुयादक्षपाटनम् ॥
यागे कुण्डानि संस्कुर्यात् संस्कारैरेभिरीरितैः ।
अथवा तानि संस्कुर्याच्चतुभिर्वीक्षणादिभिः ॥

कलारूपकल्पनमिति । कुण्डमध्ये सोमसूर्याग्निकलानां चिन्तनमित्यर्थः । अक्षपाटनं तु नारदपञ्चरात्रे—अच्छिन्नाग्रैस्ततो दर्भैरस्त्रमन्त्राभिमन्त्रितैः ।
कुण्डभित्तिगणं सर्वं वर्मणा परिभूषयेत् ॥
इत्येवमक्षपाटाख्यं कुण्डसंस्कारः ईरितः ।

इत्युक्तम् । एते च संस्कारा यदि कुण्डकरणकाले न कृतास्तदा सिद्धेऽपि तस्मिन्नदृष्टार्थमाचरणीयाः । तदुक्तं नारदपञ्चरात्रे—
कुण्डस्यारम्भकाले तु संस्कारा न कृता यदि ।
निष्पन्नस्य च ते सर्वे विधेयाः स्युः क्रमेण वै ॥ इति ।

शारदायाम्—तिस्रस्तिस्रो लिखेल्लेखा हृदा प्रागुदगग्रगाः ।
अत्र लिखनक्रमः सौत्रामणितन्त्रे—
प्राचीमूर्ध्वमुदक्संस्थं दक्षिणारम्भमालिखेत् ।
उदग्रगं पुरःसंस्थं पश्चिमारम्भमालिखेत् ॥
तिस्रस्तिस्रो लिखित्वैवं प्रोक्षयेद् वाग्भवेन च ।
शारदायाम्—प्रागग्राणां स्मृता देवा मुकुन्देशपुरन्दराः ॥
रेखाणामुदगग्राणां ब्रह्मवैवस्ततेन्दवः ॥
अथवा षट्कोणावृतं त्रिकोणं तत्र संलिखेत् ।
यामलेऽपि—षट्कोणेनावृतं देवि त्रिकोणं वा समालिखेत् ।
शारदायाम्—सर्वाण्यभ्युक्ष्य तारेण योगपीठमथार्चयेत् ॥

अत्र वाग्भवतारयोर्विकल्पः । योगपीठमिति । आधारशक्तिमारभ्य पीठमन्त्रपर्यन्तमित्यर्थः । अत्र—जयाख्या विजया पश्चादजिता चाऽपराजिता ।
नित्या विलासिनी दोग्ध्री त्वघोरा मङ्गला नव ॥
इति पीठशक्तयः । ह्रीं वागीश्वरीवागीश्वरयोगपीठात्मने नमः इति पीठमन्त्रः । तदुक्तं तन्त्रान्तरे—वागीश्वरीवागीश्वरयोर्योगपीठात्मने नमः ।
ह्रीमाद्यः पीठमन्त्रोऽयमावाह्याऽस्मिन् प्रपूजयेत् ॥
शारदायाम्—वागीश्वरीमृतुस्नातां नीलेन्दीवरसन्निभाम् ।
वागीश्वरेण संयुक्तामुपचारैः प्रपूजयेत् ॥

गणेश्वरविमर्शिण्याम्—शक्तिबीजेन वागीशीं वागीशं साध्यमन्त्रतः।

पूजयेदिति शेषः। रुद्रयामले तु—

ततः शिवाय शक्त्यै च नमोऽन्तौ कथितौ मनू।
आभ्यां त्रिस्त्रिश्च संपूज्य प्रणमेन्मनुनाऽमुना॥
वागीश्वरीमृतुस्नातां समस्ताभरणान्विताम्।
वागीश्वरेण संयुक्तां नमाम्यखिलसिद्धये॥

इत्युक्तम्। वैष्णवे तु—वागीश्वरी-वागीश्वरयोः स्थाने लक्ष्मीनारायणौ पूज्यौ।

तदुक्तं तत्त्वसारसंहितायाम्—

लक्ष्मीमृतुमतीं तत्र प्रभोर्नारायणस्य च।
ग्राम्यधर्मेण संजातमग्निं तत्र विचिन्तयेत्॥

अत्र च—विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्त्तिश्च सन्नतिः।
पुष्टिरुत्कृष्टि ऋद्धिश्च संप्रोक्ता नव शक्तयः॥

इति पीठशक्तयः। 'बीजाद्यमासनं दत्त्वे'ति वचनात् श्रीं लक्ष्मीनारायणयो-र्योगपीठात्मने नमः इति पीठमन्त्रः। श्रीविद्यायान्तु—

ज्ञानार्णवे—कामेश्वरीं कुण्डमध्ये सकामामृतुसंयुताम्।
समाराध्य च संपूज्य तद्गर्भे वह्निमावहेत्॥

शारदायाम्—सूर्यकान्तादिसम्भूतं यद्वा श्रोत्रियगेहजम्।
आनीय वह्निं पात्रेण क्रव्यादांशं परित्यजेत्॥

गौतमीये—पाषाणभवमग्निं च यदि वाऽरणिसम्भवम्।
श्रोत्रियाणां गेहजञ्च वनस्थमथवा हरेत्॥
यदृच्छालाभसंप्राप्तश्चाऽयोग्यो यागकर्मणि।
निरग्निब्राह्मणाल्लब्धो ह्यर्धलाभकरो भवेत्।
क्षत्राल्लब्धे चतुर्थांशं फलं दद्याद्धुताशनः।
वैश्याच्छूद्राच्च विफलं जायते होमकर्म तत्॥

उड्डीशे—श्रोत्रियागारजं वापि सूर्यकान्तोद्भवं तु वा।
अरणीसम्भवं वापि क्षिप्तं स्वर्णादिभाजने॥
ताम्रपात्रादिना मन्त्री पिहितं तु समानयेत्।
अथवानीतमभितः स्थापयेत् कांस्यभाजने॥

अत्रिरपि—पात्रान्तरेण पिहिते ताम्रपात्रादिके शुभे।
अग्निप्रणयनं कुर्याच्छरावे तादृशेऽपि वा॥

स्मृतिसारे तु—शरावे भिन्नपात्रे वा कपाले चोल्मुकेऽपि वा ।
नाग्निप्रणयनं कुर्याद् व्याधिहानिभयावहम् ॥

इति शरावनिषेधस्ताम्रादिपात्रसद्भावे बोध्यः। क्रव्यादांशपरित्यागे विशेषः स्तन्त्रान्तरे—अस्त्रेणाग्निं समाधाय कवचेन पिधाय तु ।
क्रव्यादांशं तु चास्त्रेण नैऋत्ये संत्यजेत् प्रिये ॥

मन्त्रमुक्तावल्यामपि—
आनीयास्त्रेण नैऋत्ये क्रव्यादांशं परित्यजेत् ।
देवांशं मूलमन्त्रेण स्थापयेत् पुरतः सुधीः ॥

उड्डीशे तु—कूर्चास्त्राभ्यां च नैऋत्यां क्रव्यादांशं परित्यजेत् । इत्युक्तम् ।
गणेश्वरेऽपि—हूं फडन्तेन मूलेन क्रव्यादांशं परित्यजेत् ।
क्रियासारे—श्मशानादावाममांसमत्ति यो वह्निरुच्यते ।
क्रव्यादस्तस्य नामास्य त्यजेत् किञ्चिद्धुताशनात् ॥

शारदायाम्—संस्कुर्यात् तं यथान्यायं देशिको वीक्षणादिभिः ।
औदार्यवैन्द्वाग्निभ्यां भौमस्यैक्यं स्मरन् वसोः ॥
योजयेद् वह्निबीजेन चैतन्यं पावके तथा ॥

सारसंग्रहे—प्रदीपकलिकाकारं तेज आवाह्य यत्नतः ।
ऐक्यं जाठरवैन्दव-वह्निभ्यां पार्थिवस्य च ॥
स्मृत्वाऽग्निबीजकेनाऽस्य चैतन्यं योजयेदथ ।

वैन्दवस्तु भ्रूमध्यस्थो वह्निः । उड्डीशे—
दीपाद् दीपान्तरन्यायात् स्फुरन्तं सर्वतोमुखम् ।
श्वासमार्गेण मनुवित् कवचेन ततोऽर्चयेत् ॥

शारदायाम्—तारेण मन्त्रितं मन्त्री धेनुमुद्रामृतीकृतम् ।
अस्त्रेण रक्षितं पश्चात् तनुत्रेणाऽवगुण्ठितम् ॥
अर्चितं त्रिः परिभ्राम्य कुण्डस्योपरि देशिकः ।
प्रदक्षिणं तदा तारमन्त्रोच्चारणपूर्वकम् ॥
आत्मनोऽभिमुखं वह्निं जानुस्पृष्टमहीतलः ।
शिवबीजधिया देव्या योनावेनं विनिःक्षिपेत् ॥

उड्डीशे—भूमौ च जानुनी कृत्वा कूर्चबीजं च वह्निं च ।
चैतन्यं ङे नमोऽन्तः स्यादनेनोत्थापयेच्छुचिम् ॥
शिवबीजधिया तस्या योनौ वह्निं विनिक्षिपेत् ।

त्रिपुरासारसमुच्चये—योनावेनं विन्यसेत् स्वाभिवक्त्रं पश्चादग्निं मूलमन्त्रेण मन्त्री ।

इत्युक्तम् । शिवबीजधियेति । शैवशाक्तविषयम् । वैष्णवादौ तु—विष्णादि-बीजधियेति बोध्यम् । वायवीयसंहितायान्तु—

वह्निबीजं समुच्चार्य त्वादधीताग्निमासने ।
योनिमार्गेण वै तद्वदात्मनः सम्मुखेन वा ॥

योनिमार्गेण मेखलोपरिस्थापितयोनिरन्ध्रेण । शारदायाम्—

पश्चाद् देवस्य देव्याश्च दद्यादाचमनादिकम् ।
ज्वालयेन्मनुनाऽनेन तमग्निमथ देशिकः ॥
चित्पिङ्गलहनदह-पचयुग्मान्युदीर्य च ।
सर्वज्ञाज्ञापय स्वाहा मन्त्रोऽयं प्रागुदीरितः ॥

रुद्रयामले तु—ह्रीं ह्रीं ज्वलयुगं दवि प्रज्वलद्वितयं ततः ।
हुं फट् स्वाहेति मन्त्रेण ज्वालयेत् पावकं सुधीः ॥

इत्युक्तम् । ज्वालनं तु मुखेनैव । तदुक्तम्—

जुहुयुश्च हुताग्निश्च पाणिशूर्पस्रुगादिभिः ।
न कुर्यादग्निधमनं न कुर्याद् व्यजनादिना ॥
मुखेनैव धमेदग्निं मुखादेषो ह्यजायत ।
नाग्निं मुखनेति तु यत् लौकिके योजयेत् तु तत् ॥

इति । अत्र 'ज्वालिनी होमकर्मणी'त्युक्तलक्षणा । यामले—

तत उत्थाय विधिवत् कृत्वा पाणिपुटं सुधीः ।
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ।
उपतिष्ठेत विधिवन्मन्त्रेणाऽनेन पावकम् ॥

उड्डीशे—प्रादेशमात्रां समिधं मूलाग्रघृतसंप्लुताम् ।
तूष्णीं वह्नौ समुत्क्षिप्य जिह्वायां देवतां न्यसेत् ।

शारदायाम्—विन्यसेदात्मनो देहे मन्त्रैर्जिह्वा हविर्भुजः ।
लिङ्गपायुशिरोवक्त्र-घ्राणनेत्रेषु सर्वतः ॥
वह्नीराघींशसंयुक्तास्सादियान्ताः सबिन्दवः ।
वर्णा मन्त्राः समुद्दिष्टा जिह्वानां सप्तदेशिकैः ॥
जिह्वास्तास्त्रिविधाः प्रोक्ता गुणभेदेन कर्मसु ।
हिरण्या गगना रक्ता कृष्णान्या सुप्रभा मता ।

बहुरूपाऽतिरक्ता च सात्त्विक्यो यागकर्मसु ॥

वह्निः रेफः। इरो यकारः। अर्घीशो दीर्घोकारः। अत्र—सात्त्विकरसनायां बहुरूपातिरक्तयोः पौर्वापर्यं बीजक्रमानुरोधेन न तु न्यासक्रमानुरोधेन बहुरूपायाः सर्वाङ्गे न्यसनीयत्वात्। तदुक्तं तन्त्रान्तरे—

सलिङ्गगुदमूर्धास्य-नासानेत्रेषु च क्रमात्।
विन्यसेदतिरक्तां तां सर्वाङ्गे बहुरूपिणीम् ॥

इति राघवभट्टाः। वस्तुतो—

हिरण्या गगना रक्ता कृष्णा चैव तु सुप्रभा।
बहुरूपा महेशानि अतिरक्ता तथैव च ॥

इत्यनन्तरम्—एकैकं विन्यसेद् देवि लिङ्गे पायौ शिरस्यथ।
वक्त्रे घ्राणे तथा नेत्रे सर्वाङ्गे च न्यसेत् ततः ॥

इति वीरचूडामणिवचनात्—

ततः प्रविन्यसेज् जिह्वां देहे मन्त्री विभावसोः।
सलिङ्गगुदमूर्धास्य-नासानेत्रेषु च क्रमात् ॥
सर्वाङ्गेषु च जिह्वास्ता वक्ष्यन्ते त्रिविधात्मिकाः।
हिरण्या गगना रक्ता कृष्णा चैव तु सुप्रभा ॥
बहुरूपाऽतिरक्ता च जिह्वाः सप्तेति सात्त्विकाः।

इति मन्त्रतन्त्रप्रकाशवचनाच्चातिरक्तायाः सर्वाङ्गे एव न्यासः साधीयान्। राघवभट्टलिखितवचनं च यदि प्रमाणं तदा विकल्प एवेति तत्त्वम्। शारदायाम्—

पद्मरागा सुवर्णाऽन्या तृतीया भद्रलोहिता।
लोहितानन्तरं श्वेता धूमिनी च करालिका ॥
राजस्यो रसना वह्नेर्विहिताः काम्यकर्मसु।
विश्वमूर्त्ति-स्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ॥
लोहिताऽन्या करालाख्या काली तामस्य ईरिताः।
एताः सप्त नियुज्यन्ते क्रूरकर्मसु मन्त्रिभिः ॥
स्वस्वनामसमाभाः स्युर्जिह्वाः कल्याणरेतसः।
अमर्त्यपितृगन्धर्व-यक्षनागपिशाचकाः ॥
राक्षसाः सप्तजिह्वानामीरिता अधिदेवताः।

अधिदेवतोक्तिस्तत्तज्जिह्वास्थाने न्यासार्थं पूजार्थं च।

जिह्वासु त्रिदशादीनां तत्तत्कार्यसमाप्तये।

जुहुयाद् वाञ्छितां सिद्धिं दद्युस्ता देवतामयाः ॥

इति प्रपञ्चसारवचनात् तत्तज्जिह्वायां तत्तद्द्रव्येण होमपक्षे तासां होमार्थं च।

क्रियासारे—अस्य भृगू ऋषिश्छन्दो गायत्र्यग्निस्तु देवता।

बीजं शक्तिस्तु रं स्वाहा ऋष्यादीन् पूर्ववन् न्यसेत् ॥

शारदायाम्—वह्नेरङ्गमनून् न्यस्येत् तनावुक्तेन वर्त्मना।

सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषः पुनः ॥

धूमव्यापी सप्तजिह्वो धनुर्द्धर इति क्रमात्।

षडङ्गमनवः प्रोक्ता जातिभिः सह संयुताः ॥

मूर्त्तीरष्टौ तनौ न्यस्येद् देशिको जातवेदसः।

मूर्धांसपार्श्वकट्यन्धु-कटिपार्श्वांसकेषु च ॥

प्रदक्षिणवशान् न्यस्येदुच्यन्ते ता यथाक्रमात्।

जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ॥

अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्यानराह्वयः।

कौमारतेजाः स्याद् विश्वमुखो देवमुखः स्मृतः ॥

ताराग्नये पदाद्याः स्युर्नत्यन्ता वह्निमूर्त्तयः।

आसनं कल्पयित्वाऽग्नेर्मूर्त्तिं तस्य विचिन्तयेत् ॥

आसनं पीठम्। तनाविति शेषः। तत्राधारशक्त्यादिवह्निमण्डलान्तं विन्यस्य केशरेषु मध्ये च पीठशक्तीः तत्रैव रं वह्नियोगपीठाय नमः इति पीठं च न्यसेत्।

तदुक्तं तत्रैव—स्वमण्डलान्तं प्रयजेत् पीठेशनवशक्तिकम्।

पीता श्वेताऽरुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ॥

रुचिरा ज्वालिनी प्रोक्ताः कृशानोर्नव शक्तयः।

स्वबीजेनासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् ॥ इति।

तथा—इष्टं शक्तिं स्वस्तिकाभीतिमुच्चैर्दीर्घैर्दोर्भिर्धारयन्तं जवाभम्।

हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्यायेद् वह्निं बद्धमौलिं जटाभिः ॥

ध्यानान्तरमुक्तं रुद्रयामले—

बन्धूकपुष्पसंकाशं सुतप्तकनकप्रभम्।

पद्मस्थं यजमानार्थं वदनद्वयशोभितम् ॥

सप्तच्छन्दोमयं देवं विमानोपरि संस्थितम्।

त्रिधाग्रीवं त्रिपादाब्जं हव्यकव्यविनाशकम् ॥

ब्रह्माध्वर्यूद्गातृहोतृ-चतुःशृङ्गविराजितम्।

पाञ्चरात्रं पाशुपतं कापिलं च महामतम् ॥
बौद्धं वैदिकमित्येतत् षट्पिङ्गलविलोचनम ।
वेदार्थं च चतुःश्रोत्रं श्रौतशास्त्रमयध्वनिम् ॥
सपाटलजटाबद्धमणिकोटीरभास्वरम् ।
हेमालङ्कारसंयुक्तं हेमकुण्डलमण्डितम् ॥
रक्ताम्भोरुहमध्यस्थं स्वस्तिकासनसंस्थितम् ।
पृष्ठदेशसमालम्बि-तार्त्तीयचरणाम्बुजम् ॥
सदा शब्दायमानं च राजमानं स्वतेजसा ।
शक्तिं वज्रं स्रुक्स्रुवौ च चतुर्भिर्दक्षबाहुभिः ॥
तोमरं तालवृन्तं च सौवर्णं घृतपात्रकम् ।
समैस्त्रिभिर्बाहुभिश्च दधानं रक्तवाससम् ॥
हिरण्या कनका रक्ता कृष्णा दक्षानने स्थिताः ।
सुप्रभा चातिरक्ता च बहुरूपा च जिह्विका ॥
इमा रसज्ञास्तद्वामवदने नित्यमास्थिताः ।
एताभिः सप्तजिह्वाभिरुपेतं पाटिताननम् ॥

शारदायाम्—परिषिञ्चेत् ततस्तोयैर्विशुद्धैर्मेखलोपरि ।
दर्भैरगर्भैर्मध्यस्थमेखलायां परिस्तरेत् ॥

कुलोड्डीशे—एवं विन्यस्तदेहः सन् परिस्तरणमाचरेत् ।
अर्घ्योदकेन संप्रोक्ष्य मध्यस्थमेखलोपरि ॥
उत्तराग्रं पूर्वदेशे पूर्वाग्रं दक्षिणे ततः ।
उत्तराग्रं पश्चिमे तु प्रागग्रमुत्तरे तथा ॥
मूलमाच्छादितं कृत्वा त्रिवारं तु परिस्तरेत् ।

तथा—मेखलासु च सर्वासु दीपमालां प्रकल्पयेत् ।

गणेश्वरविमर्शिन्याम्—पूर्वाग्रैरुत्तराग्रैश्च दर्भैरग्निं परिस्तरेत् ।

दक्षिणोत्तरयोः पूर्वाग्रैः पूर्वपश्चिमयोरुत्तराग्रैरित्यर्थः । त्रिपुरासारसमुच्चये—
एकमेखलकुण्डे निशितमतिर्मेखलाधस्तात् परिस्तरेत्तु द्विमेखले
द्वितीयमेखलोपरि त्रिमेखले तदन्तरालमेखलोपरि न्यसेत् ॥

शारदायाम्—निक्षिपेद्दु दिक्षु परिधीन् प्राचीवर्जं गुरूत्तमः ।

कात्यायनः—परिधीन् परिदधत्यार्द्रानेकवृक्षीयान् बाहुमात्रान् पालाशवैकङ्कत-काश्मर्यबैल्वानिति । तन्त्रान्तरे—

बाह्येऽथ स्थण्डिलं च त्रिपरिधिसहितं प्रागुदग्राग्रदर्भम् ।

त्रिपुरासारसमुच्चयेऽपि—

स्थण्डिलके सिकतानां बाह्येऽथ त्रिर्न्यसेत् परिधीन् ।

शारदायाम्—प्रादक्षिण्येन सम्पूज्यास्तेषु ब्रह्मादिमूर्त्तयः ।

सौत्रामणितन्त्रे—कुण्डमध्ये विधातव्या पीठपूजाविधानवित् ।

पद्मासनान्तमाधारशक्त्यादिमनुभिः क्रमात् ॥

उपर्युपरि संम्पूज्या वह्नेरासनशक्तयः ।

पूर्वादिदलमूलेषु मध्ये पूज्याः कमेण तु ॥

आसनशक्तयः पूर्वोक्ताः पीठशक्तयः । शारदायाम्—

ध्यातं वह्निं यजेन्मध्येगन्धाद्यैर्मनुनाऽमुना ।

वैश्वानरजातवेदपदे पश्चादिहावह ॥

लोहिताक्षपदस्यान्ते सर्वकर्माणि साधय ।

वह्निजायावधिः प्रोक्तो मन्त्रः पावकवल्लभः ॥

मध्ये षट्स्वपि कोणेषु जिह्वा ज्वालारुचो यजेत् ।

अत्र षट्सु कोणेषु मध्ये च यजेदित्यन्वयः । कोणेषु च ईशानादिक्रमः । तदुक्तं सोमशम्भौ—रुद्रेन्द्र-वह्निमांसाद-वरुणानिलगोचरे ।

हिरण्याद्याः स्थिता वह्ने रसनाः षडनुक्रमात् ॥

मध्यतो बहुरूपा त्विति ।

वायवीयसंहितायाम्—

हिरण्या प्रागुदग् जिह्वा कनका पूर्वतः स्थिता ।

रक्ताग्नेयी नैऋती च कृष्णाऽन्या सुप्रभा मता ॥

अतिरक्ता मरुज्जिह्वा स्वनामस्वगुणप्रभा ।

त्रिशिखा मध्यमा जिह्वा बहुरूपा समाह्वया ॥

तच्छिखैका दक्षिणतो ज्वलन्ती वामतः परा ।

स्वबीजानन्तरं वाच्या इति ॥

गणेश्वरविमर्शिण्यामपि—

कोणषट्के च मध्ये च जिह्वाः संपूजयेत् ततः ।

हिरण्या तप्तहेमाभा शूलपाणिदिशि स्थिता ॥

वैदूर्यवर्णा गगना प्राच्यां दिशि व्यवस्थिता ।

तरुणादित्यसंकाशा रक्ता जिह्वाऽग्निदिक्स्थिता ॥

कृष्णा नीलाब्जसङ्काशा नैर्ऋत्यां दिशि संस्थिता ।
सुप्रभा पद्मरागाभा वारुण्यां दिशि संस्थिता ॥
अतिरक्ता जवाभासा वायव्यां दिशि संस्थिता ।
बहुरूपा यथार्थाभा दक्षिणोत्तरसंस्थिता ॥
एता ज्वाला रुचावीता वराभयकरा अपि ।

त्रिपुरासारसमुच्चयेऽपि—

सुतप्तचामीकरचारुवर्णा स्थिता हिरण्या दिशि शूलपाणेः ।
वैदूर्यवर्णा कनकाभिधाना या सा निषण्णा दिशि वासवस्य ॥
या रक्ता तरुणा दिवाकराभवर्णा सा जिह्वा हरिति सुसंस्थिता कृशानोः ।
या कृष्णा विकसितनीलनीरजाभा सा रक्षःपरिवृतदिग्विभागलग्ना ॥
पद्मरागसदृशप्रभोज्वला सुप्रभा वरुणदिश्यवस्थिता ।
या महारजतपुष्पसंनिभा गन्धवाहदिशि साऽतिरक्तिका ॥
यथार्थसंज्ञा बहुरूपिका सा जिह्वोत्तरे दक्षिणतः स्थिता सा ।

होमेऽपि विशेष उक्तो गणेश्वरविमर्शिण्याम्—

पयांसि च हिरण्यायां गगनायां चरुं घृतम् ।
सिद्धार्थं बहुरूपायां रक्तायान्तु यवांस्तथा ॥
कृष्णायान्तु हुनेल्लाजैः सुप्रभायान्तु शक्तुभिः ।
तिलांश्चैवाऽतिरक्तायां कनकायान्तु सर्वदा ।
सर्वद्रव्याणि जुहुयात् साधकः सर्वकर्मसु ॥

तन्त्रान्तरे—फलं तु कामभेदेन क्रमादासामुदीर्यते ।
वश्याकर्षणयोराद्या गगना स्तम्भने मता ॥
विद्वेषमोहयो रक्ता कृष्णा मारणकर्मणि ।
सुप्रभा शान्तिके पुष्टौ सुरक्तोच्चाटने मता ॥
एकैव बहुरूपा तु सर्वकामफलप्रदा ।

शारदायाम्—केसरेषूक्तमार्गेण पूजयेदङ्गदेवताः ।
दलेषु पूजयेन्मूर्त्तीः शक्तिस्वस्तिकधारिणीः ।
लोकपालांस्ततो दिक्षु पूजयेदुक्तलक्षणान् ॥

अत्र लोकपालपूजा मेखलास्थदर्भोपरि कार्या । तदुक्तं तन्त्रान्तरे—

कोणषट्के च मध्ये च जिह्वाभिः केशरेष्वपि ।
अङ्गमन्त्रैस्ततो बाह्ये अष्टाभिर्मूर्त्तिभिः क्रमात् ।

मेखलाश्रितदर्भेषु दिक्पतीन् पूर्वतो यजेत् ॥

तत्त्वसारसंहितायाम्—

पात्राण्यासाद्य विधिवद् द्वन्द्वशश्चापि मन्त्रवित् ।
तान्यवेक्ष्य पवित्रेण चोत्तानानि विधाय च ॥
पुनः प्रक्षालयेत् पात्रं परिपूर्य शुभाम्बुना ।
दत्त्वाऽक्षतान् पवित्रं च तदुत्पूय निधापयेत् ॥
दिश्युत्तरस्यां तत्पात्रं प्रणीतेत्युच्यते बुधैः ।
ततः किञ्चित् प्रणीताम्बु प्रोक्षण्यादाय तज्जलैः ॥
यज्ञसाधनसम्भारं प्रोक्षयेन्मूलमन्त्रतः ।
ततो ब्रह्माणमावाह्याऽभ्यर्चयेन्मूलमन्त्रतः ॥

अन्यत्रापि—वामे चास्तीर्य दर्भान् बलरिपुहरिदग्रांस्तदूर्ध्वं निधाय
पात्राणि द्वन्द्वशोऽधोवदनमथ तथोत्तानवक्त्राणि कृत्वा ।
हृन्मन्त्रेणाभिपूर्यान्यतममथ जलैर्मन्त्रपूतैरथैभि-
रभ्युक्ष्याऽन्यैश्च कूर्चैः सकलमपि हृदा सव्यगं द्रव्यजातम् ॥ इति ।

तन्त्रान्तरे—स्ववामभागे प्रागग्रान् दर्भानास्तीर्य चोपरि ।
यथावित्तानुसारेण सौवर्णादीनि कर्मणि ॥
अधोमुखानि पात्राणि द्वन्द्वरूपेण विन्यसेत् ।
उत्तानीकृत्य पात्राणि जलाद्यैः संप्रपूरयेत् ॥

त्रिपुरासारसमुच्चये—

ततो वामभागे परिस्तीर्य दर्भान् पुलोमात्मजावल्लभाशागताग्रान् ।
तदूर्ध्वं न्यसेद् द्वन्द्वरूपेण पात्राण्यथाधोगतास्यानि सर्वाणि धीमान् ॥
अथोत्तानितेष्वेषु पात्रेषु पात्रं जलैरेकमापूर्य तीर्थानि तत्र ।
सुसञ्चिन्त्य तैः प्रोक्षयेत् कूर्चदर्भैर्हृदा सव्यभागे स्थितं द्रव्यजातम् ॥

पात्रेष्वपि विशेषस्तत्रैव—

सौवर्णान्यपि राजतान्यपि तथा पात्राणि शौल्वानि वा
मृत्पात्राण्यपि शान्तिकादिषु परं शस्तानि कर्मस्विह ।
शेल्वक्षद्रुमशिग्रुभूरुहकृतान्येतानि विद्वेषणो-
च्चाटोत्सादनमारणादिषु भृशं शस्तानि पात्राण्यपि ॥

शौल्वं ताम्रम् । शेलुर्बहुवारकः । अक्षद्रुमो विभीतकद्रुमः । शिग्रुः शोभाञ्जनः ।

शारदायाम्—पश्चादादाय पाणिभ्यां स्रुक्स्रुवौ तावधोमुखौ ।

त्रिशः प्रतापयेद् वह्नौ दर्भानादाय देशिकः ॥
तदग्रमध्यमूलानि शोधयेत् तैर्यथाक्रमात् ।
गृहीत्वा वामहस्तेन प्रोक्षयेद् दक्षिणेन तौ ॥
पुनः प्रताप्य तौ मन्त्री दर्भानग्नौ विनिक्षिपेत् ।
आत्मनो दक्षिणे भागे स्थापयेत् तौ कुशास्तरे ॥

तन्त्रान्तरे—गृहीत्वा स्रुक्स्रुवावूर्ध्वमुखौ चाधोमुखौ क्रमात् ।
प्रताप्याऽग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत् ॥
पुनस्त्रिशः प्रताप्याऽधोमुखावग्नौ कुशान् क्षिपेत् ।
मूलमध्याग्रके न्यस्येच्छक्तीरिच्छादिकाः क्रमात् ॥
स्रुचि शक्तिं स्रुवे शम्भुं विन्यसेद् हृदयाणुना ।

इच्छादिका इति इच्छाज्ञानक्रिया इत्यर्थः । शैवागमे—
गृहीत्वा स्रुक्स्रुवावूर्ध्ववक्त्रावधोमुखौ क्रमात् ।
प्रताप्याऽग्नौ त्रिधा दर्भमूलमध्याग्रकैः स्पृशेत् ॥
त्रिसूत्रवेष्टितग्रीवौ पूजितौ कुसुमादिभिः ।
कुशानामुपरिष्टात्तौ स्थापयित्वा स्वदक्षिणे ॥ इत्युक्तम् ।

शारदायाम्—आज्यस्थालीमथादाय प्रोक्षयेदस्त्रवारिणा ।
तस्यामाज्यं विनिक्षिप्य संस्कृतं वीक्षणादिभिः ॥

तन्त्रान्तरे—गव्यमाज्यं समादाय मूलेनैवाऽभिमन्त्रितम् ।
स्वकां ब्रह्ममयीं मूर्त्तिं सञ्चिन्त्याऽग्नौ प्रतापयेत् ॥

शैवागमेऽपि—गव्यमाज्यं समादाय मूलमन्त्राभिमन्त्रितम् ।
स्वकां ब्रह्ममयीं मूर्त्तिं सञ्चिन्त्य चेति ॥

गव्यमित्युत्तमकल्पमभिप्रेत्योक्तम् । तदुक्तं पिङ्गलामते—
उत्तमं गोघृतं प्रोक्तं मध्यमं महिषीभवम् ।
अधमं छागलीजातं तस्माद् गव्यं प्रशस्यते ॥ इति ।

वायवीयसंहितायाम्—न्यस्य मन्त्रं घृते मुद्रां दर्शयेद् धेनुसंज्ञिकाम् ।

शारदायाम्—निरुह्य वायव्येऽङ्गारान् हृदा तेषु निवेशयेत् ।
इदं तापनमुद्दिष्टं देशिकैस्तन्त्रवेदिभिः ॥
सन्दीप्य दर्भयुगलमाज्ये क्षिप्त्वाऽनले क्षिपेत् ।
गुरुर्हृदयमन्त्रेण पवित्रीकरणन्त्विदम् ॥
दीप्तेन दर्भयुग्मेन नीराज्याऽऽज्यं सवर्मणा ।

अग्नौ विसर्जयेद् दर्भमभिद्योतनमीरितम् ॥
घृते प्रज्वलितान् दर्भान् प्रदर्श्याऽस्त्राणुना गुरुः ।
जातवेदसि तान् न्यस्येदुद्योतनमिदं मतम् ॥
गृहीत्वा घृतमङ्गारान् प्रत्यूह्याऽग्नौ जलं स्पृशेत् ।
अङ्गुष्ठोपकनिष्ठाभ्यां दर्भौ प्रादेशसम्मितौ ॥
धृत्वोत्पुनीयादस्त्रेण घृतमुत्पवनं त्विदम् ।
तद्वद्धृदयमन्त्रेण कुशाभ्यामात्मसम्मुखम् ॥
घृते संप्लवनं कुर्यात् संस्कारा: षडुदीरिता: ।

अङ्गुष्ठोपकनिष्ठाभ्यामिति । हस्तद्वयस्येति शेषः । उत्पुनीयादिति । अग्निसम्मुखमिति शेषः । तदुक्तं शैवागमे—

प्रादेशमात्रदर्भाभ्यामङ्गुष्ठानामिकाग्रकैः ।
धृताभ्यां सम्मुखं वह्नेरस्त्रेणोत्प्लवमाचरेत् ॥ इति ।

शारदायाम्—प्रादेशमात्रं सग्रन्थि दर्भयुग्मं घृतान्तरे ।
निक्षिप्य भागौ द्वौ कृत्वा पक्षौ शुक्लेतरौ स्मरेत् ॥
वामे नाडीमिडां भागे दक्षिणे पिङ्गलां पुनः ।
सुषुम्णां मध्यतो ध्यात्वा कुर्याद्धोमं यथाविधि ॥

तत्र स्रुक्स्रुवधारणप्रकारो नारदीये—

हीयते यजमानो वै स्रुवमूलस्य दर्शनात् ।
तस्मात् संगोपयेन्मूलं होमकाले स्रुवस्य च ॥
अग्रे व्याधिकरं प्रोक्तं मध्ये शोककरं स्मृतम् ।
मूले हानिकरं प्रोक्तं स्रुवं धारयते कथम् ॥
वेदाङ्गुलं परित्यज्य अग्रे चैव हिरण्यकम् ।
वेदाङ्गुलं तु तन्मध्ये धारयेच्छङ्खमुद्रया ॥

होमसारे—मूलात् षडङ्गुलं त्यक्त्वा चतुरङ्गुलमेव वा ।
प्रकोष्ठे मूलमाच्छाद्य धारयेच्छङ्खमुद्रया ॥

शारदायाम्—स्रुवेण दक्षिणाद् भागादादायाऽऽज्यं हृदा गुरुः ।
जुहुयादग्नये स्वाहेत्यग्नेर्दक्षिणलोचने ॥
वामतस्तद्वदादाय वामे वह्निविलोचने ।
जुहुयादथ सोमाय स्वाहेति हृदयाणुना ॥
मध्यादाज्यं समादाय वह्नेर्भालविलोचने ।

जुहुयादग्नीषोमाभ्यां स्वाहेति हृदयाणुना ॥
हृन्मन्त्रेण स्रुवेणाऽऽज्यं भागादादाय दक्षिणात् ।
जुहुयादग्नये स्विष्टिकृते स्वाहेति तन्मुखे ।
हेति सम्पातयेद् भागे स्वाज्यस्याऽन्वाहुतिक्रमात् ॥
इत्यग्निनेत्रवक्त्राणां कुर्यादुद्घाटनं गुरुः ।

सम्पातयेद् भाग इति । यस्माद् भागादाज्यं गृहीत्वा हुतं तद्भागे हुतशेषं क्षिपेदित्यर्थः । तदुक्तं शैवागमे—

.....................स्रुवेणादाय होमयेत् ।
स्वेत्यग्नौ हेति तद्भागे शेषमाज्यं क्षिपेत् क्रमात् ॥ इति ।

शारदायाम्—सताराभिर्व्याहृतिभिराज्येन जुहुयात् पुनः ।

अत्र ॐ स्वाहा भूः स्वाहा भुवः स्वाहा स्वः स्वाहा ॐ भूर्भुवःस्वः स्वाहेति व्यस्तसमस्ताभिः पञ्चाहुतयः । 'पञ्चभिर्मनुभिर्हुनेदि'ति नारायणीयतन्त्रवचनात् ।

उड्डीशे तु—देव्या व्याहृतिहोमश्च ताराद्येन चतुर्हुनेत् ।
भूरग्नये पृथिव्यै च महते वह्निवल्लभा ॥
भुवः पदाद् वायवे च अन्तरीक्षाय शब्दतः ।
दिव्याय महते चैव वह्निजायावधिः स्मृतः ॥
स्वरादित्यचन्द्रमसौ ङेन्तौ नक्षपदात् ततः ।
त्रेभ्यः स्वाहापदान्तश्च भूर्भुवःस्वः पदं ततः ॥
अग्न्यादित्यचन्द्रमसो ङेन्ता नक्षत्र इत्यपि ।
भ्यसन्तश्चैव दिग्भ्यश्च महते वह्निवल्लभा ॥

शारदायाम्—जुहुयादग्निमन्त्रेण त्रिवारं देशिकोत्तमः ।
गर्भाधानादिका वह्नेः क्रिया निर्वर्त्तयेत् क्रमात् ॥
अष्टाभिराज्याहुतिभिः प्रणवेन पृथक् पृथक् ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं पुनः ॥
अनन्तरं जातकर्म स्यान्नामकरणं तथा ।
उपनिष्क्रमणं पश्चादन्नप्राशनमीरितम् ॥
चौलोपनयने भूयो महानाम्न्यं महाव्रतम् ।
अथोपनिषदं पश्चाद् गोदानोद्वाहकौ मृतिः ॥
शुभेषु स्युर्विवाहान्ताः क्रियास्ताः क्रूरकर्मसु ।
मरणान्ताः समुद्दिष्टा वह्नेरागमवेदिभिः ॥

ततश्च पितरौ तस्य सम्पूज्यात्मनि योजयेत् ।
समिधः पञ्च जुहुयान्मूलाग्रघृतसंप्लुताः ॥

उड्डीशे—इदमग्नेः करोम्यत्र गर्भाधानमिति क्रमात् ।
प्रणवं पूर्वमुद्धृत्य शेषे वह्निवधूं वदेत् ॥
हुत्वा सप्ताहुतीरेवं समिधां क्षेपणं तथा ।
एवं क्रमात् पुंसवनं सीमन्तोन्नयनं तथा ॥
जातकर्म समाप्याऽथ श्रमापनोदनाय च ।
ॐ कामेश्वरकामेशीभ्यां स्वाहेति त्रिर्विनिक्षिपेत् ॥
वह्निश्च पितरौ मन्त्री स्वदेहे विनियोजयेत् ।
इष्टदेवस्य नाम्ना तु वह्नेर्नाम समाचरेत् ।

कामेश्वरकामेश्वरीभ्यामिति तु श्रीविद्यायाम् । अन्यत्र वागीश्वरवागीश्वरीभ्यामिति ज्ञेयम् । तूर्णायागे—

आज्याहुत्यष्टकं हुत्वा नामकर्म समाचरेत् ।
देशिकस्त्वमुकोऽसीति मूलमन्त्रेण कल्पयेत् ।

वायवीयसंहितायाम्—

जातं ध्यात्वैवमाकारं जातकर्म समाचरेत् ।
नालापनयनं कृत्वा ततः संशोध्य सूतकम् ॥
शिवाग्निरिति नामास्य कृत्वाऽऽहुतिपुरःसरम् ।
पित्रोर्विसर्जनं कृत्वा चौलोपनयनादिकम् ॥
अथोद्वाहावसानञ्च कृत्वा संस्कारमस्य तु ॥

नालापनयनप्रकारस्तु शैवागमे—

वह्नेरिहाऽस्त्रमन्त्रेण ततो नालापनुत्तये ।
समिधः पञ्च जुहुयात् प्रान्ते मूले घृताप्लुताः ॥ इति ।

वायवीयसंहितायाम्—

ताः पालाश्यः परा वापि यज्ञीया द्वादशाङ्गुलाः ।
अवक्रा न स्वयं शुष्काः सत्वचो निर्व्रणाः समाः ॥
दशाङ्गुला वा विहिताः कनिष्ठाङ्गुलिसम्मिताः ।
प्रादेशमात्रा वाऽलाभे होतव्याः सकला अपीति ॥

एवञ्च सकलसंस्कारशेषे तत्पित्रोर्विसर्जनं नालापनयनीये पञ्चसमिद्धोमञ्च वदन् शारदाकारो बभ्रामैव । अत्र गोदानानन्तरं समावर्तनमपि कर्तव्यम् । तदुक्तं

गणेश्वरविमर्शिन्याम्—समावर्त्तनमुद्वाहमाधानञ्च ततः परमिति ।

त्रिपुरासारेऽपि—तेनैव समावर्त्तनविवाहयोराहुतीर्जुहुयात् ।

शारदायाम्—मन्त्रैर्जिह्वाङ्गमूर्त्तीनां क्रमाद् वह्नेर्यथाविधि ।

प्रत्येकं जुहुयादेकामाहुतिं मन्त्रवित्तमः ॥

गणेश्वरविमर्शिन्याम्—

जुहुयादङ्गमन्त्राद्यैस्ताराद्यैश्च सकृत् सकृत् ।

तत्तत्स्थानेषु शितधीः स्वाहान्तैश्च यथाक्रमम् ॥

अत्राऽस्त्रपदेन लोकपालतदस्त्राणां ग्रहणम् । शारदायाम्—

अवदाय स्रुवेणाज्यं चतुः स्रुचि पिधाय ताम् ।

स्रुवेण तिष्ठन्नेवाऽग्नौ देशिको यतमानसः ॥

जुहुयाद् वह्निमन्त्रेण वौषडन्तेन सम्पदे ।

शैवागमे तु विशेषः—घृतेन स्रुचि पूर्णायां निधायाऽधोमुखं स्रुवम् ।

शृङ्गाग्रे पुष्पमारोप्य पश्चाद् वामेन पाणिना ॥

पुनः सव्येन तौ धृत्वा शङ्खसन्निभमुद्रया ।

समुद्गतोर्ध्वकायश्च समपादः समुत्थितः ॥

नाभौ तन्मूलमाधाय शृङ्गाग्रे व्यग्रलोचनः ।

वामस्तनान्तमानीय तयोर्मूलमतन्द्रितः ॥ इति ।

गणेश्वरविमर्शिन्याम्—

महागणेशमन्त्रेण पूर्वपूर्वयुतेन च ।

तारादिबीजषट्केषु करणेष्वद्विवर्णकैः ॥

भिन्नेषु दशधा हुत्वा समस्तेन सुरेश्वरि ।

प्रपञ्चसारेऽपि—ताराद्यैर्दशभिर्भेदैः पूर्वपूर्वसमन्वितैः ।

मनुना गाणपत्येन जुहुयाच्च दशाहुतीः ॥

जुहुयाच्च चतुर्वारं समस्तेनैव तेन तु ।

तन्मन्त्रस्तूड्डीशे—प्रणवं श्रीर्महामाया स्मरं ग्लौमात्मकं पुनः ।

पञ्चान्तकं बिन्दुयुतं ङेन्तं गणपतिं ततः ॥

वरान्ते वरदे चेति सर्वान्ते जयमालिखेत् ।

मे वशमानय स्वाहा विंशत्यर्णो गजान्तकः ॥

शारदायाम्—ततः पीठं समभ्यर्च्य देवताया हुताशने ।

अर्चयेद् वह्निरूपां तां देवतामिष्टदायिनीम् ॥

वीरचूडामणौ तु—पश्चात्पीठदेवतानामेकैकाज्याहुतीस्ततः ।
अर्चयेद् वह्निरूपां तां गन्धपुष्पादिभिः क्रमात् ॥

इत्युक्तम् । तेनाधारशक्त्यादिपीठमन्त्रान्तं सम्पूज्य एकैकामाहुतिं दत्त्वा इष्टदेवतां तत्रावाह्योपचारैः सम्पूज्यावरणदेवता अपि पूजयेदिति सिद्धम् । उड्डीशे—

वह्निमुखे यन्त्रराजं रश्मिजालसमन्वितम् ।
विभाव्याराधयेन्मन्त्री श्रीमत्त्रिपुरसुन्दरीम् ॥

तथा—तत आवृत्तदेवानामेकैकामाहुतिं हुनेत् ।
सङ्कल्पञ्च ततः कृत्वा काम्यहोमं समाचरेत् ॥
स्वाहान्तं मूलमुच्चार्य देवतायै त्विदं ब्रुवन् ।
जुहुयाज्ज्वालिते वह्नौ संख्या च परितश्चरेत् ॥

शारदायाम्—तन्मुखे जुहुयान्मन्त्री पञ्चविंशतिसंख्यया ।
आज्येन मूलमन्त्रेण वक्त्रैकीकरणं त्विदम् ॥

शैवागमे—इतीष्टवक्त्रे वक्त्राणामन्तर्भावस्तु चैकता ।
अथवा कुण्डमानत्वं यदीष्टवदने स्मरेत् ॥
अन्तर्भाव्यानि वक्त्राणि तदेकीकरणं मतम् ।
वह्निदैवतयोरैक्यमात्मना सह भावयेत् ।
मूलमन्त्रेण जुहुयादाज्येनैकादशाहुतीः ॥
नाडीसन्धानमुद्दिष्टमेतदागमवेदिभिः ।
जुहुयादङ्गमुख्यानामावृतीनामनुक्रमात् ॥
एकैकामाहुतिं सम्यक् सर्पिषा देशिकोत्तमः ।

अन्ते मूलेन दशाहुतयो देयाः । तदुक्तं त्रिपुरासारे—

परिवारस्यैकैकां देव्यास्तु दशाहुतीर्जुहुयात् ।

इत्यधिवासविधिः

## अथ दिनकृत्यम्

शारदायाम्—प्रातरुत्थाय जुहुयुः पुनराज्यान्वितैस्तिलैः ।
द्रव्यैर्वा कल्पविहितैः सहस्रं साष्टकं पृथक् ॥

जुहुयुरिति । आचार्य ऋत्विजश्चेत्यर्थः । अत्र तिलादयः स्रुवेण करेण वा होतव्याः । तदुक्तं वायवीयसंहितायाम्—

स्रुवेणाज्यं समित्पाण्या स्रुचा शेषं करेण वा ।
तत्र दिव्येन होतव्यं तीर्थेनार्षेण वा तथेति ॥

महाकपिलपञ्चरात्रे—अप्रदीप्ते न होतव्यं मध्यमे चाप्यनिन्धिते ।
प्रदीप्ते लेलिहानेऽग्नौ होतव्यं कर्मसिद्धये ॥

बह्वृचपरिशिष्टेऽपि—
अधोमुखः सधूमे तु जुहुयाद् यो हुताशने ।
यजमानो भवेदन्धः सपुत्र इति च श्रुतिः ॥

छन्दोगपरिशिष्टेऽपि—
योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चोपजायते ॥

त्रिपुरासारे—अग्नेः कर्णे होमतो व्याधिबाधा नेत्रेऽन्धत्वं नासिकायामथाधिः ।
द्रव्यच्छेदो मस्तके स्यान्मुखान्तर्होमं कुर्यात् तेन नित्यं विपश्चित् ॥

तन्त्रान्तरे—यतः काष्ठं ततः श्रोत्रं यत्र धूमोऽत्र नासिका ।
यत्राऽल्पज्वलनं नेत्रं यत्राऽङ्गारस्ततः शिरः ॥
यत्र प्रज्वलिता ज्वाला जिह्वा सा जातवेदसः ।

अन्यत्रापि—सधूमोऽग्निः शिरो ज्ञेयं निर्धूमश्चक्षुरेव च ।
ज्वलत्कृशो भवेत् कर्णः काष्ठलग्नश्च नासिका ॥
अग्निर्ज्वालायते यत्र शुद्धस्फटिकसन्निभः ।
तन्मुखं तत्र विज्ञेयं चतुरङ्गुलमानतः ॥

वनदुर्गाकल्पे—यत्र काष्ठं तत्र श्रोत्रे यत्र धूमस्तु नासिके ।
यत्राऽल्पज्वलनं नेत्रं यत्र भस्म तु तच्छिरः ॥
यत्रैव ज्वलितो वह्निस्तत्र जिह्वा प्रकीर्त्तिता ।

शारदायाम्—वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः ।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥

तथा—स्वर्णसिन्दूरबालार्क-कुङ्कुमक्षौद्रसन्निभः ।
सुवर्णरेतसो वर्णः शोभनः परिकीर्त्तितः ॥
भेरीवारिदहस्तीन्द्र-ध्वनिर्वह्नेः शुभावहः ।
नागचम्पकपुन्नाग-पाटलायूथिकानिभः ॥
पद्मेन्दीवरकल्हार-सर्पिर्गुग्गुलुसन्निभः ।
पावकस्य शुभो गन्ध इत्युक्तस्तन्त्रवेदिभिः ॥
प्रदक्षिणास्त्यक्तकम्पाश्छत्राभाः शिखिनः शिखाः ।
शुभदा यजमानस्य राज्यस्यापि विशेषतः ॥

कुन्देन्दुधवलो धूमो वह्नेः प्रोक्तः शुभावहः ।
कृष्णः कृष्णगतेर्वर्णो यजमानं विनाशयेत् ॥
श्वेतो राज्यं निहत्याशु वायसस्वरसन्निभः ।
खरस्वरसमो वह्नेर्ध्वनिः सर्वविनाशकृत् ॥
पूतिगन्धो हुतभुजो होतुर्दुःखप्रदो भवेत् ।
छिन्नवृत्तां शिखां कुर्यान्मृत्युं धनपरिक्षयम् ॥
शुकपक्षनिभो धूमः पारावतसमप्रभः ।
हानिं तुरगजातीनां गवाञ्च कुरुते चिरात् ॥
एवंविधेषु दोषेषु प्रायश्चित्ताय देशिकः ।
मूलेनाज्येन जुहुयात्पञ्चविंशतिमाहुतिम् ॥

त्रिपुरासारे तु—वस्वधिकं शतमाज्यैर्जुहुयाच्छान्तिकममीषु दोषेषु ।
अस्त्रेण साधकेन्द्रस्तनुयादथ चक्रपूजां च ॥ इत्युक्तम् ।

शारदायाम्—ततः सुधौतदन्तास्यं स्नातं शिष्यं समाहितम् ।
पाययित्वा पञ्चगव्यं कुण्डस्यान्तिकमानयेत् ॥

प्रयोगसारे—पञ्चगव्यं यथाप्रोक्तं पीत्वाचान्तं यथाविधि ।
द्वारेण दक्षिणेनाऽथ यागस्थानं प्रवेशयेत् ॥

शारदायाम्—विलोक्य दिव्यदृष्ट्या तं तच्चैतन्यं हृदम्बुजात् ।
गुरुरात्मनि संयोज्य कुर्यादध्वविशोधनम् ॥

तन्त्रान्तरे—हृदि स्थितं तच्चैतन्यं प्रस्फुरत्तारकाकृतिम् ।
आदाय स्थापयेत् स्वीये हृदयेऽङ्कुशमुद्रया ॥

षडन्वयमहारत्ने—शोधनं नाम तत्त्वानां कारणैकत्वचिन्तनम् ।
वर्णादीनां कलानाञ्च तस्यां चिदैक्यचिन्तनम् ॥

## अथाध्वशोधनम्

शारदायाम्—उक्तं कलाध्वा तत्त्वाध्वा भुवनाध्वेति च त्रयम् ।
वर्णाध्वा च पदाध्वा च मन्त्राध्वेत्यपरं त्रयम् ॥

वायवीयसंहितायां—अत्र शब्दास्त्रयोऽध्वानस्त्रयस्त्वर्थाः समीरिताः ।

तन्त्रान्तरे—मन्त्राध्वा च पदाध्वा च वर्णाध्वेति च शब्दतः ।
भुवनाध्वा च तत्त्वाध्वा कलाध्वा चार्थतस्त्रिधा ॥

अत्र तु संहारक्रमेणोक्तिः । शारदायान्तु सृष्टिक्रमेणेति ज्ञेयम् ।

शारदायाम्—निवृत्त्याद्याः कलाः पञ्च कलाध्वेति प्रकीर्त्तितः ॥

तत्त्वाध्वा बहुधा भिन्नः शैवाद्यागमभेदतः ।
षट्त्रिंशच्छैवतत्त्वानि द्वात्रिंशद्वैष्णवानि तु ॥
चतुर्विंशतितत्त्वानि मैत्राणि प्रकृतेः पुनः ।
उक्तानि दशतत्त्वानि सप्त च त्रिपदात्मनः ॥
तत्त्वानि शैवान्युच्यन्ते शिवः शक्तिः सदाशिवः ।
ईश्वरो विद्यया सार्धं पञ्च शुद्धान्यमूनि हि ॥
माया कालश्च नियतिः कला विद्या पुनः स्मृतिः ।
रागः पुरुष एतानि शुद्धाशुद्धानि सप्त च ।
प्रकृतिर्बुद्ध्यहङ्कारौ मनो ज्ञानेन्द्रियाण्यथ ॥
कर्मेन्द्रियाणि तन्मात्रा पञ्चभूतानि देशिकाः ।
एतान्याहुरशुद्धानि चतुर्विंशतिमागमे ॥
शैवानामपि तत्त्वानां विभागोऽत्र प्रदर्शितः ।

शुद्धानीति—आणव-कार्मण-मायीय-मलत्रयरहितत्वं शुद्धत्वम् । तत्र आणवो नाम सदाशिवत्वेन स्वस्यानवमर्शः । कार्मणो नाम पुण्यपापवानहमिति प्रतीतिः । मायीयो नाम अहङ्कारादावात्मबुद्धिः । शुद्धाशुद्धानीति । कारणत्वेन मलत्रयराहित्या-च्छुद्धानि । कार्यरूपत्वेन तद्युक्तत्वादशुद्धानीत्यर्थः ।

तथा—जीवप्राणधियश्चित्तं ज्ञानकर्मेन्द्रियाण्यथ ।
तन्मात्राः पञ्चभूतानि हृत्पद्मं तेजसां त्रयम् ॥
वासुदेवादयश्चेति तत्त्वान्येतानि शार्ङ्गिणः ।
पञ्चभूतानि तन्मात्रा इन्द्रियाणि मनस्तथा ॥
गर्वो बुद्धिः प्रधानञ्च मैत्राणीति विदुर्बुधाः ।
निवृत्ताद्याः कलाः पञ्च तत बिन्दुः कला पुनः ॥
नादः शक्तिः सदापूर्वः शिवश्च प्रकृतेर्विदुः ।
आत्मविद्या शिवः पश्चाच्छिवो विद्या स्वयं पुनः ॥
सर्वतत्त्वं च तत्त्वानि प्रोक्तानि त्रिपदात्मनः ।
तत्त्वाध्वा कथितो ह्येषः तत्तदागमवेदिभिः ॥
ईरितो भुवनाध्वेति भुवनानि मनीषिभिः ।

भुवनानि चतुर्दश । 'भुवनाध्वेति कथितो भुवनानि चतुर्दशे'ति गौतमीयतन्त्र-वचनात् । वायवीयसंहितायान्तु—

आधाराद्युन्मन्यन्तं च भुवनाध्वा प्रकीर्तितः । इत्युक्तम् ।

तथा वर्णाध्वेति वदन्त्यर्णानादिक्षान्तान्मनीषिणः ।

वर्णसिंहः पदाध्वा स्यान्मन्त्राध्वा मन्त्रराशयः ॥

वायवीयसंहितायान्तु—

अनेकभेदसंभिन्नः पदाध्वा पदसंहतिः ।

महामन्त्रोपमन्त्राणां वर्त्ततेऽवयवात्मना ॥

प्रधानावयवत्वेन सोऽध्वा पञ्चपदात्मकः ।

गौतमीयेऽपि—पदाध्वा पदसमूहः स्यादित्युक्तम् । मन्त्रराशय इति । वैदिक-तान्त्रिकमन्त्रसमूहः—मन्त्राध्वा मन्त्रराशिः स्यात्ते हि वैदिकतान्त्रिकाः ।

इति गौममीयवचनात् । शारदायाम्—

क्रमादेतादध्वनः षट् शोधयेद् गुरुसत्तमः ।

पदान्धुनाभिहृद्भाल-मूर्ध्वस्वपि शिशोः स्मरेत् ॥

ततः कूर्चेन विधिवत् तं स्पृशन् जुहुयाद् गुरुः ।

आचार्यकुण्डे संशुद्धैस्तिलैराज्यपरिप्लुतैः ॥

शोधयाम्यमुमध्वानं स्वाहेति पृथगध्वना ।

ताराद्यमाहुतीरष्टौ क्रमात् तान् विलयं नयेत् ॥

शिवे शिवात् तान् संलीनान् जनयेत् सृष्टिमार्गतः ।

विलोकयन् दिव्यदृष्ट्या तं शिशुं देशिकोत्तमः ॥

आत्मस्थितं तच्चैतन्यं पुनः शिष्ये नियोजयेत् ।

कुलार्णवे—शूद्रसंकरजातीनां नाध्वशुद्धिर्विधीयते ।

पादोदकप्रदानाद्यैः कुर्यात्पापविमोचनम् ॥

शारदायाम्—स्रुचा पूर्णाहुतिं दत्त्वा मूलमन्त्रेण देशिकः ।

वायवीयसंहितायाम्—

ततो होमावशिष्टेन घृतेनापूर्य वै स्रुचम् ।

निधाय पुष्पं तस्याग्रे स्रुवेणाऽधोमुखेन ताम् ॥

सदर्भेण समाच्छाद्य मूलेनाऽञ्जलिनोत्थितः ।

वौषडन्तेन जुहुयाद् धारां तु यवसम्मिताम् ॥

हयशीर्षपञ्चरात्रे—हुत्वा च हविषा दद्यात् स्रुचा पूर्णाहुतित्रयम् ।

वौषडन्तेन मन्त्रेण····················· ॥ इति ।

नारदपञ्चरात्रे—अभावे तु घृतस्यैव होमद्रव्येण पूरयेत् ।

तस्योपरि घृतं दद्यात् तदूर्ध्वं कुङ्कुमादिकम्

तूर्णीयागे—मूलं नमोऽन्तमुच्चार्य वामपादपुरःसरम् ।

दद्यात् पूर्णाहुतिं मन्त्री परामृतधिया ततः ॥

अत्रेष्टदेवतावरणदेवताभ्य एकैकामाहुतिं प्रयच्छति । गौतमीयतन्त्रे—

स्रुक्स्रुवौ च समादाय घृतेनापूर्य तत्पुनः ।

होमद्रव्याणि निःक्षिप्य नाभौ संस्थाप्य तौ पुनः ॥

ब्रह्मार्पणेन मनुना दद्यात् पूर्णाहुतिं पुनः ।

इतःपूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं तत् सर्वं ब्रह्मार्पणं भवतु स्वाहा ।

ब्रह्मार्पणमनुः सोऽयं ब्रह्मार्पणविधौ स्मृतः ।

एवं होमविधिं कृत्वा कुण्डस्थण्डिलदेवताः ॥

दिक्पालदेवताश्चापि अङ्कुरार्पणदेवताः ।

आनयेत् कलशे चापि कृष्णैक्यं भावयेद् गुरुः ॥

कृष्णेति । प्रकृताभिप्रायेण । शारदायाम्—

उद्वास्य देवतां कुम्भे साङ्गां सावरणां गुरुः ।

पुनर्व्याहृतिभिर्हुत्वा जिह्वादीनां विभावसोः ॥

एकैकामाहुतिं दत्त्वा परिषिच्याऽग्निरात्मनि ।

पावकं योजयित्वा स्वे परिधीन् सपरिस्तरान् ॥

नैमित्तिके दहेन्मन्त्री नित्ये तु न दहेदिमान् ।

व्याहृतिभिर्महाव्याहृतिभिः । 'पुनः समापयेद्धोमं महाव्याहृतिपूर्वकमि'ति वचनात् । तत्प्रकारस्तु गौतमीये—

पूर्णाहुतिं ततो दद्यादग्निश्चैव विधानवित् ।

ॐ भूरग्नये पृथिव्यै च महते स्वाहया तथा ॥

भुवो वायवे चान्तरीक्षाय महते स्वाहया ततः ।

स्वश्चन्द्रमसे दिग्भ्यश्च नक्षत्रेभ्यश्च स्वाहा ॥

ॐ भूर्भुवःस्वश्चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यश्च महते स्वाहा । पावकं योजयित्वेति । तत्प्रकारस्तु गणेश्वरविमर्शिण्याम्—

भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक ।

कर्मान्तरेऽपि सम्प्राप्ते सन्निधिं कुरु सादरम् ॥

इति मन्त्रेण संप्राथ्र्य वह्निमुद्वासयेदपीति ।

शारदायाम्—नेत्रे शिष्यस्य बध्नीयान् नेत्रमन्त्रेण वाससा ।

महाकपिलपञ्चरात्रे—नवेन शुक्लवस्त्रेण नेत्रे बद्ध्वा……… । इत्युक्तम् ।

पिङ्गलामते—नेत्रवस्त्रेण तन्नेत्रे नेत्रमन्त्रेण बन्धयेत् ।

नारायणीये—नेत्राद्यैर्नेत्रमन्त्रेण बन्धयेदिति ।

शारदायाम्—करे गृहीत्वा तं शिष्यं कुण्डतो मण्डलं नयेत् ।

तस्याञ्जलिं पुनः पुष्पैः पूरयित्वा यथाविधि ॥

कलशे देवताप्रीत्यै क्षेपयेन्मूलमुच्चरन् ।

नारायणीये—न्यासं शिष्यतनौ कृत्वा तं प्रदक्षिणमानयेत् ।

पश्चिमद्वारमानीय क्षेपयेत् कुसुमाञ्जलिम् ॥

पिङ्गलामते—पुष्पैरञ्जलिमापूर्य योगपीठे प्रदापयेत् ।

पश्चिमोत्तररुद्रैन्द्रे पुष्पपातः शुभोऽशुभे ॥

आत्मयागक्रमाद् भूयः संहृत्योत्पाद्य देशिकः ।

तत्तन्मन्त्रोदितान् न्यासान् कुर्याद् देहे शिशोस्तदा ॥

आत्मयागो भूतशुद्धिः । प्रयोगसारे—

गुणांशेन पृथिव्यादिभूतानि विलयं नयेत् ।

यथावत् पिण्डसंस्थानि संहारक्रमयोगतः ॥

ततः सृष्टिक्रमेणैव पिण्डं सम्भावयेत् तदा ।

मन्त्रतन्त्रप्रकाशे—उपविश्यासने दिव्ये संहरेत् तस्य विग्रहम् ।

गन्धादिघ्राणसंयुक्तां पृथिवीमप्सु संहरेत् ॥ इत्यादि ।

शारदायाम्—पञ्चोपचारैः कुम्भस्थां पूजयित्वेष्टदेवताम् ।

तस्यास्तन्त्रोक्तमार्गेण विदध्यात् सकलीकृतिम् ॥

एतदनन्तरं देवतासकाशाद् वरप्रार्थनमुक्तमाचार्यैः—

कारुण्यनिलये देवि सर्वसन्निधिसंश्रये ।

शरण्यवत्सले मातः कृपामस्मिन् शिशौ कुरु ॥

आणवप्रमुखैः पाशैः पाशितस्य सुरेश्वरि ।

दीनस्यास्य दयाधारे कुरु कारुण्यमीश्वरि ॥

ऐहिकामुष्मिकैर्भोगैरपि संवर्ध्यतामसौ ।

स्वभक्तिः सकला चास्मै दीयतां निष्कलाश्रये ॥ इति ।

प्रयोगसारे—अथैशान्यां दिशि यदा मन्त्रविन् न्यस्तविग्रहम् ।

पीठस्य चतुरस्रायां वेद्यां दर्भाग्रपाणिना ॥

अभिषिञ्चेत् स्वकं शिष्यमात्मतत्त्वानुवर्त्तिनम् ।

सोमशम्भौ—यागालयाद् दिशीशस्य रचिते स्नानमण्डपे ।
कुर्यात् करद्वयायामां वेदिमष्टाङ्गुलोच्छ्रिताम् ॥
श्रीपर्ण्याद्यासने तत्र विन्यस्यानतमासने ।
शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत् ॥

तत्रैव—स्नाने तूदन्मुखं मुक्तौ पूर्ववक्त्रं च भुक्तये ।

अन्यत्रापि—मण्डलं त्वीशदिक् कृत्वा मुमुक्षूनुत्तराननान् ।
भुक्तये पूर्ववक्त्रांश्च शिष्यांस्तत्र निवेशयेत् ।

शारदायाम्—नदत्सु पञ्चवाद्येषु सार्धं विप्राशिषा गुरुः ।
विधिवत् कुम्भमुद्धृत्य तन्मुखस्थान् सुरद्रुमान् ।
शिशोः शिरसि विन्यस्य मातृकां मनसा जपन् ।
मूलेन साधितैस्तोयैरभिषिञ्चेत् तमात्मवित् ॥

मातृकां विलोममातृकाम् । 'क्षाद्यैरान्तैरर्णैरभिपूर्णतत्त्वस्त्रिरुक्तमन्त्राद्यै'रिति दीपिकावचनात् ।

शिष्यशिरसि संयोज्य विलोममातृकां जपन् ।
मूलमन्त्रं तथा जप्त्वा कुर्याद् देवाभिषेचनम् ॥

इति गौतमीयवचनाच्च । तथा—

पूजितां पुनरादाय वर्धनीमस्त्ररूपिणीम् ।
तस्याः सुसाधितैस्तोयैः सिञ्चेद्रक्षार्थमञ्जसा ॥
अवशिष्टेन तोयेन शिष्यमाचामयेद् गुरुः ।
ततस्तं सकलीकृत्य देवतात्मानमात्मवित् ॥
उत्थाय शिष्यो विमले वाससी परिधाय च ।
आचम्य वाग्यतो भूत्वा निषीदेत् सन्निधौ गुरोः ॥
देवतामात्मनः शिष्ये संक्रान्तां देशिकोत्तमः ।
पूजयेद् गन्धपुष्पाद्यैरैक्यं सम्भावयंस्तयोः ॥
दद्याद् विद्यां ततस्तस्मै विनीतायाम्बुपूर्वकम् ।

वसिष्ठसंहितायां—ततस्तच्छिरसि स्वस्य हस्तं दत्त्वा शतं जपेत् ।
अष्टोत्तरशतं वापि दद्यादुदकपूर्वकम् ॥

गौतमीये—न्यासजालं तस्य देहे गुरुः संन्यस्य यत्नतः ।
दक्षकर्णे वदेन्मन्त्रं त्रिवारं पूर्णमानसः ॥

कुलामृते—विद्यां त्रिः कथयेत् कर्णे चाविज्ञाने च वा पुनः।

दीपिकायां—ऋष्यादियुक्तमथ मन्त्रवरं यथावद् ब्रूयात्त्रिशो गुरुरनर्घ्यमवामकर्णे।

अन्यत्रापि—दक्षकर्णे त्रिशो विद्यामेकोच्चारेण चोच्चरेत्।

एष विधिर्द्विजातीनां स्त्रीशूद्राणाञ्च वामतः।

तन्त्रान्तरे—आवयोस्तुल्यफलदो भवत्वेवमुदीरयेत्।

प्रसन्नवदनस्तस्मै शिष्याय मुनिपुङ्गवः॥

स्वतो ज्योतिर्मयीं विद्यां गच्छन्तीं भावयेद् गुरुः।

आगतां भावयेच्छिष्यो नतोऽस्मीति विशेषतः॥ इति।

गौतमीये—गणेशादिमनुं चोक्त्वा समयान् कथयेद् गुरुः।

गणेशादिमन्त्रदानं पञ्चायतनदीक्षापक्षे। दक्षिणामूर्त्तिसंहितायाम्—

समीपे चक्रराजस्य सम्यगभ्यर्च्य देशिकः।

आद्याक्षरेण संलग्नं सुन्दरं नाम कल्पयेत्॥

आत्मानं योजयित्वा तु गुरुभिर्मानवैस्ततः।

स्मर्त्तव्या गुरवः सर्वे सम्यक् प्रणतिपूर्वकम्॥

भूमौ लिखित्वा विद्यां च सम्यक् पुष्पादिभिर्यजेत्।

शिष्याय दर्शयेद् विद्यां प्रजप्तां शतधा प्रिये॥

यदि स्यान्महती प्रीतिः शिष्यस्य प्रणतस्य च।

तदैकोच्चारमात्रेण दक्षकर्णे जपेत् पराम्॥

तन्त्रराजे—उक्तलक्षणसम्पन्नं शिष्यमाचारभूषणम्।

पञ्चषट्कूटविद्याभ्यां शोधितं बहुवासरैः॥

कलशैरभिषिच्यामुं श्रीचक्रे सन्निवेश्य वै।

आधारे हृदये मूर्ध्नि चक्रं सञ्चिन्त्य मध्यतः॥

स्वान्तादावाह्य संस्थाप्य संपूज्य न्याससंयुताम्।

त्रिशो विद्यां वदेत् कर्णे देव्यात्मा पूर्णमानसः॥

देवतागुरुमन्त्रात्मतत्त्वैक्यं भावयेन्मुदा।

शतं जपेत् तदग्रस्थो निकटे त्रिदिनं वसेत्॥

न चेत् सञ्चारिणीशक्तिर्गुरुमेति न संशयः।

तस्मात् तदन्तिके तस्य पूजादेशाविरुद्ध वसेत्॥

गौतमीये—त्रिदिनं निवसेद् भक्त्या सिद्धये गुरुसन्निधौ।

अन्यथा तद्गतं तेजो गुरुमेति न संशयः॥

मन्त्रतन्त्रप्रकाशे—आचार्यादनभिप्राप्तः प्राप्तश्चादत्तदक्षिणः ।
सततं जप्यमानोऽपि मन्त्रः सिद्धिं न गच्छति ॥
सर्वस्वं वा तदर्धं वा वित्तशाठ्यविवर्जिताम् ।
गुरवे दक्षिणां दत्त्वा ततो मन्त्रग्रहो मतः ॥

तन्त्रान्तरे—गोभूहिरण्यं विपुलं गृहक्षेत्रादिकं बहु ।
न चेदर्धं तदर्धं वा तद्दशांशमथापि वा ॥
अक्लेशादन्नवस्त्रादि दद्याद् वित्तानुसारतः ।

ब्रह्मसंहितायाम्—अदक्षिणं कृतं कर्म वृथा नारद निश्चितम् ।
वीणां मे दक्षिणां देहि साक्षसूत्रकमण्डलुम् ॥
ततो मन्त्रं गृहाण त्वं यथाविधि महामुने ।
विधिहीनं कृतं कर्म सिद्धिं नैव प्रयच्छति ॥

गौतमीये—गुरवे दक्षिणां दद्याद् वित्तार्धं भक्तितत्परः ।
तदर्धं वा ततो दद्याद् यथाशक्त्याऽथ भक्तितः ॥
वित्तशाठ्यं न कुर्वीत कृतेऽनर्थं समावहेत् ।
गोभूहिरण्यवस्त्रादि गुरवेऽथ निवेदयेत् ॥
गुरुपुत्राय तत्पत्न्यै तच्छिष्याय स्वशक्तितः ।
वस्त्रालङ्करणं दद्याद् भोज्यमिष्टं यथारुचि ॥
ऋत्विग्भ्यो दक्षिणां दद्याद् वस्त्रालङ्कारसंयुताम् ।

ब्रह्मसंहितायाम्—प्रणीतामार्जनं कृत्वा दद्याच्च ब्रह्मदक्षिणाम् ।
स्वस्ववित्तानुसारेण लोभमोहविवर्जितः ॥
ततो ब्रह्माणमुद्वास्य ब्राह्मणान् भोजयेदथ ।
आशीर्वचोभिर्विदुषामेध्यमानः सुखी भवेत् ॥
हुतशेषं ततः प्राश्य कुक्कुटाण्डप्रमाणकम् ।
मन्त्रितं मन्त्रगायत्र्या ॥ इति ।

वायवीयसंहितायाम्—
मण्डपं गुरवे दद्याद् यागोपकरणैः सह ।

नारायणीय-महाकपिलपञ्चरात्रयोः—
मन्त्रं दत्त्वा सहस्रं वै स्वसिद्ध्यै देशिको जपेत् ।

अन्यत्रापि—अष्टोत्तरं सहस्रं स्वशक्तिहानानवाप्तये । जप्यात् ।

कुलामृते—दण्डवत् प्रणतं शिष्यं सर्वाचारांश्च शिक्षयेत् ।

तन्त्रान्तरे—स्नानसन्ध्ये सदाचारं नित्यं काम्यं तथैव च।
मन्त्रसिद्धिप्रकारांश्च शिष्यायाऽभिवदेद् गुरुः॥

समयाचारश्च वक्ष्यते। दीक्षादिवसे उपवासो निषिद्धः। तदुक्तं—

योगिनीतन्त्रे—मन्त्रं दत्त्वा गुरुश्चैव उपवासं य आचरेत्।
महान्धकारनरके कृमिर्भवति नान्यथा॥
दीक्षां दत्त्वा यदा मन्त्री चोपवासं समाचरेत्।
तस्य देवः सदा रुष्टः शापं दत्त्वा पुरं व्रजेत्॥

## अथ वीरदीक्षायां विशेषः

तत्र भूतशुद्धि-मातृकान्यास-षोढान्यासादिकं सर्वं गुरुः स्वशरीरे शक्तिशरीरे च विधाय कलशस्थापनं श्रीपात्रादिस्थापनं च कृत्वा दूतीयागक्रमेण कुण्ड-गोलोत्थद्रव्यमुत्पाद्य संस्कृत्य मत्स्यमांसादेरपि संस्कारं विधाय वक्ष्यमाणवीर-पूजाक्रमेण देवताः संपूज्य शिष्याय मन्त्रदानसमये—

शिष्यहस्ते महेशानि पात्रं दत्त्वा कुलेश्वरि।

इति वीरचूडामण्युक्तवीरपात्रम्—

इदं पवित्रममृतं पीयतां भवभेषजम्।
पशुपाशसमुच्छेदकारणं भैरवोदितम्॥

इति कुलार्णवोक्तमन्त्रेण शिष्यहस्ते दद्यात्। शिष्योऽप्यनेनैव मन्त्रेण पीयता-मित्यत्र पिबामीति पठित्वा वक्ष्यमाण-'धर्माधर्महविर्दीप्त' इत्यादिमन्त्रेण पिबेत्। ततो गुरुर्मन्त्रं दद्यात्। तत्र—

यामले—ऋष्यादिसहितामेनां लिखित्वा भूमिमध्यगाम्।
पुष्पादिना समभ्यर्च्य शिष्यायाऽथ प्रदर्शयेत्॥
यदि शिष्ये महाप्रीतिस्तदा कर्णे वदेद् गुरुः।
ततोऽप्यतितरां शिष्यो गुरोश्चेत् प्रीतिभाजनम्॥
तदा गण्डूषपूर्वं हि दद्यादेनां गुरूत्तमः।
निर्विकल्पोऽपि शिष्यस्तां गृह्णीयाद् हृष्टमानसः॥
तदभावे न सिद्धिः स्याद् देवताशापमाप्नुयात्।

दक्षिणामूर्त्तिसंहितायाम्—

कलशस्थैः पल्लवैस्तु त्रिवारं प्रोक्षयेच्छुभम्।
भवेद् यदाभिषिक्तस्तु तदासौ देशिकाग्रणीः॥
गण्डूषतत्त्वसंयुक्तस्तदाऽर्होऽयं शिवार्चने।

अन्यथा नैव सिद्धिः स्यात् सविकल्पस्य पार्वति ॥
गण्डूषदाने शिष्यस्य विकल्पो यदि जायते ।
न सिद्धिस्तस्य कुत्रापि श्रीविद्यापि पराङ्मुखी ॥

शेषं पशुदीक्षासमानम् । अथ तारादीक्षायां विशेषो नीलतन्त्रे—

अष्टोत्तरसहस्रहोमं विल्वपत्रेण कारयेत् ।
अथवाऽष्टशतं कुर्यादष्टाविंशतिमेव वा ॥
पायसं कृसरं दद्यान्मोदकं खण्डशर्कराम् ।
बलिं दत्त्वा छागलं वै गोधामांसमनुत्तमम् ।
रम्भापुष्पं शालमत्स्यं जुहुयाच्च प्रयत्नतः ॥
यवक्षीरं ततो हुत्वा शाल्यन्नं मधुना सह ।
गोभूहिरण्यवस्त्राद्यैस्तोषयेद्‌ गुरुमात्मनः ॥

चामुण्डातन्त्रे—

उपविद्यासु सर्वासु षट्कर्मादिप्रसाधने ।
नात्र दीक्षेत्यपेक्षास्ति नात्राङ्गादिप्रपूजनम् ॥

उपविद्या यक्षिण्यादिः । षट्कर्मादिप्रसाधनमन्त्रा यथा कालिकामन्त्रप्रयोगे वश्यादौ मन्त्रविशेषाः । ननु—

पुस्तके लिखितो मन्त्रो येन सुन्दरि जप्यते ।
न तस्य जायते सिद्धिर्हानिरेव पदे पदे ॥
गुरुमुख्यः क्रियाः सर्वा भुक्तिमुक्तिफलप्रदाः ।
गुर्वनुक्ताः क्रियाः सर्वा निष्फलाः स्युर्यतो ध्रुवम् ॥

इत्यादिनानावचनात् कथमेवमिति चेत् । न । कुण्डमण्डपाचार्यादिवरणहोमादिपूर्वकदीक्षानिषेधेऽप्युपदेशानिषेधात् । तन्त्रान्तरे—

चन्द्रसूर्यग्रहे तीर्थे सिद्धिक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥

इत्यादिना उपदेशस्यापि विहितत्वात् । न च—

शास्त्राद्‌ वा गुरुवक्त्राद्‌ वा ज्ञात्वा मन्त्रं प्रसाधयेत् ।

इति वचनात् पुस्तकादपि मन्त्रज्ञानं सिद्धिजनकमिति वाच्यम् । तत्रेतिकर्त्तव्यतयोः शास्त्रेण ज्ञानविधानात् 'मन्त्र'मित्यस्य 'प्रसाधयेदि'त्यनेनैवाऽन्वयात् ।

इति क्रियावतीदीक्षाविधिः

## अथ वर्णमयी दीक्षा

एतदशक्तौ वर्णमय्याद्यन्यतमदीक्षा विधेया। तत्र वर्णमयी यथा शारदायाम्—

अथ वर्णात्मिकां वक्ष्ये दीक्षामागमवेदिताम्।
पुंप्रकृत्यात्मका वर्णाः शरीरमपि तादृशम्॥
यतस्तस्मात् तनौ न्यस्येद् वर्णान् शिष्यस्य देशिकः।
तत्तत्स्थानयुतान् वर्णान् प्रतिलोमेन संहरेत्॥
स्वाज्ञया देवताभावाद् विधिना देशिकोत्तमः।
तदा विलीनतत्त्वोऽयं शिष्यो दिव्यतनुर्भवेत्॥
परमात्मनि संयोज्य तच्चैतन्यं गुरूत्तमः।
तस्मादुत्पाद्य तान् वर्णान् न्यस्येच्छिष्यतनौ पुनः॥
सृष्टिक्रमेण विधिवच् चैतन्यं च नियोजयेत्।
जायते देवताभावः परानन्दमयः शिशुः॥
एषा वर्णमयी दीक्षा प्रोक्ता संवित्प्रदायिनी॥

इति वर्णमयी-दीक्षाविधिः

## अथ कलावती

तत्रैव—ततः कलावती दीक्षा यथावदभिधीयते।
निवृत्ताद्याः कलाः पञ्च भूतानां शक्तयो यतः॥
तस्माद् भूतमये देहे ध्यात्वा ता वेधयेच्छिशोः।
निवृत्तिर्जानुपर्यन्तं तलादारभ्य संस्थिता॥
जानुनोर्नाभिपर्यन्तं प्रतिष्ठा व्याप्य तिष्ठति।
नाभेः कण्ठावधिव्याप्ता विद्याशान्तिस्ततः परम्॥
कण्ठाल्ललाटपर्यन्तं व्याप्ता तस्माच्छिखावधि।
शान्त्यतीता कला ज्ञेया कलाव्याप्तिरितीरिता॥
संहारक्रमयोगेन स्थानात् स्थानान्तरे गुरुः।
संयोज्य वेधयेद् विद्वानाज्ञया ताः शिवावधि॥
इयं प्रोक्ता कला दीक्षा दिव्यभावप्रदायिनी॥

इति कलावतीदीक्षाविधिः

## अथ वेधमयी

तत्रैव—ततो वेधमयीं वक्ष्ये दीक्षां संसारमोचनीम्।
ध्यायेच्छिष्यतनोर्मध्ये मूलाधारे चतुर्दले॥

त्रिकोणमध्ये विमले तेजस्त्रयविजृम्भिते ।
वलयत्रयसंयुक्तां तडित्कोटिसमप्रभाम् ॥
शिवशक्तिमयीं देवीं चेतनामात्रविग्रहाम् ।
सूक्ष्मां सूक्ष्मतरां शक्तिं भित्त्वा षट्चक्रमञ्जसा ॥
गच्छन्तीं मध्यमार्गेण दिव्यां परशिवावधि ।
वादिसान्तदलस्थार्णान् संहरेत् कमलासने ॥
तं षट्पत्रमये पद्मे बादिलान्ताक्षरान्विते ।
स्वाधिष्ठाने समायोज्य वेधयेदाज्ञया गुरुः ॥
तान् वर्णान् संहरेद् विष्णौ तं पुनर्नाभिपङ्कजे ।
दशपत्रे डादिफान्तवर्णाढ्ये योजयेद् गुरुः ॥
तान् वर्णान् संहरेद् रुद्रे तं पुनर्हृदयाम्बुजे ।
कादिठान्तार्कवर्णाढ्ये योजयित्वेश्वरे गुरुः ॥
तान् वर्णान् संहरेदस्मिंस्तं भूयः कण्ठपङ्कजे ।
स्वराढ्ये षोडशदले योजयित्वा स्वरान् पुनः ॥
सदाशिवे तान् संहृत्य तं पुनर्भ्रूसरोरुहे ।
द्विपत्रे हक्षलसिते योजयित्वा ततो गुरुः ॥
तद्वर्णौ संहरेद् बिन्दौ कलायां तं नियोजयेत् ।
तां नादेऽनन्तरं नादं नादान्ते योजयेद् गुरुः ॥
तमुन्मन्यां समायोज्य विष्णुवक्त्रान्तरे च ताम् ।
तत्पुनर्गुरुवक्त्रे तु योजयेद् देशिकोत्तमः ॥
सहैवमात्मना शक्तिं वेधयेत् परमे शिवे ।
गुर्वाज्ञया छिन्नपाशस्तदा शिष्यः पतेद् भुवि ॥
संजातदिव्यबोधोऽसौ सर्वं विन्दति तत्क्षणात् ।
साक्षाच्छिवो भवत्येष नात्र कार्या विचारणा ॥
एषा वेधमयी दीक्षा प्रोक्ता संवित्प्रदायिनी ।

इति वेधमयी दीक्षाविधिः

## अथाणवीदीक्षाभेदाः

षडन्वयमहारत्ने—आणवी बहुधा दीक्षा शाक्तेयी शाम्भवी पुनः ।
एकधेवेति विद्वद्भिः पठ्यते शास्त्रकोविदैः ॥
आणवी बहुधेत्युक्ता तद्भेदमधुनोच्यते ।

स्मार्त्ती मानसिकी यौगी चाक्षुषी स्पार्शनी तथा ॥
वाचिकी मान्त्रिकी होत्री शास्त्री चेत्यभिषेचिकी ।

## अथ स्मार्त्ती दीक्षा

विदेशस्थं गुरुः स्मृत्वा शिष्यं पाशत्रयं क्रमात् ॥
विश्लिष्य लयभोगस्य विधानेन परे शिवे ।
सम्यग् योजनरूपैषा स्मार्त्ती दीक्षेति कथ्यते ॥

## अथ मानसी दीक्षा

स्वसन्निधौ समासीनमालोक्य मनसा शुचिम् ।
मलत्रयादुपायैर्या मोचकी सा तु मानसी ॥

## अथ योगदीक्षा

योगोक्तक्रमतो योगी शिष्यदेहं प्रविश्य तु ।
गृहीत्वा तस्य चात्मानं स्वात्मना योजनात्मिका ।
योगदीक्षेति सा प्रोक्ता मलत्रयाावनाशिनी ॥

## अथ चाक्षुषी दीक्षा

शिवोऽहमिति निश्चित्य वीक्षणं करुणार्द्रया ॥
दृशा सा चाक्षुषी दीक्षा सर्वपापप्रणाशिनी ।

## अथ स्पर्शदीक्षा

स्वयं परशिवो भूत्वा निःसन्दिग्धमना गुरुः ॥
शिवहस्तेन शिष्यस्य समन्त्रं मूर्ध्नि संस्पृशेत् ।
स्पर्शदीक्षेति सा प्रोक्ता शिवाभिव्यक्तिकारिणी ॥

## अथ वाचिकी दीक्षा

गुरुवक्त्रं निजं वक्त्रं विभाव्य गुरुरादरात् ।
गुरुवक्त्रप्रयोगेन दिव्यमन्त्रादिकं शिशौ ॥
मुद्रान्यासादिभिः सार्धं दद्यात् सेयं हि वाचिकी ।

## अथ मान्त्री दीक्षा

दीक्षा परा तथा मन्त्रन्याससंयुक्तविग्रहः ॥
स्वयं मन्त्रतनुर्भूत्वा सक्रमं मन्त्रमादरात् ।
दद्याच्छिष्याय सा दीक्षा मान्त्री मलविघातिनी ॥

## अथ होत्री दीक्षा

शिवहस्तेनेति ।—गन्धैर्मण्डलकं स्वीये विदध्याद्दक्षिणे करे ।
विधिनाऽत्रार्चयेद् देवमित्थं स्याच्छिवहस्तकम् ॥

इति सोमशम्भुप्रोक्तरूपेणेत्यर्थः ।

कुण्डे वा स्थण्डिले वापि निक्षिप्याऽग्निं विधानतः ।
लययोगक्रमेणैव प्रत्यध्वानं यथाक्रमम् ॥
मन्त्रवर्णकलातत्त्वपदविष्टपमेव च ।
शुद्ध्यर्थं होमयेदेषा होत्री दीक्षा समीरिता ॥

## अथ शास्त्री दीक्षा

योग्यशिष्याय भक्ताय शुश्रूषार्चापराय च ।
सार्धं शास्त्रप्रदा त्वेषा शास्त्री दीक्षेति चोच्यते ॥

## अथाभिषेचिकी दीक्षा

शिवं च शिवपत्नीं च कुम्भे सम्पूज्य सादरम् ।
शिवकुम्भाभिषेकात् सा दीक्षा स्यादभिषेचिकी ॥

लययोगक्रमेणेति । वेधदीक्षाक्रमेण मूलाधाराधिष्ठितवर्णदेवतासंहाररूपेणेत्यर्थः ।

## अथ पूर्णाभिषेकः

सारसंग्रहे—पूर्णाभिषेकं वक्ष्यामि साधकानां शुभावहम् ।
विना येनाभिषेकेन साधकः पूर्णबोधताम् ॥
आचार्यत्वं न चाप्नोति सद्गतिं च समीहिताम् ।
तस्माद् गुरुः प्रियं शिष्यं बोधयित्वाभिषेचयेत् ॥
विरच्य विपुलं चक्रं मण्डपेऽतिमनोहरम् ।
खारीतोयभृतं कुम्भं स्थापयेच्चक्रमध्यतः ॥
अन्येषु कलशांस्तत्र वस्त्रहेमसमन्वितान् ।
दलेषु विविधाः स्थाप्यास्तत्रावाह्येष्टदेवताम् ॥
अभ्यर्च्य मध्ये चान्तेषु साङ्गावरणदेवताः ।
शिष्यस्य जन्मनक्षत्रे प्रागवत् तैरभिषेचयेत् ॥

त्रिशक्तिरत्ने—नानोपचारैः सम्पूज्य सहस्रं जुहुयाच्छुचौ ॥
अभिषिञ्चेद् गुरुः शिष्यं नामास्मै प्रविशेत् स्वयम् ।
पूर्णाभिषेकख्यातोऽयमाचार्यत्वप्रदायकः ॥

सारसंग्रहे—अयं पूर्णाभिषेकः स्यात् साधकाभीष्टसिद्धिदः।

खारीलक्षणं स्कन्दपुराणे—

पलद्वयं तु प्रसृतिः कुडवं द्विगुणं मतम्।
चतुर्भिः कुडवैः प्रस्थ आढकस्तैश्चतुर्गुणैः॥
चतुर्गुणो भवेद् द्रोणः कुम्भस्तद्द्वयतः स्मृतः।
कुम्भैस्तैरष्टभिः खारी..............इति॥

अयञ्च पूर्णाभिषेकः कौलिकानामावश्यकः।

पूर्णाभिषेकहीनस्तु कौलिको म्रियते यदि।
पिशाचत्वमवाप्नोति यावदाभूतसंप्लवम्।

इमि कुलार्णववचनात्। कौलिको वीरः।

इति पूर्णाभिषेकः

## अथ मन्त्रसंस्कारविधिः

तन्त्रशेखरे—छिन्नादिदोषदुष्टा ये मनवः संप्रकीर्त्तिताः।
सततं सेव्यमानास्ते न भवन्ति फलप्रदाः॥
अतस्तद्दोषनाशाय संस्कारान् शृणु चक्ष्महे।
त्रिकोणं सप्तधा मन्त्री विभज्य समभागतः॥
ईशाकोणात् तथा कुर्यात् तथा पावककोणतः।
ऊनपञ्चाशदेवं स्युर्योनयस्तत्र सर्वतः॥
ईशानादि लिखेन्मन्त्री वरुणान्तं लिपिं क्रमात्।
अत्र देवीं समभ्यर्च्य ततो मन्त्रान् समुद्धरेत्॥
एतज् जननमित्याहुरथो दीपनमुच्यते।
पुटितं हसंमन्त्रेण सहस्रं संजपेन्मनुम्॥
इदं दीपनमाख्यातं बोधनं तन्निगद्यते।
वर्मणा रेफयुक्तेन पुटितं संजपेन्मनुम्॥
सहस्रैः पञ्चभिर्मन्त्री बोधनं संस्मृतं त्विदम्।
अस्त्रसंपुटितं मन्त्रं सहस्रं प्रजपेत् सुधीः॥
एतत्ताड़नमाख्यातमभिषेक उदीर्यते।
वाग्हंसप्रणवैर्मन्त्री सहस्रं संजपेज्जलम्॥
इमं मन्त्रं पठन् मन्त्रमभिषिञ्च्याज्जलैः शुभैः।
तावत् स्रोमिति मन्त्रेण वषड़न्तेन संपुटम्॥

सहस्रं संजपेन्मन्त्रं विमलीकरणं त्विदम् ।
स्वधाशिखापुटं मन्त्रं सहस्रं संजपेत् सुधीः ॥
एतज् जीवनमाख्यातं दुग्धाज्यमिलितैर्जलैः ।
तर्पणं तर्पणं ख्यातं मायया संपुटो मनुः ॥
सहस्रैः पञ्चभिर्जप्तो गोपनं तत् समुच्यते ।
गौतमीये तु—मधुना शक्तिमन्त्रे तु वैष्णवे चेन्दुमज्जलैः ॥
घृतेन तर्पणं शैवे मन्त्रिभिः सम्यगीरितम् ।
तथा—श्वेतचन्द्रानुग्रहेन्दुसंपुटं प्रजपेन्मनुम् ।
एतदाप्यायनं प्रोक्तं मन्त्रशास्त्रविशारदैः ॥
संप्रोक्ता दशसंस्कारा मन्त्राणां तत्र चोदिताः ।
शारदातिलकादौ प्रकारान्तरेण दश संस्कारा उक्तास्ते तत्रैवाऽनुसन्धेयाः ।

## अथारिमन्त्रत्यागविधिः

अथाऽनिष्टफलदमन्त्रपरित्यागविधिरुच्यते । तन्त्रे—
अथाऽरिमन्त्रसंत्यागविधिः सम्यक् प्रकाश्यते ।
अरीत्युपलक्षणम् अनिष्टफलदेति बोध्यम् । तथा—
शुचिः समाहितो भूत्वा प्रारभेत वरे दिने ।
अशेषदुःखनाशाय देशिकः प्रवरं विधिम् ॥
तत्रादौ रम्यभवने कुम्भं दीक्षाविधिक्रमात् ।
मण्डले स्थापयेद् विद्वान् पूरयेत् तं जलैः शुभैः ॥
सकलीकृत्य संपूज्यावरणानि प्रपूजयेत् ।
एवं सावरणामिष्ट्वा मन्त्री मन्त्रस्य देवताम् ।
हुत्वा विलोममन्त्रेण सर्पिषा गोरपि द्विजः ॥
अष्टोत्तरसहस्रं वा तथैवाष्टशतं सुधीः ।
ब्रह्मार्पणेन मनुना तथान्ते तर्पयेत् प्रभुम् ॥
ततो यथावद् दुग्धान्नैर्देवताभ्यो बलिं हरेत् ।
विदिक्षु दिक्षु च तथा वक्ष्यमाणैर्मनूत्तमैः ॥
आयाहीन्द्र सुराधीश शतमन्यो शचीपते ।
नमस्तुभ्यं गृहाणेमं पुष्पधूपादिकं बलिम् ॥
आयाहि तेजसां नाथ हव्यवाह वरप्रद ।
गृहाण पुष्पधूपादिबलिमेनं सुपूजितम् ॥

प्रेतराज समायाहि भिन्नाञ्जनसमद्युते।
बलिं दत्तं गृहीत्वेमं सुप्रीतो वरदो भव॥
नमस्ते रक्षसां नाथ निर्ऋते त्वमिहागतः।
गृहाण बलिपूजादि मया भक्त्या निवेदितम्॥
एहि पश्चिमदिक्पाल जलनाथ नमोऽस्तु ते।
भक्त्या निवेदितां पूजां गृहीत्वा प्रीतिमाप्नुहि॥
प्रभञ्जन प्राणपते त्वमेहि सपरिच्छदः।
मया प्रयुक्तं विधिवद् गृहाण बलिमादरात्॥
कुबेर-तारकाधीशावागच्छेतां सुरोत्तमौ।
पुष्पधूपादिभिः प्रीतौ भवेतां वरदौ मम॥
ईश त्वमेव भगवन् सर्वविद्याश्रयप्रभो।
पूजितः पुष्पधूपाद्यैः प्रीतो भव विभूतये॥
आयाहि सर्वलोकानां नाथ ब्रह्मन् समर्चनम्।
गृहाण सर्वविघ्नान् मे निवर्त्तय नमोऽस्तु ते॥
आगच्छ वरदाऽव्यक्त विष्णो विश्वस्य नायक।
पूजितः परया भक्त्या भव त्वं सुखदो मम॥
ततः सपरिवारां च पूजयेन्मन्त्रदेवताम्।
मन्त्रेण विपरीतेन पुष्पदीपोपचारकैः।
ततस्तु प्रार्थयेद् विद्वान् पूजितां मन्त्रदेवताम्॥
आनुकूल्यमनालोच्य मया तरलबुद्धिना॥
यदुपात्तं पूजितं च प्रभो मन्त्रस्वरूपकम्।
तेन मे मनसः क्षोभमशेषं विनिवर्त्तय॥
पापं प्रतिहतं चास्तु भूयाच्छ्रेयः सनातनम्।
तनोतु मम कल्याणं पावनी भक्तिरेव ते॥
इति संप्रार्थ्य मन्त्रेशीं मन्त्रं पत्रे विलोमतः।
लिखित्वाऽमलकर्पूरचन्दनेन समर्चयेत्॥
कलशोपरि संस्थाप्य भक्त्या परमया युतः।
तत्पत्रं मतिमान् पश्चाद् बद्ध्वा निजशिरस्यथ॥
स्नायात् पूजितकुम्भस्थतोयैर्मन्त्रमयैः शुभैः।
भूयश्चान्येन तोयेन कुम्भमापूर्य संयतः॥

तन्मध्ये मन्त्रपत्रं च निक्षिप्याऽथ प्रपूजयेत् ।
तं कुम्भं निम्नगातीरे शुद्धे वाऽन्यजलाशये ॥
निक्षिपेदथ विप्रांश्च यथाशक्त्या च भोजयेत् ।
इत्थं कृतविधानस्य रिपुमन्त्रोद्भवा रुजः ॥
नश्यन्त्येव न सन्देहः क्रमाच्चित्तप्रसन्नता ।
जायतेऽतीवसम्पन्नो वर्धते तत् कुलं क्रमात् ॥

इति महामहोपाध्याय-ठक्कुर-श्रीनरसिंहविरचिते ताराभक्ति-
सुधार्णवे तृतीयस्तरङ्गः ॥ ३ ॥

———

## चतुर्थस्तरङ्गः

### अथ गुरुभक्तिः

कुलार्णवे—नारायणे महादेवे मातापित्रोश्च राजनि ।
यथा भक्तिर्भवेद् देवि तथा कार्या निजे गुरौ ॥
तथा—एकग्रामस्थितः शिष्यस्त्रिसन्ध्यं प्रणमेद् गुरुम् ।
एकक्रोशस्थितश्चापि गुरुं प्रतिदिनं नमेत् ॥
अर्धयोजनगः शिष्यः प्रणमेत् पञ्चपर्वसु ।
एकयोजनमारभ्य योजनद्वादशावधि ॥
तत्तद्योजनसंख्यातैर्मासैर्गत्वा नमेद् गुरुम् ।
अतिदूरे स्थितः शिष्यो यदेच्छा स्यात् तदा व्रजेत् ॥
रिक्तहस्तस्तु नोपेयाद् राजानं दैवतं गुरुम् ।
फलपुष्पाम्बरादीनि यथा शक्त्या समर्पयेत् ॥
तथा—गुर्वग्रे न तपः कुर्यान्न स्नायादात्मतृप्तये ।
न नियोगं गुरोर्दद्याद् युष्मदा नाभिभाषयेत् ॥
तथा—ऋणदानं तथादानं वस्तूनां क्रयविक्रयम् ।
न कुर्याद् गुरुभिः सार्धं शिष्यो भूत्वा कदाचन ॥
गुरौ सन्निहिते यस्तु पूजयेदन्यमम्बिके ।
स याति नरकं घोरं पूजा सा विफला भवेत् ॥
यस्मिन् द्रव्ये गुरोरस्ति स्पृहा नानुभवेच्च तत् ।
अवश्यं यदि वाञ्छा स्यादनुभूयात्तदाज्ञया ॥
अत्यल्पं हि गुरोर्द्रव्यमदत्तं स्वीकरोति यः ।
तिरश्चां योनिमापन्नः क्रव्यादैर्भक्ष्यते प्रिये ॥
गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः ।
पतितः स्यान्न सन्देहः प्रायश्चित्तं न विद्यते ॥
गुरुस्थानं सम्प्रदायं तद्धर्मं यो निवारयेत् ।
गुरुभिः स बहिष्कार्यो दण्ड्यो वध्यश्च पातकी ॥
पादुकामासनं वस्त्रं वाहनं छत्रचामरे ।
दृष्ट्वा गुरोर्नमस्कुर्यान्न तद् भोगाय कल्पयेत् ॥

उक्तानुक्तेषु कार्येषु नोपेक्षां कारयेत् प्रिये ।
सदसद् यद् गुरुर्ब्रूयात् तत् कार्यमविशङ्कया ॥
ब्रह्महत्याशतं कृत्वा गुर्वाज्ञां परिपालयेत् ।
न विशेदासने देवि देवतागुरुसन्निधौ ॥
जातिविद्याधनाढ्यो वा दूरे दृष्ट्वा गुरुं मुदा ।
दण्डप्रणामं कृत्वैकं त्रिप्रदक्षिणमाचरेत् ॥
तथा—गुरुतद्गुरुयोगे तु वन्देत प्रगुरुं प्रिये ।
ततो नमेद् गुरुं सोऽपि गुर्वाज्ञां न विचारयेत् ॥
प्रगुरोः सन्निधौ शिष्यः स्वगुरुं मनसा नमेत् ।
श्रीगुरुं न त्यजेत् क्वापि तदादिष्टो व्रजेत् प्रिये ॥
अधस्थिते गुरावूर्ध्वं न तिष्ठेत् तु कदाचन ।
न गच्छेदग्रतस्तेषां न तिष्ठेदुत्थिते गुरौ ॥

तिष्ठेदुपविष्ट इति शेषः ।

यत्र श्रीगुरुनिन्दा स्यात् पिधाय श्रवणे स्वके ।
सद्यस्तस्मादुपक्रामेद् दूरं न शृणुयाद् यथा ॥
गुरुनाम जपेत् पश्चाच्छ्रवणे सा प्रतिक्रिया ।
गुरुमित्रसुहृद्दासीदासाद्यान् नावमानयेत् ॥
गुरुशक्तिश्च तत्पुत्रो ज्येष्ठो भ्राता गुरोः समः ।
आत्मवच्च कनीयांसः पुत्रवत् कुलपालिकाः ॥

उपचर्या इति शेषः ।

## अथ समयाचारः

भैरवतन्त्रे—महाचीनक्रमेणैव तारा शीघ्रफलप्रदा ।
गन्धर्वाख्यक्रमेणैव पञ्चमी चैव दुर्लभा ॥
महानीलक्रमेणैव कालिका फलदायिनी ।
तथा—महाचीनक्रमेणैव छिन्नमस्ताविधिर्मतः ।
कालीतन्त्रे—महाचीनक्रमेणैव तारा शीघ्रफलप्रदा ।

महाचीनो बौद्धबहुलो देशविशेषः । तत्क्रमश्चोक्तः सारसंग्रहे—

स्नानादि मानसं शौचं पूजनं चापि तर्पणम् ।
सर्व एव शुभः कालो नाशुभो विद्यते क्वचित् ॥

न विशेषो दिवा रात्रौ न सन्ध्यायां नवा निशि ।
सर्वदा पूजयेद् देवीमस्नातः कृतभोजनः ॥
महानिश्यशुचौ देशे बलिं मन्त्रेण दापयेत् ।
स्त्रीद्वेषो नैव कर्त्तव्यो विशेषात् पूजनं स्त्रियः ॥
जपस्थाने महाशङ्खं निवेश्योर्ध्वे चरेज्जपम् ।
स्त्रियं गच्छन् स्पृशन् पश्यन् यत्र कुत्राप्यचूडके ॥
भक्षन् ताम्बूलमन्यांश्च शुभद्रव्यान् यथारुचि ।
मत्स्यं मांसं तथा क्षौद्रं पयः शाकाद्यमैक्षवम् ॥
भक्त्या ह्यशेषद्रव्याणि दत्त्वा भुक्त्वा चरेज्जपम् ।
दिग्देशनियमो नात्र स्थित्यादिनियमो न च ॥
न जपे कालनियमो नार्चादिषु बलिष्वपि ।
स्वेच्छानियम उक्तोऽत्र महामन्त्रस्य साधने ॥
नाधर्मो जायते तत्र किं च धर्मः प्रजायते ।
स्वेच्छाचारोऽत्र कथितः प्रचरेद् हृष्टमानसः ॥
कृतार्थं मन्यमानस्तु सन्तोष्य निजमानसम् ।
यस्मिन् मन्त्रे य आचारस्तत्र धर्मस्तु तादृशः ॥
कृतार्थस्तेन जायेत स्वर्गो वा मोक्ष एव वा ।

स्वच्छन्दभैरवतन्त्रे—

न शौचादिक्रियाः कार्याः स्मृतिशास्त्रप्रचोदिताः ।
एकं लिङ्गे गुदे तिस्र इत्याद्या याः प्रकीर्त्तिताः ॥
न ताः कार्याः साधकेन्द्रैर्यदीच्छेच्चिरजीवितम् ।

यामले—अथाचारं प्रवक्ष्यामि यत्कृतेऽमृतमश्नुते ।
सर्वभूतहिते रक्तः समयाचारपालकः ॥
अनित्यकर्मसंत्यागी नित्यानुष्ठानतत्परः ।
परस्यां देवतायान्तु सर्वकर्मनिवेदकः ॥

स्यादिति शेषः। अनित्यकर्मेत्यादि। मोक्षकामः कामनया किमपि कर्म न कुर्यात्। नित्यनैमित्तिककर्मपरो मन्त्राराधनेनैव मम शिवं भवितेति भावयन् कृतं कर्म देवतायै समर्पयेदित्याखण्डलकार्थः।

अन्यमन्त्रार्चनश्रद्धामन्यमन्त्रस्य पूजनम् ।
कुलस्त्रीवीरनिन्दां च तद् द्रव्यस्यापहारणम् ॥

स्त्रीषु रोषं प्रहारञ्च वर्जयेन्मतिमान् सदा ।
स्त्रीमयं च जगत् सर्वं स्वयं तावत् तथा भवेत् ॥
पेयं चर्व्यं तथा चोष्यं भक्ष्यं लेह्यं गृहं सुखम् ।
सर्वं च युवतीरूपं भावयेद् यतमानसः ॥
कुलजां युवतीं वीक्ष्य नमस्कुर्यात् समाहितः ।
यदि भाग्यबलेनैव कुलदृष्टिस्तु जायते ॥
तदैव मानसीं पूजां तदा तासां प्रकल्पयेत् ।
बालां वा यौवनोन्मत्तां वृद्धां वा सुन्दरीं तथा ॥
कुत्सितां वा महादुष्टां नमस्कृत्य विभावयेत् ।
तासां प्रहारं निन्दां च कौटिल्यमप्रियं तथा ॥
सर्वथा न च कर्त्तव्यमन्यथा सिद्धिरोधकृत् ।
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव विभूषणम् ॥
स्त्रिसङ्गिना सदा भाव्यमभावे स्वस्त्रियामपि ।
तद्धस्तारचितं पुष्पं तद्धस्तावर्जितं जलम् ॥
तद्धस्तारचितं भोज्यं देवताभ्यो निवेदयेत् ।
शतापराधे वनितां पुष्पेणापि न ताड़येत् ॥
दोषान्न गणयेद्धीमान् गुणानेव प्रकाशयेत् ।

रुद्रयामले—स्त्रीसुप्तं गुरुसुप्तं च ज्येष्ठसुप्तं च नग्नकान् ।
दैवात् तद्दर्शने देवि श्रीचक्रं कारयेद् बुधः ॥

सुप्तमित्युपलक्षणम् । अनवधानेन नग्नानेतान्न पश्येदित्यर्थः ।

कुलार्णवे—श्रीगुरोः पादुकां मुद्रां मूलमन्त्रं च पादुकाम् ।
शिष्यादन्यत्र देवेशि न दद्याद् यस्य कस्यचित् ॥
पारम्पर्यागमाम्नायं मन्त्रं तन्त्रादिकं प्रिये ।
सर्वं गुरुमुखाल्लब्धं सफलं स्यान् न चान्यथा ॥
स्वदारवन्निषेवेत कुलशास्त्राणि पार्वति ।
पशुशास्त्राणि सर्वाणि वर्जयेत् परदारवत् ॥
श्वचर्मस्थं यथा क्षीरं न पेयं स्याद् द्विजोत्तमैः ।
तथा पशुमुखाद् धर्मो न श्रोतव्यश्च कौलिकैः ॥

तथा—आममांसं सुराकुम्भं मत्तेभं सिद्धलिङ्गिनम् ।
सहकारमशोकं च क्रीड़ालोलाः कुमारिकाः ॥

एकवृक्षं श्मशानञ्च समूहं योषितामपि ।
नारीं च रक्तवसनां दृष्ट्वा वन्देत भक्तितः ॥
गुरुशक्तिसुतज्येष्ठ-कनिष्ठान् कुलदेशिकान् ।
कुलदर्शनशास्त्राणि कुलद्रव्याणि कौलिकान् ॥
प्रेरकान् सूचकांश्चापि वाचकान् दर्शकांस्तथा ।
शिक्षकान् बोधकान् योगि-योगिनीसिद्धपुरुषान् ॥
कन्याः कुमारिका नग्ना उन्मत्ताः प्रकटस्तनीः ।
न निन्देन्न जुगुप्सेत न हसेन्नावमानयेत् ॥
नानृतं नाप्रियं ब्रूयात् कस्यापि कुलयोगिनः ।
कुरूपेति च कृष्णेति न वदेत् कुलयोगिनीम् ॥
न पश्येत् पतितां नग्नामुन्मत्तां प्रकटस्तनीम् ।
न दिवा सेवयेन्नारीं न तद् योनिं निरीक्षयेत् ॥
या काचिदङ्गना लोके सा मातृकुलसम्भवा ।
कुप्यन्ति कुलयोगिन्यो वनितानामतिक्रमात् ॥

रुद्रयामले—असंस्कारं पिबेद् द्रव्यं बलात्कारेण मैथुनम् ।
स्वहस्तेन पशुं हत्वा रौरवं नरकं व्रजेत् ॥

कुलार्णवे—प्रायश्चित्तं भृगोः पातं सन्न्यासं व्रतधारणम् ।
तीर्थयात्राभिगमनं कौलः पञ्च विवर्जयेत् ॥
वीरहत्या वृथापानं वीरद्रव्यापहारणम् ।
वीरस्त्रीगमनं चैव तत्संयोगश्च पञ्चमः ॥
महापातकमित्युक्तं कौलिकानां कुलान्वये ।

प्रायश्चित्तं तन्त्रोक्तभिन्नम् । व्रतधारणमपि तथैव । तीर्थयात्राभिगमनं स्मार्त्तप्रकारेण पीठयात्रायास्तन्त्रेषु विहितत्वात् । वीरस्त्रीगमनं च तत्स्वाम्यनुमत्या न निषिद्धम् ।

भगिनीं वा सुतां भार्यां यो दद्यात् कुलयोगिने ।
मधुमत्ताय देवेशि तस्य पुण्यं न गण्यते ॥

इति कुलार्णववचनात् । तथा—

गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरबुद्धिताम् ।
प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् ॥

पूर्वदोषयोः सतोरेव उभयत्यागे दोषाधिक्यमिदम् ।

विण्मूत्रोच्छिष्टं शङ्काभिर्युक्तः कर्म करोति यत् ।

तपोऽर्चनादि तत्सर्वमपवित्रं भवेत् प्रिये ॥

तथा—विविशुर्देशिकावासं शान्तचित्तोऽतिभक्तिमान् ।
व्यजनं पादुकां छत्रं वसनं वाहनादिकम् ॥
ताम्बूलं कज्जलं वेशमुत्सृज्य प्रविशेच्छनैः ।
पादप्रक्षालनं स्नानमभ्यङ्गं दन्तधावनम् ॥
मूत्रं निष्ठीवनं क्षौरं शयनं स्त्रीनिषेवनम् ।
वीरासनं च दुर्वाक्यमतिहासाङ्गमोटनम् ॥
केशमोचनमुष्णीषं कञ्चुकं नग्नतां तथा ।
पादप्रसारणं वादं कलहं दूषणं प्रिये ॥
अङ्गबाधाङ्गभङ्गादि-करास्फालनधूननम् ।
द्यूतं कुक्कुटमल्लादियुद्धमित्यादि चाम्बिके ॥
गुरुयोगिमहासिद्धिपीठक्षेत्राश्रमादिषु ।
नाचरेदाचरन्मोहाद् देवताशापमाप्नुयात् ॥

कालीकल्पे—रात्रौ पर्यटनं चैव रात्रौ शक्तिप्रपूजनम् ।
अकृत्वा कथमीशान मद्भक्तः कौलिको भवेत् ॥

कुलामृतदीपिकायाम्—

पूजाकालं विना नैव पश्येच्छक्तिं दिगम्बराम् ।
पूजाकालं विना नैवमुपेया सा हि साधकैः ॥

अयञ्चाचारः सर्वदा गोपनीयः । तथाहि कुलार्णवे—

वेदशास्त्रपुराणानि स्पष्टा वेश्यांगना इव ।
इयं च शाम्भवी विद्या गुप्ता कुलवधूरिव ॥
सुगुप्तकौलिकाचारमनुगृह्णन्ति देवताः ।
वाञ्छासिद्धिं प्रयच्छन्ति नाशयन्ति प्रकाशनात् ॥

कुलचूड़ामणौ—कुलाचारं दक्षिणाख्यं कथितं तव सुव्रते ।
न कस्मैचित् प्रवक्तव्यं यदीच्छेत् प्रियमात्मनः ॥
कुलपुष्पं कुलद्रव्यं कुलपूजां कुलं जपम् ।
गुरुं कुलपतिं चापि कुलमालां कुलाकुलम् ॥
कुलचक्रं कुलध्यानं सर्वथा न प्रकाशयेत् ।
प्रकाशात् सिद्धिहानिः स्यात् प्रकाशाद् बन्धनादिकम् ॥
प्रकाशाद् बलहानिः स्यात् प्रकाशाद् देवहिंसनम् ।

प्रकाशान्मृत्युलाभः स्यान्न प्रकाश्यं कदाचन ॥
पूजाकाले महेशानि यदि कोऽप्यत्र गच्छति ।
दर्शयेद्‌ वैष्णवीं मुद्रां विष्णुन्यासं यथास्तवम्‌ ॥
कदाचिदङ्गहानिः स्यान्न च व्यक्तिः कदाचन ।
परं पूजा न कर्त्तव्या न च व्यक्तिः कदाचन ॥
अन्तः शाक्ता बहिः शैवाः सभायां वैष्णवा मताः ।
नानारूपधरा वीरा विचरन्ति महीतले ॥

फेत्कारिणीतन्त्रे श्रीताराकल्पे—

सर्वदा गोपयेदेनं मनुं च गुरुमेव च ।
तेन वीर्यवती विद्या निर्वीर्या स्यात्‌ प्रकाशतः ॥

तन्त्रे—नोपवेश्यं महातीरे न शय्या तिमिरान्तरे ।
न निन्देद्‌ योगिनीचक्रं न निन्देद्‌ वामलोचनाम्‌ ॥
भस्मस्नानं प्रकुर्वीत तथा भक्त्याऽवलोकनम्‌ ।
वज्रपुष्पाङ्कितं यन्त्रं वज्रपुष्पेण पूजयेत्‌ ॥
पूजाकाले विशेषेण न स्मरेद्धरिनाम च ।
अन्यगन्धं परित्यज्य चन्दनं रक्तचन्दनम्‌ ॥
रक्तपुष्पैः समभ्यर्च्य विल्वपत्रेण चार्चयेत्‌ ।
तुलसी-मालती-धात्री-मरुवकेन नार्चयेत्‌ ॥
शक्तिं विनापि देवेशि जपहोमादितर्पणम्‌ ।
ध्यानपूजादिकं सर्वं सिद्धिरोधाय जायते ॥
पैष्टीपौष्पादिकं द्रव्यमन्यद्रव्यं परित्यजेत्‌ ।
वीरपूजा महेशानि यामिन्याः प्रहरे गते ॥
नोपवासं प्रकुर्वीत न चान्यद्‌ व्रतमाचरेत्‌ ।
मण्डपं विधिवत्‌ कृत्वा पताका नीलतोरणम्‌ ॥
नागशूलाङ्कितं देवि कुर्यात्‌ कुण्डं त्रिकोणकम्‌ ।

## अथ भावाः

भावचूडामणौ—देव्युवाच—

वीरभावो महादेव कथ्यते शृणु भैरव ।
निर्द्वन्द्वमानसो भूत्वा हृदा कामकला तनुः ॥

निशासु पूजा प्रवरा हेतुयुक्ता सदैव हि ।
निजं कुलं समाधाय स्वयं भैरवरूपधृक् ॥
कुलं च भैरवीरूपं तद्‌गात्रे न्यासविस्तरम् ।
विन्यस्य सकलं न्यासं नवयोन्यात्मकं तथा ॥

नवयोन्यात्मकमिति श्रीविद्यापरम् ।

प्रसूनतूलिकामध्ये पुष्पप्रकरसंयुते ।
नानागन्धसमाकीर्णे कुलद्रव्येण यन्त्रकम् ॥
लिखित्वा पूजयेच्छक्तौ घटस्थापनपूर्वकम् ।
स्ववामभागे षट्कोणं तन्मध्ये ब्रह्मरन्ध्रकम् ॥
लिखित्वा तत्र कुम्भं वै सौवर्णं राजतं तथा ।
ताम्रं भूमिमयं वापि महालोहविवर्जितम् ।
स्थापयेत् कलशाधारं कुम्भं सुगन्धिवासितम् ।
हेतुद्रव्यं ब्राह्मणादि भेदतः संप्रपूरयेत् ॥

ब्राह्मणादिभेदत इति । क्षीराज्यमध्वासवरूपं ब्राह्मणादिभिः पूरणीयमित्यर्थः । एवं च वीरस्यापि ब्राह्मणस्य हेतुस्थाने क्षीरमेव । अन्यस्य तु तदपि न इति बोध्यम् ।

तत्र यन्त्रं विलिख्यादौ यद् यत् कुलसमुद्भवम् ।
ध्यात्वेष्टदेवतां तत्र जपेदष्टोत्तरं शतम् ॥
धेनुयोनी प्रदर्श्याऽथ प्रसूतं तद् विचिन्तयेत् ।
दृष्ट्वामृतमुपात्तं वै नृत्यन्ति योगिनीगणाः ॥
नृत्यन्ति भैरवाः सर्वे नृत्यन्ति मातरोऽपि च ।
इन्द्रादयः सुराः सर्वे नृत्यन्ति मधुलोलुपाः ॥
ब्रह्मविष्णुमहेशाद्या नृत्यन्ति हर्षतत्पराः ।
अर्धभाण्डं त्रिधा कृत्वा गुरवे चैकभागकम् ॥
एकं कुलाय वै दत्त्वा एकेन देवतर्पणम् ।
पीत्वा कुलरसं नानावस्त्रालङ्कारभूषितः ॥
साक्षाद् यदि गुरुर्न स्यात् तदा तोये विसर्जयेत् ।
आनन्दरूपवान् भूत्वा पूजयेत् परमेश्वरीम् ॥
तत्तत्कल्पविधानेन तत् तद् यत्नेन पूजयेत् ।
विसर्जनं विधायाऽन्ते स्वकुले योजयेत् ततः ॥

तद्बिम्बरसपानेन अमृतं भुज्यते मया ।
तच्चकोररसास्वादे सम्मदो मम जायते ॥
तत्फलग्रहणादेव मेरुशृङ्गावरोहणम् ।
लतालिङ्गनमात्रेण सुधाधौतकलेवरः ॥
मूलयोगे कृते तत्र जपेदष्टसहस्रकम् ।
नित्यजापे च होमे च यत्र संख्या न चोदिता ॥
तत्रेयं गणना प्रोक्ता अष्टोत्तरसहस्रकम् ।
जलपूतं हविर्द्रव्यं गृहीत्वा तर्पयेत् ततः ॥
विधाय तर्पणं देव प्रदक्षिणमनुव्रजेत् ।
स्तुत्वा प्रणम्य कल्पोक्तस्तवेन तोषयेत् ततः ॥
इति वीरकुलं देव देववन्द्यं मनोहरम् ।
यद्देशे विद्यते वीरस्तत्कुलं वापि भैरव ॥
न च मारीभयं तत्र न च राजभयादिकम् ।
सुमङ्गलं सदा तत्र धनपुत्रविवर्धनम् ॥
लक्ष्मीस्तत्र महादेव सुस्थिरा भवति ध्रुवम् ।
मन्त्रः स्वप्नप्रबोधिन्या अवश्यं वृक्षमूलके ॥
योजनीयः प्रयत्नेन न च विघ्नः प्रजायते ।
नान्यवीरस्य तद्योग्यं ग्रहणैर्दैवतैरपि ॥
योगिनीभिर्न लुप्तं च तन्न पापेन लिप्यते ।
यत्र तत्र कुजे वारे श्मशानगमने कृते ॥
पूजाफलं भवेत् तत्र सप्तवासरसम्मितम् ।
चतुर्दश्यां गते तत्र पक्षपूजाफलं भवेत् ॥
न गच्छेन्मार्यतः स्थाने पशुरेव न संशयः ।
नास्त्यस्मादधिकं देव इति चिन्तापरायणः ॥
मद्येन द्रव्यभोक्ता तु भवेत् कुलपरायणः ।
साधके क्षोभमापन्ने मम क्षोभः प्रजायते ॥
तस्माद् यत्नाद् वीरवरो भवेद् भोगयुतः सुखी ।
भोगेन मोक्षमाप्नोति भोगेन कुलसाधनम् ॥
विना हेतुमनास्वाद्य क्षोभयुक्तो महेश्वरः ।
न पूजा मम सम्पर्कं न ध्यानमनुचिन्तनम् ॥

तस्माद् भुक्त्वा च पीत्वा च पूजयेत् परमेश्वरीम् ।
नात्र प्रच्युतिदोषोऽस्ति नापरं दोषभूषणम् ॥
यद् यद् वदति निद्राति यत् करोति यदर्चति ।
तत् सर्वं कुलरूपं तु ध्यात्वा च विहरेत् सुखी ॥
एकाकी निर्जने देशे श्मशाने पर्वते वने ।
शून्यगेहे नदीतीरे निःसङ्गो विहरेन् मुदा ॥
वीराणां जपकालस्तु सर्वकालः प्रशस्यते ।
सर्वदेशे सर्वपीठे कर्त्तव्यं च न संशयः ॥
यदि विप्रो भवेद् भ्रष्टः कुलधर्मपरायणः ।
तदानेन विधानेन कर्त्तव्यं कुलतोषणम् ॥

विप्रो वीर एव ।

अपरापुष्पगर्भे तु कुलस्थानं मनोहरम् ।
सर्वदेवमुखं तत्र महाकामकलात्मकम् ॥
हयारिकुसुमे देवः स्वयमस्ति सदाशिवः ।
तन्मध्ये लघुमादाय पुष्पमध्ये तु चन्दनम् ॥
रक्तं वा कुसुमं दत्त्वा ध्यात्वात्मानं शिवात्मकम् ।
योजयेच्छिवशक्त्योस्तु ऐक्यं संभावयेद् धिया ॥
क्षणं विचिन्त्य तत्रैव सम्पूज्य परमेश्वरीम् ।
जप्त्वा तदेव कुण्डाख्यं द्रव्यं परमदुर्लभम् ॥
यत्राऽपराजितापुष्पं जवापुष्पं च भैरव ।
करवीरे रक्तशुक्ले द्रोणपुष्पं च तिष्ठति ॥
तत्र देवी वसेन् नित्यं तद् यन्त्रे पूजयेन् मम ।
दत्ते चैव जवापुष्पे पट्टवस्त्रफलं लभेत् ॥
ब्रह्महत्यादिकं पापं क्षणान् नश्यति निश्चितम् ।
अपरायास्तु माहात्म्यं वक्तुं नहि महेश्वर ॥
वीरसाधनकार्यं च कर्त्तव्यं वीरपूरुषैः ।
दिव्यैरपि च कर्त्तव्यं पशुभिर्न च पामरैः ॥
वरं पामरकार्यं च न पशोरिति निश्चितम् ।
यद् यत्र सत् पुरा प्रोक्तं संकेतमन्त्रसाधने ॥
अञ्जनं गुटिकादिं च कुर्याद् वीरो महाबलः ।

दिव्ये वीरे न भेदोऽस्ति यद्भेदं तत् तु कथ्यते ॥
शान्तो विनीतो मधुरः कलालावण्यसंयुतः ।
दिव्यस्तु देववत् प्रायो वीरश्चोद्धतमानसः ॥
विभूतिभूषणैर्वापि चन्दनैर्वा विलेपितः ।
आकारगोपनो वापि त्यक्तो वा कुलभैरव ॥
रक्तचन्दनदिग्धो वा वैष्णवश्चाप्यवैष्णवः ।
अपमाने च पूजायां हृष्टः पुष्टः सदा भवेत् ॥
देवनिन्दापरो वापि तत्तत्पूजापरोऽपि वा ।
पूजापरस्तद्रहितः कुलाकुलमते स्थितः ॥
निजभावसमायुक्तो देववत् विहरेत् क्षितौ ।
स्वकुलान्ते पुरश्चर्या कार्या रात्रौ न चान्यथा ॥
वेदहीने द्विजे देव यथा न श्रुतिसंकथा ।
विष्णुभक्तिं विना देवीभक्तिर्न प्रभवेद् यथा ॥
शाक्तज्ञानं विना मुक्तिर्यथा हास्याय कल्पते ।
गुरुं विना यथा तन्त्रे नाधिकारः कथञ्चन ॥
पतिहीना यथा नारी सर्वकर्मविवर्जिता ।
कुलं विना देवविधौ कदापि मम साधने ॥
नाऽधिकारीति कौलेयस्तस्माद् भावपरो भव ।
अविनीतं कुलं यस्य स कथं मम पूजकः ।
तस्माद् यत्नात् तथा कार्यं यथा स्याद् विनयान्वितम् ॥
भावाभावात् कुले शास्त्रे नाधिकारः कथञ्चन ।
तेन भावविशुद्धस्तु साधकः कौलिको भवेत् ॥

इति वीरभावक्रमः

## अथ पशुभावः

( भावचूडामणौ ) देव्युवाच—

पशुभावं प्रवक्ष्यामि शृणु वत्स समाहितः ।
यथाविधि पशोर्विद्यां गृहीत्वा भावतत्परः ॥
प्रथमं पूर्वसेवार्थं यत्नतः शुद्धिमाचरेत् ।
न मत्स्यभोजनं कुर्यान् न स्त्रियं मनसा स्मरेत् ॥
न परद्रव्यलोभी स्यान्न भोगे मानसं भजेत् ।

सिन्धुतीरे पर्वते वा कानने च सुरालये ॥
बिल्वमूले विविक्ते च पुण्यक्षेत्रे च शोभने ।
न शूद्रदर्शनं कुर्यात् कौटिल्यं यत्नतस्त्यजेत् ॥
देवता शुभवर्णा तु ध्यातव्या सुसमाहितैः ।
त्रिसन्ध्यं देवपूजा तु त्रिसन्ध्यं जपमाचरेत् ॥
रात्रौ मन्त्रं च मालां च स्पृशेन्नैव कदाचन ।
न मन्त्रमुच्चरेद् भुक्त्वा मौनी स्यात् सर्वकर्मसु ॥
पर्वकाले स्त्रियं नैव गच्छेत् साधकसत्तमः ।
पुष्पं गन्धं जलं चैव स्वयमानीय पूजयेत् ॥
मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्जयेत् ।
ऋतुकालं विना चापि गच्छेन्न स्त्रियमादरात् ॥
पुराणश्रवणे श्रद्धा वेदवेदार्थतत्परः ।
न रात्रौ भोजयेद् विद्वान् ताम्बूलं परमेश्वर ॥
गुरुणा यद् यदादिष्टं तत् सर्वं यत्नतश्चरेत् ।
स्वजातकुसुमं चैव हेतुद्रव्यं च भैरव ॥
स्पृष्ट्वा तथा समाघ्राय पञ्चगव्येन शुध्यति ।
रक्तवस्त्रं न गृह्णीयाद् देवीभक्तिपरायणः ॥
विष्णुतन्त्रेषु कल्याणि तदनुष्ठानमेव च ।
कार्यं वीरकथालापं न कुर्याद् वीरवन्दित ॥
नित्यश्राद्धं गयाश्राद्धं सन्ध्यावन्दनमेव च ।
तीर्थस्नानं पीठदेशगमनं धर्मतत्परः ॥
पशुस्तु द्विविधो देव पूर्वेण सह भैरव ।
अस्याधिकारः पूजायां न गुरुत्वे कदाचन ॥
पूर्वस्य नाधिकारोऽस्ति पूजादेशगतागतौ ।
पूर्वस्तु सर्वकौलाद्यैर्बहिष्कार्यः स्वदेशतः ॥
पूर्वदर्शनमात्रेण कुलदर्शनमाचरेत् ।
ब्रह्महत्यादिकं पापं वरं सत्यं न च प्रभो ॥
पूर्वदर्शनमेवात्र सत्यं सत्यं वदाम्यहम् ।
ममात्मा सोऽपि देवेश विभुरित्यपि स प्रभो ॥
तथापि तत्र मे शङ्का जायते तत् पदे पदे ।

वरं कुलं परित्याज्यं वरं स्वकुलहिंसनम् ॥
वरं स्वकुलहानिस्तु वरं स्वकुलकुट्टनम् ।
कायेन मनसा वाचा वरं स्वकुलपालनम् ॥
न कुर्वीत पशोः सङ्गं स्वमार्गक्षयकारणात् ।
कुलशास्त्रे द्वयं पापं गरिष्ठं कुलनाशनम् ॥
स्वकुले महती निन्दा परयोगः कुलेश्वर ।
तस्मादपि महापापं पशुसङ्गात् प्रजायते ॥
स भावः पशुभावेन जन्मत्रयविभावनात् ।
वीरभावो भवेद् देव ततो दैवः प्रजायते ॥
दैवाच्च जायते वीरो वीराद् दैवः प्रजायते ।
सर्वथा तत्र भावौ द्वौ न प्रकाश्यौ कुलेश्वर ॥
दैवे वीरे न सन्देहः साम्यमित्यभिधीयते ।
भावस्तु मानसो धर्मः शाब्दः स हि कथं भवेत् ॥
तस्माद् भावो न वक्तव्यो दिङ्मात्रं समुदाहृतम् ।
यथेक्षुदण्डमाधुर्यमशनैर्ज्ञायते प्रभो ।
तथा भावविभावस्तु मनसा परिभाव्यते ॥

इति महामहोपाध्याय-ठक्कुर-श्रीनरसिंहविरचिते ताराभक्ति-
सुधार्णवे चतुर्थस्तरङ्गः ॥ ४ ॥

## पञ्चमस्तरङ्गः

### अथ नित्यविधिः

कुलचूड़ामणौ—साधकः प्रातरुत्थाय कुलवृक्षं प्रणम्य च।

मूलादिब्रह्मरन्ध्रान्तं कुलं ध्यात्वा गुरुं स्मरेत्॥

कुलवृक्षा रुद्रयामले—

श्लेष्मातकं करञ्जं च निम्बाश्वत्थकदम्बकम्।

विल्वं वटं शालतालं शाखोटं खर्जुरं तथा॥

कुलवृक्षाः समुद्दिष्टा । इति।

वस्तुतः कुलवृक्षो वराङ्गनेति रहस्यविदः। वीरचूड़ामणौ—

साधकः प्रातरुत्थाय संस्मरेद् गुरुमादरात्।

महाचीनगुरुं ध्यात्वाऽथवर्षिगुरुक्रमम्॥

पञ्चोपचारैः सम्पूज्य वीरद्रव्यक्रमेण तु।

नीलाम्बरं नीलविलेपयुक्तं शङ्खादिभूषिततनुं मुदितं द्विनेत्रम्।

वामाङ्कपीठस्थितनीलशक्तिं वन्दामि वीरं करुणानिधानम्॥

परां तु देवतां ध्यात्वा हृदये नीलसुन्दरीम्।

खर्वां नीलां विशालाक्षीं पञ्चमुद्राविभूषिताम्॥

कपालकर्त्तृकाहस्तां खड्गेन्दीवरधारिणीम्।

व्यालमालाजटाजूटां पीनोन्नतपयोधराम्॥

नवयौवनसम्पूर्णां मदघूर्णितलोचनाम्।

एवं ध्यात्वा महादेवीं सर्वज्ञः साधको भवेत्॥

वीरहंसमहाविद्यासङ्कल्पं कारयेद् बुधः।

हंसाख्या-साधनं वक्ष्ये मन्त्रिणां हितकाम्यया॥

यस्य विज्ञानमात्रेण सर्वज्ञो भुवि जायते।

हंसात्मिकां भगवतीं जीवो जपति सर्वदा॥

अस्याः स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः।

ऋषिहंसः समाख्यातः परहंसश्च देवता॥

अव्यक्तश्छन्दो गायत्री विनियोगो योगसिद्धिदः।

सुरेन्द्रसंहितायाम्—ऋषिहंसो व्यक्तपूर्वो गायत्रं छन्द उच्यते।

देवतापरमादित्यो हंसो हं बीजमुच्यते ॥
अः शक्तिः कीलकः सोऽहं प्रणवस्तत्त्वमेव हि ।
उदात्तः स्वर इत्येवं मनोरस्य प्रकीर्त्तितः ॥
मोक्षार्थे विनियोगः स्यादेवं कुर्यात् सदा नरः ॥

वीरचूडामणौ—सूर्यात्मने च हृद् देवि सोमात्मने शिरस्तथा ।
निरञ्जनं शिखा ज्योतिर्निराभासा तथापरे ॥
अव्यक्तं नेत्रयोर्न्यस्य अनन्तोऽस्त्रे फडंप्यजेत् (?) ।
एवं न्यासविधिं कृत्वा गणेशादौ समर्पयेत् ॥

सुरेन्द्रसंहितायाम्—हंसात्मिकां भगवतीं जीवो जपति सर्वदा ।
हकारेण बहिर्याति सकारेण विशेत् पुनः ॥
अस्याः सम्बोधमात्रेण जीवन्मुक्तो भवेन्नरः ।
प्राणायामप्रभावेण जीवन्मुक्तस्तु जायते ॥
एकविंशतिसाहस्रं षट्शताधिकमेव च ।
प्रजपेत् प्रत्यहं जीवो ब्रह्मानन्दमयीं पराम् ॥
उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम् ।
विना जपेन सततं जपो भवति सर्वदा ॥
एवं जपस्तु विज्ञातो गणेशादौ निवेदयेत् ।

वीरचूडामणौ—षट् शतानि गणेशस्य षट्सहस्रं प्रजापतेः ।
षट्सहस्रं गदापाणौ षट् सहस्रं पिनाकिनः ॥
सहस्रमात्मने चैव सहस्रं परमात्मने ।
सहस्रं गुरवे चैव सङ्कल्पोऽयं यथाविधि ॥
रक्तवर्णं गणेशञ्च मूलाधारे चतुर्दले ।
वादिवेदसमायुक्ते षट् शतं च समर्पयेत् ॥
स्वाधिष्ठानं विद्रुमाभं षट्कोणं वादिषट्ककम् ।
सावित्र्या च समायुक्ते ब्रह्मणे च समर्पयेत् ॥
विद्युत्पुञ्जप्रभाभं च दलं डादिदशाक्षरम् ।
लक्ष्मीनारायणौ वन्दे षट् सहस्रं निवेदयेत् ॥
महानीलप्रभाभे च कादिद्वादशपत्रके ।
उमामहेश्वरौ वन्दे षट् सहस्रं समर्पयेत् ॥
विशुद्धे धूम्रपत्रे च कलापत्रे स्वरान् न्यसेत् ।

प्राणशक्त्यात्मकौ वन्दे सहस्रं च समर्पयेत् ॥
आज्ञायां विद्युदाभायां शुभौ हक्षौ नियोजयेत् ।
परमात्मनि पराशक्तौ सहस्रं च समर्पयेत् ॥
कर्पूरद्युतिसंराजत्-सहस्रदलपङ्कजे ।
नीलात्मकं गुरुं ध्यायेत् सहस्रं च समर्पयेत् ॥
समुद्रमेखले देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तेऽस्तु पादस्पर्शं क्षमस्व मे ॥
चरणं धारयेद् देवि आत्मश्वासानुसारतः ।
देहशौचादिकं कुर्याद् भस्मस्नानं समाचरेत् ॥
वीरासनोपविष्टस्तु वीरभस्मानुलेपनम् ।
वीरं ध्यात्वा महादेवि वीरमालां जपेद् बुधः ॥
अष्टोत्तरसहस्रं च वामहस्ते समर्पयेत् ।

वीरभस्म श्मशानभस्म । वामहस्त इत्यभिधानात् मूलमन्त्रजपोऽयमिति प्रतिभाति । विशुद्धेश्वरे तु—

यथा शक्त्या जपं कृत्वा स्तुत्वा सन्तोषयेच्छिवाम् ।

इत्युक्तम् । एतत्पूर्वमन्यत्र गुरुमन्त्रजपोऽप्युक्तः । तदुक्तं तत्त्वचिन्तामणौ—

अथवा वाग्भवं मायां लक्ष्मीबीजं समुद्धरेत् ।
हसखफ्रें तथानन्दभैरवाख्यं सहखफ्रें ॥
गुरुनाम तथा शक्तिनाम श्रीपादुकां स्मरेत् ।
दशधा सप्तधा वापि त्रिधा वा प्रजपेत् सुधीः ॥
जपं समर्पयेत् पश्चात् श्रीगुरोर्दक्षिणे करे । इति ।

वीरचूडामणौ—वज्रपुष्पं वरारोहे कारयेद् दन्तधावनम् ।

वज्रपुष्पमार्त्तवं जवाकुसुमं वा । इदं च दन्तधावनं देहशौचानन्तरमेव कार्यम् । अन्यत्र तथा दर्शनात् । न्यासं कुर्यान्महेशानि शक्तिं साङ्गो स्पृशेद् बुधः ।

हावभावादिकं कुर्यात् स्नानकर्म समाचरेत् ॥

वीरभस्मानुलेपनादि वीरसाधकमात्रपरम् । इदञ्च प्रातःकृत्यमावश्यकम् । तदुक्तं यामले—प्रातःकृत्यमकृत्वा च यो देवीं भक्तितोऽर्चयेत् ।

पूजा च विफला तस्य शौचहीना यथा क्रिया ॥

## अथ स्नानम्

तच्च त्रिविधम् । आद्कमान्त्रमानसभेदात् । तत्रादौ प्रधानत्वादौदकं निरूप्यते ।

नारदपञ्चरात्रे—शङ्कुनास्त्राभिजप्तेन शुचिः स्नायात् तु मृत्तिकाम् ।
गृहीत्वाऽस्त्रेण संमन्त्र्य यथा जलनिकेतनम् ॥
तत्रादौ जलकुलं तु क्षालयेदस्त्रवारिणा ।
मृदं कृत्वा द्विधा तत्र एकभागोपगं ततः ॥
निधाय गोमयं दर्भात् तिलांश्चैवाभिमन्त्रितान् ।
लौकिकं गौणमाद्येन भागेनैकेन यत्नतः ॥
मलस्नानं पुरा कृत्वा विधिस्नानं समाचरेत् ।

कुलचूडामणौ—अथ वक्ष्यामि ते वत्स स्नानं कुलसुखावहम् ।
कृष्णरक्तहरिल्लीला विविधा मम मूर्त्तयः ॥
तत्र यत्कुलगः शिष्यः स तद्रूपं परामृशेत् ।
आचान्तः कुलदर्भेण सदर्भः कुलपुष्पकम् ॥
कुलपात्रे सदर्भं च सतिलं सजलं ततः ।
गृहीत्वा कुलदेवस्य प्रीतये स्नानमाचरेत् ॥
कृतसङ्कल्प एवासौ कुलचक्रं जले न्यसेत् ।
कुलसुरात् समानीय कुलमुद्रां कुशेन च ॥
कुलतीर्थानि तत्रैव समानीय कुलात्मकम् ।
तत् तोयं च त्रिधा पीत्वा त्रिधा च प्रोक्षणं तनोः ॥

यत्कुलगः समन्त्रदीक्षितः । कुलदर्भो यथा रुद्रयामले—
त्रयो दर्भाः समुद्दिष्टाः सुवर्णै रजतैः कुशैः ।
तत्र शाक्ते द्वयं चान्यदन्येषां तु त्रयो मताः ॥
सुवर्णं रजतं चैव जपपूजादिकर्मसु ।
कुशकार्यकरं प्रोक्तं न तु वन्यकुशाः कुशाः ॥

अन्यत्रापि—तर्जन्या रजतं धार्यं स्वर्णं धार्यमनामया ।
एष एव कुशः प्रोक्तो न दर्भो वनसम्भवः ॥

यामले—विना वै दूर्वया देवी-पूजा नास्तीह कर्हिचित् ।
तस्माद् दूर्वा गृहीतव्या सर्वपुष्पमयी शुभा ।
हस्ते दूर्वाङ्कुरं दत्त्वा आचामेद् विधिपूर्वकम् ।

कुलपुष्पं जवापुष्पादिकम् । कुलपात्रं सुवर्णादिपात्रम् । कुलदेवस्य इष्टदेवतायाः । कुलचक्रं त्रिकोणचक्रम् । तल्लिखनप्रकारस्तु मालिनीतन्त्रे—
त्रिकोणं मूलमन्त्रेण सावित्रे हंसकं जपन् ।

दक्षावर्त्तक्रमेणैव लिखेद् देवि समाहितः ॥

मूलबीजेनेति। मन्त्रान्तरे। सावित्रे सूर्यमन्त्रे। हंसकं हंस इति मन्त्रम्। अङ्कुश-मुद्रा च—दक्षमुष्टिं विधायाऽथ तर्जन्यङ्कुशरूपिणी।

अङ्कुशाख्या महामुद्रा त्र्यैलोक्याकर्षणक्षमा ॥

इति तन्त्रोक्ता। तीर्थावाहनमन्त्रश्च श्रीक्रमसंहितायाम्—

गङ्गे च यमुने चैव गोदावरि सरस्वति।

नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

त्रिधा तोयपानमाचमनरूपमेव। तच्च मूलमन्त्रेण। प्रोक्षणमपि तेनैव। तदुक्तं त्रिशक्तिरत्ने—त्रिराचम्य च मूलेन मुद्रया कुम्भसंज्ञया।

त्रिवारं मन्त्रपूतेन शिरः संप्रोक्षयेत् सुधीः ॥

मुद्रा चेयमुक्ता तन्त्रे—

दक्षाङ्गुष्ठे पराङ्गुष्ठं क्षिप्त्वा हस्तद्वयेन तु।

सावकाशा चैकमुष्टिर्मुद्रेयं कुम्भसंज्ञिता ॥

गन्धर्वतन्त्रे—मूलं पठन् मूर्ध्नि तोयं मुद्रया कुम्भसंज्ञया।

क्षिप्त्वा वारत्रयं पश्चादाचामेत् साधकाग्रणीः ॥

आत्मविद्याशिवैस्तत्त्वैस्ततो यागगृहं व्रजेत्।

आत्मविद्याशिवैस्तत्त्वैरिति। आत्मतत्त्वेन स्थूलदेहं शोधयामि स्वाहा। विद्यातत्त्वेन सूक्ष्मदेहं शोधयामि स्वाहा। शिवतत्त्वेन परदेहं शोधयामि स्वाहेति मन्त्रत्रयेण चुलुकत्रयं गृह्णीयादित्यर्थः। नीलतन्त्रे—

विद्यया त्रिर्निमज्यैवमाचामेत् पाथसा तथा।

वशिष्ठसंहितायाम्—कृत्वादौ वैदिकं स्नानं ततस्तान्त्रिकमाचरेत्।

विन्यस्याङ्गे षडङ्गानि प्राणायामपुरःसरम् ॥

श्रीसूर्यमण्डलात् तीर्थमाकृष्याऽङ्कुशमुद्रया।

वमित्यनेन चाप्लाव्य कवचेनाऽवगुण्ठयेत् ॥

संरक्ष्याऽस्त्रेण मूलेन मन्त्रयेद् रुद्रसंख्यया।

आत्मरक्षां ततः कुर्याद् वारिक्षेपेण चास्त्रतः ॥

निमज्य तत्र श्रीदेवं ध्यायेच्छक्तया मनुं जपेत्।

उन्मज्य कुम्भमुद्रां च बद्ध्वा सिञ्चेत् स्वमूर्धनि ॥

त्रिपुरार्णवे—विधाय वैदिकं स्नानं ततस्तान्त्रिकमाचरेत्।

मृदमस्त्रेण चादाय तेन तामभिषिच्य च ॥

शिखामन्त्रेण संशोध्य मन्त्रयेन्मूलमन्त्रतः ।
मूर्धादिपादपर्यन्तं विलिप्य च तया वपुः ॥
सम्मुखीकरणीं मुद्रां बद्ध्वा प्राणं निरुध्य च ।
निमज्य तूष्णीमुत्थाय नाभिमात्रे जले स्थितः ॥
प्राणायामत्रयं कृत्वा मूलमन्त्रेण मन्त्रवित् ।
विन्यस्य च षडङ्गानि कल्पयेत् तीर्थमग्रतः ॥
ततः संप्रार्थयेत् तीर्थं सूर्यमण्डलगं ततः ।
घृणिमन्त्रेण मन्त्रज्ञो भित्त्वा चाङ्कुशमुद्रया ॥
तीर्थावाहनमन्त्रेण तीर्थमावाहयेत् प्रिये ।
मूलमन्त्रेण संयोज्य कल्पिते तीर्थमण्डले ॥
तीर्थशक्तिं च तत्रैव समावाह्याऽर्कमण्डलात् ।
ध्यात्वा तन्मनुनाऽभ्यर्च्य गङ्गामन्त्रेण मन्त्रयेत् ॥
सप्तकृत्वः शिवे चास्मिन् शृणु मन्त्रद्वयं प्रिये ।
जलस्थं व्योमषड्दीर्घ-स्वरभिन्नं सबिन्दुकम् ॥
सर्वानन्दमये तीर्थे शक्ते एह्येहियुगं द्विठः ।
एकविंशाक्षरः प्रोक्तस्तीर्थशक्तिमनुः प्रिये ॥
तारं नमो भगवति ब्रूयादम्बे ततोऽम्बिके ।
अम्बालिके महामालिन्येह्येहि भगवत्यथ ॥
अशेषतीर्थालवाले मायाश्रीबीजमुच्चरेत् ।
शिवजटाधिरूढे च गङ्गे गङ्गाम्बिके द्विठः ॥
गङ्गाविद्येयमाख्याता त्रिपञ्चाशद्भिरक्षरैः ।
भुवनेश्या समालोड्याऽमृतीकृत्य सुधाणुना ॥
कवचेनाऽवगुण्ठ्याऽथ संरक्ष्याऽस्त्रेण मन्त्रवित् ।
मूलेन देवतां तत्र साङ्गां सावरणां तथा ॥
समावाह्य जले ध्यात्वा तत्पादद्वयनिर्गतम् ।
ध्यात्वा तीर्थं स्मरन् मूलमन्त्रं स्नायाज्जले त्रिशः ॥
उन्मज्य मूलमन्त्रेण सिञ्चेत् कं कुम्भमुद्रया ।
आचम्य विधिना पश्चान् मूलमन्त्रेण तर्पयेत् ॥
त्रिधा देवीं समुत्तीर्य जलाद्धौते शुभाम्बरे ।
परिधायाऽथ तिलकं कृत्वा सन्ध्यां समाचरेत् ॥

संप्रार्थयेदिति—ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।

तेन सत्येन मे देवेश तीर्थं देहि दिवाकर ॥

इत्यनेनेत्यर्थः । तीर्थावाहनमन्त्रेणेति । गङ्गे चेत्यनेनेत्यर्थः । ध्यात्वेति—

सर्वानन्दमयीमशेषदुरितध्वंसां मृगाङ्कप्रभां

त्र्यक्षामूर्ध्वकरद्वयेन दधतीं पाशं सृणिं वामतः ।

अन्तश्चामृतपूर्णहेमकलशौ मुक्ताक्षमालां वरां

गङ्गां सिन्धुसरिद्वरादिसहितां श्रीतीर्थशक्तिं भजे ॥

इति प्रकारेण । एतेषां प्रकाराणामविरोधे समुच्चयः । विरोधे विकल्पः । त्रिपुरार्णवोक्तप्रकारस्तु त्रैपुर एवेत्यपि वदन्ति ।

## अथ मान्त्रस्नानम्

नारदपञ्चरात्रे—"अथ मान्त्रं शुभं शृणु" इत्युपक्रम्य—

तोयाभावे तु यत् कार्यं दुर्गे काले वशी ततः ।

गमने क्षिप्रसिद्ध्यर्थं गुरुकार्येष्वतन्द्रितः ॥

प्राप्तापद्यथ विप्रेन्द्र निशाभागे तथा मुने ।

प्रक्षाल्य पादावाचम्य प्रोद्धृतेन तु वारिणा ॥

स्थानं दश दिशः प्राग्वत् संशोध्योपोविशेत् ततः ।

अस्त्रं हस्ततले न्यस्य क्रमान् न्यासान् ततश्चरेत् ॥

मूलमन्त्रादितः कुर्यात् सर्वमन्त्रगणेन वै ।

केवलादुदकस्नानात् संस्कारपरिवर्जितात् ॥

प्रभासादिषु तीर्थेषु यत् फलं स्नातकस्य तु ।

ज्ञेयं दशगुणं तस्मान्मन्त्रस्नानस्य निश्चयात् ॥

तोयाभावे औदकस्नानक्षमतोयाभावे । अस्त्रमित्यादि । स्वविद्याया अस्त्रमन्त्रं करयोर्विन्यस्य मन्त्रन्यासपूर्वकं स्वतन्त्रोक्तन्यासजालं कुर्यादित्यर्थः । केवलादिति । स्नानमिह न्यासरूपमेव । तन्त्रान्तरे तु—

मणिबन्धादधो हस्तौ पादौ गुल्फादथाननम् ।

क्षालयेत् स्नानमेतत् स्यात् पञ्चाङ्गं शुद्धिदायकम् ॥

## अथ मानसस्नानम्

शैवागमे—मनसा मूलमन्त्रेण प्राणायामपुरःसरम् ।

कुर्वीत मानसं स्नानं सर्वत्र विहितं च यत् ॥

सर्वत्र सर्वविद्यासु ।

नारदपञ्चरात्रे—ध्यानस्नानमथो वक्ष्ये द्वाभ्यामपि परं च यत्।
खस्थितं पुण्डरीकाक्षं मन्त्रमूर्त्तिं प्रभुं स्मरेत्॥
तत्पादोदकजां धारां निपतन्तीं स्वमूर्धनि।
चिन्तयेत् सूक्ष्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम्॥
तया संक्षालयेत् सर्वमेतद्देहगतं मलम्।
तत् क्षणाद् विरजा मन्त्री जायते स्फटिकोपमः॥
इदं स्नानवरं मन्त्रस्नानाच्छतगुणं स्मृतम्।

पुण्डरीकाक्षमित्युपलक्षणम्। या यस्य देवता स तां स्मरेदिति तात्पर्यम्। द्वाभ्यामिति। अल्पायासेन तत्फलकत्वाद् द्वाभ्यां श्रेष्ठमित्युक्तम्। न त्वतस्तत् प्रधानमिति बोध्यम्। अस्यास्तु विद्याया महीचीनक्रमोपास्यत्वादत्र मानसस्नानमेव प्रधानम्। तत उत्थाय वाससी बिभृयात्। तदुक्तं कुलचूडामणौ—
उत्थाय कुलवस्त्रे द्वे परिधाय कुलेन तु।
तिलकं कुलरूपं तु कृत्वाऽवश्यं समाप्य च॥

कुलवस्त्र इत्यत्र कुलपदमुत्कृष्टरक्तत्वाचि। कुलेन मूलमन्त्रेण। कुलरूपं तिलकम्। "श्मशानमृद्भिः सततं त्रिपुण्ड्रं कारयेत् सुधी"रिति मत्स्यसूक्तोक्तं वीरतिलकम्।

नारदपञ्चरात्रे—सुधौतं परिधायाऽथ वस्त्रयुग्ममखेदकम्।
तदभावादथ शाटीं योगपट्टकसंयुताम्॥
न चैकवाससा यस्माद् भवितव्यं कदाचन।

स्वतन्त्रतन्त्रे—मोक्षार्थी रक्तवस्त्रे द्वे भोगार्थी श्वेतवाससी।
परिधाय ततो विद्वान् यागभूमिं यथा विशेत्॥

यामले—बिभृयाद् वाससी शुभ्रे तिलकं वर्णभेदतः।

वर्णभेदत इति—ब्राह्मणस्योर्ध्वपुण्ड्रं स्यात् क्षत्रियस्य त्रिपुण्ड्रकम्।
वैश्यानामर्धचन्द्रं स्याच्छूद्रस्य वर्तुलाकृतीति॥

नारदपञ्चरात्रोक्तक्रमेणेत्यर्थः। समयातन्त्रे—
भस्मना तिलकं कुर्याद् मृद्भिर्वा पुण्ड्रकत्रयम्।

भैरवीतन्त्रे—तिलकं रक्तगन्धेन गोपीचन्दनकेन वा।
देव्यस्त्रं विलिखेद् भाले तारबीजं ततो हृदि॥
शक्तिं मध्यगतां कुर्यात् साधको नरपुङ्गवः।

भैरवीतन्त्रे—आचम्य प्राङ्मुखो भूत्वा उपविश्य च मन्त्रवित्।
वैदिकीं तान्त्रिकीं कुर्यात् ततः सन्ध्यां समाहितः॥

शैवागमे—प्राणायामत्रयं कृत्वा मूलमन्त्रेण मन्त्रवित् ।
अङ्गानि विन्यसेद् देहे करन्यासपुरःसरम् ॥
अमृतीकृत्य पुरतो जलं च धेनुमुद्रया ।
अभिमन्त्र्य च मूलेन सप्तवारं च साधकः ॥
अकारादिक्षकारान्तैर्मातृकार्णैः सबिन्दुभिः ।
प्रत्यर्णं प्रोक्षयेन्मूर्ध्नि कुशैर्मूलेन वा त्रिधा ॥

कुमारीकल्पे—प्रणवं पूर्वमुद्धृत्य मणिधरणि वज्रिणि ।
रक्षद्वयं तथा हूं फट् स्वाहेति तदनन्तरम् ॥
अनेनैव हि मन्त्रेण रक्षां कुर्याद् विचक्षणः ।
पुनराचम्य विन्यस्य षड‍ङ्गमपि मन्त्रवित् ॥
वामहस्ते जलं गृह्य गलितोदकबिन्दुभिः ।
सप्तधा प्रोक्षणं कृत्वा मूर्ध्नि मन्त्रं समुद्गिरन् ॥
अवशिष्टोदकं दक्षे हस्ते संगृह्य मन्त्रवित् ।
इड़या कृष्णदेहान्तः क्षालितं पापसञ्चयम् ॥
कृष्णवर्णं तदुदकं दक्षनासाभिरेचितम् ।
दक्षहस्तेन तन्मन्त्री पापरूपं विचिन्त्य च ॥
पुरतो वज्रपाषाणे प्रक्षिपेदस्त्रमन्त्रतः ।

रक्षा शिखाबन्धनरूपैवेति तत्त्वविदः । यामले—
षड‍ङ्गन्यासमाचर्य वामहस्ते जलं ततः ।
गृहीत्वा दक्षिणेनैव संपुटं कारयेत् ततः ॥
शिववायुजलपृथ्वी-वह्निबीजैस्त्रिधा पुनः ।
अभिमन्त्र्य च मूलेन सप्तधा तत्त्वमुद्रया ॥
निक्षिपेत् तज्जलं मूर्ध्नि शेषं दक्षे निधाय च ।
शरीरान्तस्थितं पापं क्षालयेत् साधकाग्रणीः ॥
मूलेन तिलकं कुर्यात् सन्ध्यैषैव हि कौलिकी ।
उद्दिश्य कुलगं शिष्यं कथिता कुलसुन्दरि ॥

शिवबीजं हकारः । वायुबीजं यकारः । जलबीजं वकारः । पृथ्वीबीजं लकारः । वह्निबीजं रेफः । एतेषां च सानुस्वाराणां बीजत्वम् । सजलं वामहस्तं दक्षहस्तेन संपुटीकृत्य एभिर्बीजैस्त्रिधा जलमभिमन्त्रयेत् । तत्त्वमुद्रा अनामाङ्गुष्ठ-योगेन भवति । तथा च हस्तस्थमेव जलं मूलमन्त्रेण सप्तधा मूर्ध्नि क्षिपेदित्यर्थः ।

तदत्र कुमारीकल्प यामलयोर्विकल्पो-गुरुक्रमपरिच्छेद्यः। वीरचूडामणौ—

वियद्वह्निं समुच्चार्य नारायणं सबिन्दुकम्।
मायाबीजं समुच्चार्य गगनं वह्निसंयुतम्॥
अर्धचन्द्रसमायुक्तं वामकर्णविभूषितम्।
हंस इत्युच्चरेत् पश्चात् सूर्यमण्डलङेन्तकम्।
तारायै पदमुच्चार्य हृदयान्तेऽञ्जलिं क्षिपेत्॥

ततो गायत्रीं जपेत्। तदुक्तं शैवागमे—

गायत्र्या वाथ मूलेन दद्यादर्घ्यत्रयं ततः।
शिवाय मण्डलस्थाय मुखे मूलेन तर्पयेत्॥
त्रिधा जप्त्वाथ गायत्रीं अष्टाविंशतिवारकम्।

गायत्रीं स्वेष्टदेवतागायत्रीम्। तारागायत्री चोक्ता कालिकार्णवे—

ऐं भगवत्येकजटे विद्महे च पदं ततः।
विकटदंष्ट्रे धीमहि तन्नस्तारे प्रचोदयात्॥

मालिनीतन्त्रे—महोग्रायै च विद्महे तारायै धीमहि प्रिये।
तन्नो देवी च शब्दान्ते धियो यो नः प्रचोदयात्॥

वीरचूडामणौ—अष्टधा दशधा वापि गायत्रीं च जपेद् बुधः।
वाग्भवं च समुच्चार्य एकजटायै विद्महे॥
देवि स्त्रीं च समुच्चार्य नीलसरस्वत्यै धीमहि।
हृल्लेखां च समुच्चार्य ततस्तारे प्रचोदयात्॥
जप्त्वा समर्पणं कुर्याद् देवतावामहस्तके।

गायत्रीध्यानं तु तन्त्रे—

उद्यदादित्यसङ्काशां पुस्तकाढ्यकरां स्मरेत्।
कृष्णाजिनधरां ब्राह्मीं ध्यायेत्तारकिताम्बरे॥

मध्याह्ने—श्यामवर्णां चतुर्बाहुं शङ्खचक्रलसत्कराम्।
गदापद्मधरां देवीं सूर्यबिम्बकृताश्रयाम्॥
सायाह्ने वरदां देवीं गायत्रीं संस्मरेद् बुधः।
शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम्।
त्रिनेत्रां वरदां पाशं शूलं च नृकरोटिकाम्॥

गौतमीये—संक्षेपसन्ध्यामथवा कुर्यान्मन्त्री ह्यशक्तितः।
सायं प्रातश्च मध्याह्ने कृष्णं ध्यात्वा मनुं जपेत्॥

इति सन्ध्यात्रयं प्रोक्तं कर्मिणां सिद्धिदायकम् ।

कृष्णमित्युपलक्षणम् । स्वेष्टदेवतामित्यर्थः । शैवागमे—

सन्ध्यालोपो न कर्त्तव्यः शम्भोराज्ञैवमेव हि ।
दीक्षितः सन्ध्यया हीनो न दीक्षाफलमश्नुते ॥
सन्ध्याहीनोऽन्यसन्ध्यायां पूर्वसन्ध्याक्रियामथ ।
विधायोत्तरसन्ध्यायाः क्रियां कुर्यादतन्द्रितः ॥

गौतमीये—सन्ध्यायां पतितायां वा गायत्रीं दशधा जपेत् ।

तन्त्रराजे तु—स्नानसन्ध्यार्चनालोपे जपेदष्टोत्तरं शतम् । इत्युक्तम् ।

## अथ तर्पणम्

कुलचूडामणौ—देवान् ऋषीन् पितॄंश्चैव तोषयेत् कुलवारिणा ।
कुलात्मकान् पुनर्ध्यात्वा कुले संलीय तोषयेत् ॥

कुलवारिणा आहूतकुलवीर्यमयवारिणा । कुलात्मकान् दिव्योघसिद्धौघमानवौघान् । कुले पूजाचक्रे । संलीय आवाह्य । तथा—

भैरवाय च देवाय भैरवावेशकारिणे ।
भैरवाख्यं प्रदातव्यं मन्त्रमुच्चार्य पूर्वतः ॥

भैरवाख्यं मन्त्रमित्यन्वयः । स चानन्दभैरवमन्त्रो वक्ष्यते । पूर्वत ओघत्रयतर्पणात् पूर्वम् । यामले—

तर्पणादौ प्रयुञ्जीत तृप्यतां ब्रह्मभैरवः ।

तर्पणे पितॄणां भैरवत्वेनोल्लेखस्तु वीरविषयः । पशुना तु मालिनीतन्त्रे—

दक्षिणाशामुखो भूत्वा संगृह्य मोटकं ततः ।
तृप्यन्तु पितरः प्रोक्त्वा चैतत् तर्पणमाचरेत् ॥

शैवागमे—ध्यात्वा देवं जले सम्यक् पूजयित्वाऽथ मूलतः ।
अष्टोत्तरशतावृत्त्या तर्पयेन्मूलमन्त्रतः ॥
तदर्धेन तदर्धेन दशधा वाथ तर्पयेत् ।
ततस्तदङ्गावरणदेवतास्तर्पयेत् क्रमात् ॥
एकैकाञ्जलिना तद्वन्मूलमन्त्रपुरःसरम् ।
ततः सम्पूज्य देवेशं साङ्गावरणकं ततः ॥
संबद्धास्ये हृदि स्वीये आत्मानं तन्मयं स्मरेत् ।

यामले—यन्त्रराजं जले ध्यात्वा तत्र देवीं निधाय च ।
देवर्षिपितृपूर्वां तु सायुधां सपरिवाराम् ॥

जले वा तर्पयेद् देवीं गृहे वा तर्पयेत् सुधीः ।
गुरुपङ्क्तिं च सन्तर्प्य वटुकादींश्च तर्पयेत् ॥
मूलदेवीं च सन्तर्प्य तर्पयेत् परिवारकान् ।
तर्पयेद् द्वारपालादींस्तथैवाङ्गादिदेवताः ॥
शेषिकां सुन्दरीं पश्चादैश्यां च परमं गुरुम् ।
अग्नौ परापरं चैव नैर्ऋत्यां परमेष्ठिनम् ॥
व्यायव्यादीशपर्यन्तं गुरुपङ्क्तिं च तर्पयेत् ।
अङ्गानि तत्तत्स्थानेषु मध्ये देवीं च तर्पयेत् ॥

तारायां तु विशेषो मालिनीतन्त्रे—

तीर्थोदकं तिलं कल्कं क्षीराक्षतसमन्वितम् ।
उत्तराशामुखो भूत्वा देवीमात्रं प्रतर्पयेत् ॥

मात्रपदात् परिवारतर्पणं केवलं जलेनैव । इष्टदेवतातर्पणप्रकारो नीलतन्त्रे—

मूलान्ते तर्पयामीति स्वाहान्तं तर्पणं मतम् ।
एवं त्रिधा तर्पणं तु कृत्वा पापक्षयो भवेत् ॥

तर्पयामीत्यतः पूर्वं द्वितीयान्तदेवतानाम योज्यम् क्रियायाः कर्मसापेक्षत्वात् । तथैव सर्वत्र दर्शनाच्च ।

मूलान्ते तारिणीं प्रोच्य तर्पयाम्यग्निवल्लभा ।

इति मालिनीतन्त्रवचनाच्च । तर्पणमिष्टदेवतायाः तत्रैव मूलमन्त्रान्वयस्य युक्तत्वात् । इदं तु वैष्णवान्यपरम् । वैष्णवे तु गौतमीये—

आदौ मन्त्रं समुच्चार्य श्रीपूर्वं कृष्णमित्यपि ।
तर्पयामि पदं चोक्त्वा नमोन्तं तर्पयेन्नरः ॥
अन्यत्र तु—तर्पयामि पदं योज्यं मन्त्रान्ते स्वेषु नामसु ।
द्वितीयान्तेषु चेत्येवं तर्पणस्य मनुर्मतः ॥

एवं च मुख्यतर्पणमष्टोत्तरशतावृत्त्येति प्रथमः पक्षः । पापक्षयो भवेदित्यतो नित्यकाम्यमेतदवसीयते । प्रत्येकमङ्गपरिवारतर्पणाशक्तौ साङ्गां सपरिवारां सवाहनां सायुधां अमुकदेवतां तर्पयामि स्वाहेत्येवं यथाशक्ति देवतामेव तर्पयेदित्यागमिकाः । ततः सूर्यायार्घ्यं दद्यात् । तदुक्तं यामले—

मार्त्तण्डभैरवायेति त्रिधा चार्घ्यं प्रकल्पयेत् ।

मार्त्तण्डभैरवायेत्येकदेशग्रहणम् । तन्मन्त्रस्तु ह्रीं हंसः मार्त्तण्डभैरवाय प्रकाशशक्तिसहिताय इदमर्घं स्वाहेति ।

तन्त्रराजोत्तरे—संस्मृत्य भैरवं देवं मार्त्तण्डाख्यमुमापतिम् ।
मूलेन मनुना देवि सूर्यस्य मनुनाऽथवा ॥
मायाबीजं समुद्धृत्य सोऽहं तु विपरीतकम् ।
मार्त्तण्डभैरवं ङेन्तं प्रकाशशक्तिसंयुतम् ॥
सूर्यस्य मन्त्रः संप्रोक्त इति ।

नन्दिकेश्वरसंहितायाम्—
दिनेशाय क्षिपेत् तिष्ठन् वारिणा चाञ्जलित्रयम् ।
यावन्न दीयते चार्घ्यं भास्कराय निवेदनम् ।
तावन्न पूजयेद् विष्णुं शङ्करं वा सुरेश्वरीम् ॥

ततः सूर्यमण्डलस्थायै देव्यै अर्घ्यं दद्यात् । तदुक्तं नीलतन्त्रे—
कुशीतमोड्रपुष्पं च कुलपुष्पं कुशाजलम् ।
अक्षतांश्च तथा ताम्रे कृत्वा चार्घ्यं निवेदयेत् ॥
मूलान्ते चोद्यदादित्यपदान्मण्डलवर्त्तिन्यै ।
शिवचैतन्यमय्यै च स्वाहेति तन्मनुः स्मृतः ॥

कुशीतं रक्तचन्दनम् । कुलपुष्पमार्तवम् । अत्र कालीतत्त्वकृतः—"उक्तेनैव विधानेन स्नानं कृत्वा तु तान्त्रिकमि"ति वचनात् "सन्ध्यैषैव हि कौलिकी । उद्दिश्य कुलगं शिष्यं कथिते"ति ब्रह्मयामलवचनात्—
कौलिकं कुर्वतः कर्म वैदिकं नाभिधीयते ।
वैदिकं कुर्वतः कर्म कौलिकं नाभिधीयते ॥

इति रुद्रयामलवचनात् "अथ योनिरुपेक्षमेव (?) कर्म"त्यथर्ववेदाच्च कौलिके-वैदिकस्नानसन्ध्यातर्पणादीनि न कार्याणीति वदन्ति । तन्न । "कृत्वादौ वैदिकं स्नानं ततस्तान्त्रिकमाचरेत्" इति वशिष्ठसंहितावचनस्य—"विधाय वैदिकं स्नानं ततस्तान्त्रिकमाचरेत्" इति त्रिपुरार्णववचनस्य च—"वैदिकीं तान्त्रिकीं सन्ध्यां कृत्वा तर्पणमाचरेत्" इति तन्त्रान्तरवचनस्य च विरोधात् तद्वचनानामन्यथार्थः कल्प्यते । तथाहि—उक्तेनैवेति । एवकारो भिन्नक्रमः कृत्वैवेत्यत्रान्वेति । सन्ध्यैषे-वेत्येवकारस्तान्त्रिकं कल्पान्तरं नास्तीत्येतदर्थकः ।

"कौलिकं कुर्वत" इति रुद्रयामलवचनम् अथर्ववचनं च सर्वशाखाप्रत्ययमेकं कर्मेति न्यायप्राप्तयुगपदुभयेतिकर्तव्यताचरणप्रतिषेधकमिति न किञ्चिदेतत् ।

## अथ पूजा

सा च त्रिविधा उत्तममध्यमकनिष्ठभेदात् । तथोचोक्तं फेत्कारिणीतन्त्रे—

शक्तिभिर्मूर्तिभिश्चैव लोकपालैश्च संयुतः ।
पीठयन्त्रक्रमाद् यागो नित्ययागः स उत्तमः ॥
पीठेनैव समस्तेन बहिरावरणं विना ।
अग्निकार्येण हविषा भूषणैश्च समन्वितः ॥
मन्त्रपूर्वकृतो यागो नित्ययागः स मध्यमः ।
द्रव्यशुद्धिसमायुक्तं तत्तत्संपूजनं तथा ॥
वस्त्रालङ्कारवस्तूनि वर्जयित्वा पृथग्विधम् ।
अग्निकार्यविहीनं च कालदेशानुसारतः ॥
उपचारैर्युतं द्रव्यैरधमं पूजनं मतम् ।

अत्र शक्त्यपेक्षमाचरणम् । तत्त्वसारसंहितायाम्—

अनिर्माल्यं सनिर्माल्यमर्चनं द्विविधं स्मृतम् ।
दिव्यं मनोभवैर्द्रव्यैर्गन्धपुष्पैः स्रगादिभिः ॥
यदर्चनमनिर्माल्यं दिव्यभोगापवर्गदम् ।
ग्रामारण्यादिसम्भूतैर्यागद्रव्यैर्मनोहरैः ॥
भक्तैर्यत् क्रियते सम्यक् सनिर्माल्यं तदर्चनम् ।
जातमात्राणि पुष्पाणि घ्रातान्येव निसर्गतः ॥
पञ्चभिश्च महाभूतैर्भानुना शशिना तथा ।
प्राणिभिश्च द्विरेफाद्यैः पौष्पैरेव न संशयः ॥
अतो निर्माल्यमित्युक्तमिति ।

अत्र यतीनामाद्यावेवाधिकारः । अगस्त्यः—

द्विविधं स्याल्लब्धमनोर्बाह्यान्तरमुपासनम् ।
न्यासिनामान्तरं प्रोक्तमन्येषामुभयं विदुरिति ॥
मनसा पूजयेद् योगी पुष्पैरारण्यसम्भवैः ।
शिवार्थे पुष्पहिंसायां न भवेत् तत् तु हिंसनम् ॥

इति शिवरहस्यवचनमजितेन्द्रियपरम् ।

परिव्राड् ज्ञानमात्रेण होमदानादिभिर्विना ।
सर्वदुःखपिशाचेभ्यो मुक्तो भवति नान्यथा ॥
पारिव्राड्विरक्तश्च विरक्तश्च तथा गृही ।
कुम्भीपाके तु मज्जेते तावुभौ कमलानने ॥
पुण्यस्त्रियो गृहस्थाश्च यद्येवं कुर्युरन्वहम् ।

संसाराच्च निवर्त्तन्ते विध्यतिक्रमदोषतः ॥

इति अगस्त्यसंहितावचनात्। पद्मपुराणे—

स्मरणे कीर्त्तने विष्णोस्तथा मानसपूजने।
सदाधिकारः सर्वेषां महापातकिनामपि ॥
न गृही ज्ञानमात्रेण परत्रेह च मङ्गलम्।
प्राप्नोति चन्द्रवदने दानहोमादिभिर्विना ॥
गृहस्थो यदि दानादि दद्याच्च जुहुयादपि।
पूजयेद् विधिनाऽनेन कः कुर्यादेतदन्वहम् ॥
न ब्रह्मचारिणो दातुमधिकारोऽस्ति भाविनि।
गुरुभ्योऽपि च सर्वेभ्यः को वा दद्यादपेक्षितम् ॥
घ्रातपुष्पात् फलं सिध्येदल्पं नो मानसं यथा।
तस्मादपरिहार्यत्वादन्यथा चानुपायतः ॥
अनल्पबुद्धितन्द्रीणां बाह्यपुष्पैर्भवेत् क्रिया।

तत्त्वसारसंहितायाम्—

पूजा पञ्चविधा प्रोक्ता पञ्चरात्रादितन्त्रके।
ताश्चाभिगमनं चोपादानेज्याध्याययोगकाः ॥
तत्राभिगमनं नाम मन्त्रिभिः परिकीर्त्यते।
संमार्जनोपलेपादिसंस्कारो देवमन्दिरे ॥
उपादानं भवेद् देवपूजासाधनमेलनम्।
ततश्चापि भवेदिज्या गन्धपुष्पादिभिः पुनः।
पीठपूजा च देवस्य साङ्गावरणपूजनम् ॥
मन्त्रार्थभावनापूर्वं जपो मन्त्रस्य कीर्त्तनम्।
तच्छास्त्रमननं सम्यक् स्वाध्यायो मन्त्रिभिः स्मृतः ॥
गुरुदेवात्मनामैक्यभावना योग उच्यते।
सालोक्यमपि सारूप्यं सामीप्यं सार्ष्टिनामकम् ॥
सायुज्यमपि पञ्चानां फलान्येवं विदुः क्रमादिति।

तत्रादौ देशाः फेत्कारिणीये—

एकलिङ्गे श्मशाने च शून्यागारे चतुष्पथे।
तत्रस्थः साधयेद् योगी विद्यां त्रिभुवनेश्वरीम् ॥

एकलिङ्गमुक्तं तत्रैव—पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्षते।

तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा ॥

श्मशानादिकमुक्तं त्रिशक्तिरत्ने—

दह्यते व्यसवो यत्र शवकीलकसङ्कुले ।
गृध्रगोमायुकाकाद्यैर्मांसलुब्धैर्यदावृतम् ॥
तच्छ्मशानमिति ख्यातं पिशाचगणसेवितम् ।
काकादिनीड़संयुक्तं कृत्तिच्छत्रादिसंयुतम् ॥
नागरैर्दूरनिर्मुक्तं साध्यसोद्वेगकारकम् ।
सौधसंरूढ़घासाढ्यं शून्यागारं तदुच्यते ॥
चतुर्णां च पथां यत्र संपातो युगपद् भवेत् ।
तच्चतुष्पथमित्युक्तं रजन्यामिष्टदायकम् ॥
पूर्वपूर्वमिदं शस्तं जघन्यं चोत्तरोत्तरम् ।

कुमारीतन्त्रे—कामरूपे पूर्णगिरौ दिव्ये चोड्डानके तथा ।
वाराणस्यां च लौहित्ये करतोयानदीजले ॥
आर्यावर्त्ते प्रयागे च ब्रह्मावर्त्ते तथैव च ।
अनन्तफलदा पूजा सर्वत्रैवं जले स्थले ॥
तदभावे पुण्यगेहे सिन्दूरादिभिरङ्किते ।
खड्गशूलगदाकर्त्रीचामरव्यजनादिभिः ॥
वितानध्वजसंकीर्णे कृष्णागुरुसुधूपिते ।
युवतीनां सुरापीनां वेश्यागणसुशोभिते ॥
शङ्खघण्टारवाकीर्णे दीपावलिविराजिते ।
एवम्भूते गृहे पूजा कालिकायाः सुशोभना ॥

कामरूपादिविधिर्गुणफलः । रुद्रयामले—

एकलिङ्गे श्मशाने च शून्यागारे चतुष्पथे ।
शवोपरि चितास्थो वा कुलपादपमूलके ॥
यौनो वा योनियन्त्रे वा योनिपुष्पैर्विशेषतः ।
सुद्रव्यैः पूजयेद् विद्यां जवापावकसिन्दूरैः (?) ॥
मत्स्यमांसैर्धूपदीपैर्नैवेद्यैर्विविधैस्तथा ।
षट्सहस्रप्रमाणेन प्रतिसन्ध्यं जपेन्नरः ॥
महाविद्याविशेषेण जपमात्रेण सिद्धिदा ।
तत्रस्थः साधयेद् योगी विद्यां त्रिभवमोचनीम् ॥

हरगौरीसंवादे—पूजनीया प्रयत्नेन शून्यागारे चतुष्पथे ।
शिवालये विल्वमूले सर्वदा कुलमण्डले ॥
वीरतन्त्रेऽपि—सर्व एव शुभः कालो नाशुभो विद्यते क्वचित् ।
न विशेषो दिवा रात्रौ सन्ध्यायामथवा निशि ।
फेत्कारिण्याम्—बलिपूजादिकं सर्वं रात्रौ तु क्रियते यदि ।
तत्तदक्षयतां याति तारादेव्याः प्रसादतः ॥

## अथ पञ्चशुद्धिः

कुलार्णवे—आत्मस्थानमनुद्रव्य-देवशुद्धिश्च पञ्चमी ।
यावन्न क्रियते देवि तावद् देवार्चनं नहि ॥
आत्मशुद्धयादिर्वक्ष्यते ।
सम्मार्जनोपलेपाद्यैर्दर्पणोदरवत् कृतम् ।
वितानधूपदीपादिविततध्वजसेवितम् ॥
पञ्चवर्णरजश्चित्रं स्थानशुद्धिरितीरिता ।
ततश्च साधकश्रेष्ठो हृदि मन्त्रं परामृशन् ॥
अबहिर्मानसो योगी यागभूमिमथाविशेत् ।
कुमारीकल्पे—तारवज्रोदके हूं फट् स्वाहामन्त्रेण मन्त्रवित् ।
जलमानीय सव्ये तु आसनं शोधयेत् ततः ॥
सव्ये वामदिशीत्यर्थः । तथा—
प्रणवं पूर्वमुद्धृत्य लज्जाबीजं तथैव च ।
ततो विशुद्धान्ते सर्वपापानि शमयेति च ॥
अशेषान्ते विकल्पं स्यादपनय ततः परम् ।
कूर्चबीजं भवेन्मन्त्रः पादप्रक्षालने प्रिये ॥
वेदाद्यं च तथा माया स्वाहेत्याचमनं मतम् ।

तारारहस्यवृत्तौ—पादप्रक्षालनाचमनमन्त्रयोर्वैपरीत्यमुक्तम् । प्रथममन्त्रे च विशुद्धशब्दात् पूर्वं सुकारान्ते धर्मगात्रीति पदं कूर्चबीजानन्तरं फट् स्वाहेति चोक्तम् । तदनुसार्येव सम्प्रदायः । फेरवीये—
द्विराचम्य शिखां बद्ध्वा ततो भूमिविशोधनम् ।
अत्र च मणिधरि वज्रिणि शिखरिणि सर्ववशङ्करिणि हुं फट् स्वाहेति मन्त्रेण शिखाबन्धनं मत्स्यसूक्ते उक्तम् । भूमिशोधनमग्रे वक्ष्यते । भैरवतन्त्रे—
ताराभेदैस्त्रिभिः पीत्वा मायया क्षालयेत् करम् ।

स्त्रीं हूं ओष्ठौ द्विरुन्मृज्य फट्कारैः क्षालयेत् करम् ॥
आस्यनासेक्षणश्रोत्र-नाभिवक्षःशिरोभुजान् ।
वैरोचनादिभिः स्पृष्ट्वा सर्वपापैः प्रमुच्यते ॥
आचम्य भैरवो भूत्वा वत्सरात् तां प्रपश्यति ।

ताराभेदैः । तारैकजटानीलसरस्वतीरूपैः । उत्तरतन्त्रे—

आचान्तः शुचितां प्राप्तः सुस्नातो देवपूजने ।
पूजावेद्या बहिः स्थित्वा चतुर्हस्तान्तरे धिया ॥
गृहे चेद् द्वारदेशस्थः प्रणम्य शिरसा गुरुम् ।
प्रणमेदिष्टदेवं स्वं दिक्पालानपि चेतसा ॥
यत् पापमर्जितं पूर्वं तद्दिनेऽन्यदिनेऽपि वा ।
प्रायश्चित्तैर्न लुप्येत तद्धि पापं स्मरेद् धिया ॥
तत्पापस्यापनेयार्थं श्लोकद्वयमुदीरयेत् ।
देवि त्वं प्राकृतं चित्तं पापाक्रान्तमभून् मम ॥
तन्निःसारय चित्तान् मे पापं हूं फट् च ते नमः ।
सूर्यः सोमो यमः कालो महाभूतानि पञ्च च ॥
एते शुभाशुभस्येह कर्मणो नव साक्षिणः ।
ततः पुनर्हूं फड़िति पार्श्वमूर्ध्वमधस्तथा ॥
आत्मनः क्रोधदृष्ट्याऽथ निरीक्षन् सुमना भवेत् ।
एवं कृते प्रथमतः पापोत्सारणकर्मणि ।
यत् स्याद् दृढतरं पापं तद् दूरे चावतिष्ठते ॥
अतीते पूजने स्थानं स्वं प्रयाति पुनश्च तत् ।
यत् स्यादल्पतरं पापं तन्नाशमुपगच्छति ॥
पूजने त्यक्तपापस्य काममिष्टं क्षणाद् भवेत् ।

स्वतन्त्रे—भूमिव्योमस्थितान् सर्वान् विघ्नजातान् सहाक्षतैः ।
सिद्धार्थैस्तिलसंमिश्रैः प्रोत्सार्य चासने विशेत् ॥

यामले—भूतापसारणं कुर्यान्मन्त्रेणाऽनेन साधकः ।
यस्मिन् कृते स्थले भूता दूरं यान्ति सुरार्चने ॥
स्थितेषु तत्र भूतेषु नैवेद्यं मण्डलं तथा ।
विलुम्पन्ति सदा लुब्धा न गृह्णन्ति च देवताः ॥
ॐ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।

ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥

भैरवतन्त्रे—तत आचमनं कृत्वा सामान्यार्घ्यं प्रकल्पयेत् ।
त्रिकोणवृत्तभूबिम्बमण्डलं रचयेत् ततः ॥
आधारशक्तिं सम्पूज्य तत्राधारं विनिक्षिपेत् ।
अस्त्रेण पात्रं संशोध्य हृन्मन्त्रेण च पूरयेत् ॥
निक्षिपेत् तीर्थमावाह्य गन्धादीन् प्रणवेन च ।
दर्शयेद् धेनुमुद्रां वै सामान्यार्घ्यविधिर्मतः ॥
सामान्यार्घ्येण देवेशि पूजयेद् द्वारदेवताः ।
गणेशं क्षेत्रपालं च वटुकं योगिनीमपि ।
गङ्गां च यमुनां चैव लक्ष्मीं वाणीं ततो विशेत् ॥

तन्त्रे—गां बीजाद्यं गणेशं च वामाद्यं वटुकं तथा ।
क्षामाद्यं क्षेत्रपालं च यामाद्यां योगिनीं तथा ॥
ऊर्ध्वे वामे च दक्षे च अधश्चैव यथाक्रमम् ।

ऊर्ध्वादिकं देहल्याः प्रकरणात्। एवं गां गङ्गां यां यमुनां श्रीं लक्ष्मीं ऐं सरस्वतीं पूजयन्ति। तथा दूर्वादिकं गृहे परितो विकीर्य विघ्नानपसृतान् ध्यायेत्। तन्मन्त्रः

कुमारीके—प्रणवं पूर्वमुद्धृत्य सर्वविघ्नांस्ततः परम् ।
उत्सारयद्वयं हुं फट् स्वाहा च तदनन्तरम् ॥
अनेनैव च मन्त्रेण विघ्नानुत्सारयेत् सुधीः ।
प्रणवं पूर्वमुद्धृत्य रक्ष रक्षेत्यनन्तरम् ॥
हुं फट् स्वाहेति मन्त्रेण भूमिं च परिशोधयेत् ।

शोधनं जलसेकरूपमिति तान्त्रिकाः। इदं च भूमिशोधनं फेरवीये विघ्नोत्सादनात् पूर्वमुक्तम्। तथा—

ततः पवित्रवज्राद्यौ प्रणवं पूर्वमुद्धरेत् ।
रक्षद्वयमतो हुं फट् स्वाहा च तदनन्तरम् ॥
अनेनैव च मन्त्रेण कुर्याद् भूम्यभिमन्त्रणम् ॥

## अथासनविधिः

स्वतन्त्रतन्त्रे—भूमौ त्रिकोणमालिख्याधारशक्त्यादिपूजनम् ।
मेरुपृष्ठ ऋषिः प्रोक्तः सुतलं छन्द ईरितम् ॥
कूर्मोऽत्र देवता देवि आसनोपनिवेशने ।
विनियोगश्च कथितः पठेद् धृत्वासनं मतः ॥

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां भद्रे पवित्रं कुरु चासनम् ॥
इति धृत्वा तु देवेशि कुशांस्तत्रैव पादयेत्।

कुशानिति। वक्ष्यमाणपक्षप्राप्तानुवादः। तथा—

मायाबीजं समुच्चार्य आधारशक्तये ततः।
कमलासनमुल्लिख्य ङेनमोऽन्तं च पूजयेत् ॥

ङेनमोऽन्तमिति। कमलासनपदं चतुर्थ्यन्तं नमस्कारेण योजयेदित्यर्थः।

मन्त्रचूड़ामणौ—तत्र मृद्धासनं पीठं पीठमन्त्रेण पूजयेत्।
ॐ ऐं क्लीं कामपीठाय हृदयान्तोऽयमीरितः ॥
तत्र बद्धासनं वीर आत्मानं शोधयेत् ततः।

उत्तरतन्त्रे—आत्ममन्त्रेणोपविशेत् तदा तस्मिन् वरासने ॥
दुःशिल्पिरचितत्वादि यद् यदासनदूषणम्।
अज्ञातं विलयं याति उपवेशे तु मन्त्रितम् ॥
स्वनामाद्यक्षरं पुंसः सोमसामिसमन्वितम्।
आद्यवर्णं विजानीयादात्ममन्त्रं तु साधकः ॥

सोमसामि चन्द्रार्धम्। यामले—

आत्मानं रक्षयेत् तत्र वह्निप्राकारयोगतः।
वह्निबीजेन परितः प्राकारं भावयेद् धिया ॥
आःकारान्ते सुरेखे च वज्ररेखे ततः परम्।
हूं फट् स्वाहेति कुर्यात् तु मण्डलं वै शवासने ॥

आसनविशेषो मत्स्यसूक्ते—

मृदुकम्बलमासीनोऽन्येषु कोमलकेषु वा।
विष्टरे वा समासीनः साधयेत् सिद्धिमुत्तमाम् ॥
संग्रामपतितं वापि व्यापादितमचूड़कम्।
षण्मासनिःसृतं प्राप्य चितायां वा तदन्तिके।
कृष्णसारं द्वीपिचर्म अचूडं कम्बलं तथा।
पीतं च श्वेतवर्णं वा आसनाय प्रकल्पयेत् ॥

षण्मासनिःसृतपदेन मृदुकम्बलस्य पुनरभिधानमादरातिशयार्थम्। चितातदन्तोक्तिः प्रसङ्गात्। श्रीक्रमेऽपि—

षण्मासानन्तरं यावद् दशमासाच्च पूर्वकम्।

गर्भच्युतं मृतं बालं गर्भाष्टमात् परं शवम् ॥

बालमित्यन्तोक्तमेव मृदुपदेन मत्स्यसूक्ते उक्तम्। तन्त्रे—

निवृत्तचूड़को बालो हीनोपनयनः पुमान्।
यो मृतः पञ्चमे वर्षे तमेव कोमलं विदुः ॥
पञ्चवर्षाभ्यन्तरं यावद् भवेद् बालमचूड़कम्।

अत्र नपुंसकलिङ्गता तान्त्रिकी। वीरतन्त्रे—

शवाभावे विष्टरं तु शवरूपं प्रकल्पयेत्।
पञ्चाशद्भिर्भवेद् ब्रह्मा तदर्धेन तु विष्टरम् ॥

कालीतन्त्रे—मृताभावे शवरूपं विष्टरं परिकल्पयेत्।

"मृताभाव" इति वचनात् पशोः शवानुकल्पकुशविष्टरमपि नास्ति। मुख्येऽधिकारिण एवाऽनुकल्पेऽधिकारात्। स्वतन्त्रतन्त्रे—

कम्बले लोहिते वापि कृष्णे वा व्याघ्रचर्मणि।
सन्यासी ब्रह्मचारी तु विशेत् कृष्णस्य चर्मणि ॥
व्याघ्राजिनं सर्वसिद्ध्यै ज्ञानसिद्धिर्मृगाजिने।
वस्त्रासनं रोगहरं वेत्रजं प्रीतिवर्धनम् ॥
कौशेयं पुष्टिदं प्रोक्तं कम्बलं सर्वसिद्धिदम्।
शुक्लं वा यदि वा कृष्णं विशेषाद्रक्तकम्बलम् ॥
मृदु कोमलमास्तीर्णं संग्रामपतितं च यत्।
जन्तुव्यापादितं वापि मृतं वानरमासनम् ॥
गर्भच्युतञ्च नारीणामथवा योनिजां त्वचम्।
तत्तच्छरीराकारं वा कुर्याच्छिवे ततोऽर्चनम् ॥
ऋतुरक्ताक्तवस्त्रं वा आसनाय प्रकल्पयेत्।
श्मशानकाष्ठघटितं पीठं वा यज्ञदारुजम् ॥
नादीक्षितो विशेज् जातु कृष्णसाराजिने गृही।

तथा—एकहस्तं द्विहस्तं वा चतुरङ्गुलमुच्छ्रितम् ॥

विशुद्धे आसने कुर्यात् स्थापनं पूजनं बुधः।

केचित् तु स्वतन्त्रादौ कम्बलादिविधिर्न स्वातन्त्र्येण किन्तु वीरासनावगुण्ठनत्वेन वीरासनस्यावश्यकत्वात्। तदुक्तम्—

कालीतन्त्रे—मृतासनं विना देवि यो जपेत् कालिकां नरः।

तावत् स नारकी ज्ञेयो यावदाहूतसंप्लवम् ॥

वस्तुत इदं वीरपरम्। अत्र शवासनेष्वैच्छिको विकल्पः। काष्ठासनं विहितेतरं निषिद्धम्। ब्रह्मयामले—

तृणपल्लवकाष्ठानि पाषाणं मृण्मयं तथा।
वंशासनं च वस्त्रं च केवलं क्षितिमासनम्॥
एवमष्टविधं देवि चासनं परिवर्जयेत्।

वस्त्रासनविधिः काम्ये। वाराहीतन्त्रे—

उत्तराभिमुखो भूत्वा विशेन्मृद्वासनोपरि।
कम्बले सत्वरा सिद्धिः श्रीमोक्षौ व्याघ्रचर्मणि॥
अजिने श्रीर्भवेत् काम्ये वश्यं च पीतवाससि।
दारवे सिद्धिनाशः स्याद् भूतले कुलनाशनम्॥
त्वचि पत्रे दरिद्रः स्यात् तृणे चापि हतश्रियः।
कुशस्य कटके मोक्षः काष्ठे श्रीपर्णी शस्यते॥
अभावे चूतविल्वानां मत्तके(?) पिचुमर्दके।
आम्रनिम्बकदम्बानामासनं सर्वनाशनम्॥

आम्रमाम्रातकम्।

पनसे किंशुके चापि वकुले च हतश्रियः।

कुमारीकल्पे—वीरासनेनोपविशेत् संपूज्यासनमेव तु।
तत्रोपविश्य विधिना भुक्त्वा द्रव्यं सहेतुकम्॥

वीरासनमुक्तं गोरक्षसंहितायाम्—

एकपादमथैकस्मिन् विन्यस्योरुणि संस्थितः। इति।

यामले—रात्रावुदङ्मुखः कुर्यात् पूर्वोत्तरमुखो दिवा।
सदोत्तरमुखः कुर्याच्छिवपूजां विचक्षणः॥

फेत्कारिण्याम्—पद्मासनेन विद्यार्थी कुर्यात् सर्वं समाहितः।
प्राङ्मुखोदङ्मुखो वापि वक्ष्यमाणक्रमेण तु॥
श्रीकामः स्वस्तिकेनेह पश्चिमाभिमुखः स्थितः।

कालिकापुराणे—दिग्विभागेषु कौबेरी दिक् शिवाप्रीतिदायिनी।
तस्मात् तन्मुख आसीनः पूजयेच्चण्डिकां सदा॥

अत्र हेतुग्रहणमप्युक्तं भावचूडामणौ—

विना हेतुकमास्वाद्य क्षोभयुक्तो महेश्वर।
न पूजामासनं कुर्यान्न च ध्यानं न चिन्तनम्॥

तस्माद् भुक्त्वा च पीत्वा च पूजयेत् परमेश्वरीम् ।

कुलार्णवेऽपि—विना द्रव्याधिवासेन न स्मरेन्न जपेत् प्रिये ।
ये स्मरन्ति महादेवि तेषां दुःखं पदे पदे ॥
नासवेन विना मन्त्रं न मन्त्रेण विनासवम् ।
परस्परविरोधित्वात् कथं पूजा विधीयते ॥
तत्संशयनिवृत्तिं च ज्ञात्वा गुरुमुखाद् यजेत् ।
वीक्षणप्रोक्षणध्यान-मन्त्रमुद्राविभूषितम् ॥
द्रव्यं तर्पणयोग्यं स्याद् देवताप्रीतिकारणम् ।

वीक्षणं दिव्यदृष्ट्या । प्रोक्षणं मूलाभिमन्त्रितजलेन । ध्यानममृतत्वेन । मन्त्रम-ष्टवारजप्तम् । मुद्रा धेन्वाख्येति सम्प्रदायविदः । इदमुपलक्षणम् । अग्रे वक्तव्यः सकल-संस्कारोऽपि ज्ञेयः । पूर्वदिवसीयपूजावशिष्टतत्सत्त्वेनैतत् समाचरणमिति । तर्पणमत्र पानमेव । इदं तु ब्राह्मणेतरविषयम् । ब्राह्मणस्य तदुपादाननिषेधात् ।

ननु—ब्राह्मणैस्तु सदा पेयं क्षत्रियैस्तु रणागमे ।
वैश्यैर्धनप्रयोगे च शूद्रैर्नैव कदाचनेति ॥—कुलार्णवे—
सौत्रामण्यां कुलाचारे ब्राह्मणः प्रपिबेत् सुरामिति—समयाचारे—
सत्ये क्रमाच्चतुर्वर्णैः क्षीराज्यमधुपिष्टजैः ।
त्रेतायां पूजिता देवी घृतेन सर्वजातिभिः ॥
मधुभिः सर्ववर्णैस्तु पूजिता द्वापरे युगे ।
पूजनीया कलौ देवी केवलैरासवैरिति ॥ यामले—

चोक्तत्वात् कथं ब्राह्मणस्यानधिकार इति चेत् । उच्यते । "विप्राः क्षौणीभुजो विशस्तदितरे क्षीराज्यमध्वासवै"रिति लघुस्तवे—"वर्णानुक्रमभेदेन द्रव्यभेदा भवन्ति वै" इति ज्ञानार्णवे—"द्रव्येण सात्त्विकेनैव ब्राह्मणः पूजयेच्छिवा"मिति

आसवभेदमुक्त्वा—एवं दद्यात् क्षत्रियोऽपि पैष्टिकीं न कदाचन ।
नारिकेलोदकं कांस्ये ताम्रे गव्यं तथा मधु ॥
राजन्यवैश्ययोर्दानं न द्विजस्य कदाचन ।
एवं प्रदानमात्रेण हीनायुर्ब्राह्मणो भवेदिति ॥

महाकालसंहितायां—क्षीरेण ब्राह्मणैस्तर्प्या घृतेन नृपवंशजैः ।
माक्षिकैर्वैश्यवर्णैस्तु आसवैः शूद्रजातिभिः ॥ इति

भैरवीतन्त्रे—यत्रावश्यं विनिर्दिष्टं मदिरादानपूजनम् ।
ब्राह्मणस्ताम्रपात्रेषु मधु मद्यं प्रकल्पयेत् ॥ इति

कुलचूडामणौ—ब्राह्मणो मदिरां दत्त्वा ब्राह्मण्यादेव हीयते ।
स्वगात्ररुधिरं दत्त्वा स्वात्महत्यामवाप्नुयात् ॥ इति

हंसमाहेश्वरतन्त्रे—कलिधर्मप्रकरणे गृह्यपरिशिष्टे अहिनाथोपाध्यायैः सौत्रामण्यां सुराग्रहणनिषेधस्योक्तत्वात् । "ब्राह्मणैस्तु सदा पेय"मित्यत्राप्यकारप्रश्लेषात् *..............

.........................................

.........................................

.........................................

## अथ प्राणायामः

प्राणायामैर्विना यद् यद् कृतं कर्म निरर्थकम् ।
अतो यत्नेन कर्त्तव्याः प्राणायामाः शुभार्थिभिः ॥

तन्त्रे—प्राणायामत्रयं कुर्यान्मूलेन प्रणवेन वा ।
अथवा मन्त्रबीजेन यथोक्तविधिना सुधीः ॥

तथा—पूरयेत् षोड़शभिर्वायुं कुम्भयेच्च चतुर्गुणैः ।
रेचयेत् कुम्भकार्धेन अशक्तस्तत्तुरीयतः ॥

अन्यत्रापि—तदशक्तौ तच्चतुर्थैः स्यादेवं प्राणसंयमः ।
प्राणायामं विना नैव पूजनादिषु योग्यता ॥

विशुद्धेश्वरे—प्राणायामत्रयं कुर्याद् विद्यया तदनन्तरम् ।

समयाङ्कमातृकायाम्—
इड़या पूरयेद् वायुं सकृच्च मूलविद्यया ।
मध्यनाड्या कुम्भयेच्च वेदसंख्यावरानने ॥
नेत्रसंख्याक्रमेणैव रेचयेत् पिङ्गलाध्वना ।
पुनः पुनः क्रमेणैव यथा वारत्रयं भवेत् ॥

कुमारीतन्त्रे—ततः षोड़शवर्षीयां नारीमानीय यत्नतः ।
युवतीं कामदोन्मत्तां सुवेशां चारुहासिनीम् ॥
सदारते साभिलाषां सिन्दूराङ्कितभालिकाम् ।
साधके प्रेमशीलां तां वामे संस्थापयेद् बुधः ॥

वाम इत्युपलक्षणम् । वीरचूडामण्युक्तपूजितयन्त्रोपरीत्यपि द्रष्टव्यम् ।

---

* अत्रादर्शपुस्तकत्रये मातृका नैवोपलभ्यते ।

समयाचारे—वामस्कन्धे करं दत्त्वा तदङ्के देहमात्मनः ।

दत्त्वा चालस्यभावेन पूजा कार्या यथाविधि ॥

भैरवीये—अथाचमनमन्त्रपुष्पाधिष्ठानमेव च ।

ग्रन्थिबन्धनमन्त्रं च कायवाक्चित्तशोधनम् ॥

अत्र मन्त्रमुखेन कर्मण एवाभिधानम् । आचमनमन्त्रः पूर्वमेव लिखितः । पुष्पाधिष्ठानमन्त्रश्च कुमारीकल्पे—

अधिष्ठाने तु पुष्पस्य प्रणवं पूर्वमुच्चरेत् ।

शताभिषेकेति पदं शताभीति ततः परम् ॥

[ ] षेकेति च पदं प्रोक्तं हूं फट् स्वाहा ततः परम् ।

प्रणवं पुष्पकेतुश्च तथा राजार्हतेऽपि च ॥

पुष्पे पुष्पे महापुष्पे सुपुष्पे पुष्पसम्भवे ।

पुष्पचयावकीर्णे च हूं फट् स्वाहा ततः परम् ॥

मनुनानेन देव्यास्तु पुष्पशुद्धिमथाचरेत् ।

ग्रन्थिबन्धनं च उत्तरीयाञ्चले विकिरद्रव्यैः सन्ध्यावन्दनोक्तशिखाबन्धनमन्त्रेणेति सम्प्रदायः । कायादिशोधनमन्त्रः—

कुमारीतन्त्रे—प्रणवं पूर्वमुद्धृत्य तदनन्तरमेव च ।

हूं फट् स्वाहा मनुः प्रोक्तः कायवाक्चित्तशोधने ॥

रक्ष रक्ष हूं फट् स्वाहा मन्त्रः स्यादात्मरक्षणे ।

अथ करशुद्धिं कुर्यात् । तत्प्रकार उत्तरतन्त्रे—

कृताञ्जलिपुटो भूत्वा वामदक्षिणपार्श्वयोः ।

नत्वा गुरुं गणेशानं पुरतः स्वेष्टदेवताम् ॥

स्रग्गन्धपुष्पाण्यादाय चन्दनाक्तानि मन्त्रवित् ।

मर्दयित्वा करौ सम्यक् सुरभीकृत्य साधकः ॥

वामहस्ते समादाय निर्मथ्याघ्राय तत्पुनः ।

वक्ष्यमाणेन मन्त्रेण चैशान्यां दूरतस्त्यजेत् ॥

मन्त्रस्तु—ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः ।

मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ॥ इति ।

त्यागश्च नाराचमुद्रया । "त्यजेदुत्तरतः पुष्पं मन्त्री नाराचमुद्रये"ति सारसंग्रहात् । उत्तरतन्त्रे—

कुसुमं विष्णुमन्त्रेण स्वाङ्गुल्यग्रेण साधकः ।

विमर्दनार्थं गृह्णीयात् करशोधनकर्मणि ॥
प्रासादेन तु मन्त्रेण कराभ्यां पुष्पमर्दनम् ।
निर्मञ्छेत् कामबीजेन जिघ्रेद् ब्राह्मेण तत् पुनः ॥
प्रासादेन परित्यागो दिश्यैशान्यां विशेषतः ।
संमृज्य सव्यहस्तेन घ्रात्वा वामकरेण तु ॥
ऐशान्यां निःक्षिपेदेतत् पुष्पं हस्ततलस्थितम् ।
एवं कृते तु तलयोर्विशुद्धिरतुला भवेत् ॥
अङ्गुल्यग्राणि शुद्धानि पुष्पाणां ग्रहणाद् विदुः ।
तलद्वयं विमर्दाक्तविशुद्धमभिजायते ॥
निर्मञ्छनात् पाणिपृष्ठं घ्राणान्नासाग्रमुत्तमम् ।
तीर्थानि च समायान्ति नासिकाग्रं करं प्रति ॥
तस्माद् यत्नेन कार्याणि कर्माण्येतानि भैरव ।
उपान्त आदौ चन्द्रेण रञ्जितः शून्यसंयुतः ॥
रुद्रान्तोपरिसंपृष्टो मन्त्रोऽयं वैष्णवो मतः ।

उपान्तो हकारः । आदौ मस्तके । चन्द्रेण अर्धचन्द्रमनुस्वारः । रुद्रान्तो दीर्घ उकारः । तेन हूं ।

प्रान्तादिर्वासुदेवेन वर्णेनापि च संयुतः ॥
शम्भुचूडाशिखाबिन्दुयुक्तः प्रासाद उच्यते ।

प्रान्तादिर्हकारः । वासुदेव ओकारः । ततः सन्धिः । तेन हौं । शम्भुचूडाशिखा अर्धचन्द्रः ।

कामबीजं तु विज्ञेयं वासुदेवेन्दुबिन्दुना ।
व्यञ्जनं चाद्यदन्त्यं च प्रान्तदन्त्यार्णपूर्वकम् ॥
आद्यदन्त्यद्वयं पश्चाद् व्यञ्जनं प्रणवोत्तरम् ।
ब्रह्मबीजमिदं प्रोक्तं सर्वपापप्रणाशनम् ॥

विज्ञेयं तन्त्रान्तरादिति शेषः । ब्रह्मबीजमुद्धरति—वासुदेव ओकारः । इन्दुरर्धचन्द्रः । बिन्दुरनुस्वारः तेन ॐ । आद्यदन्त्यः तकारः । व्यञ्जनं स्वरशून्यम् । प्रान्तदन्त्यार्णः सकारः । स एव पूर्वं यस्य तेन सत् । प्रणवोत्तरं प्रणवान्ते । आद्यदन्त्यद्वयं तकारद्वयं । तत्र विशेषमाह—पश्चाद् द्वितीयतकारः । व्यञ्जनं स्वरशून्यः । तेन ॐ तत्सदिति निष्पण्णम् ।

करशुद्धिं समाप्याऽथ कुर्यात् तालत्रयं ततः ।

ऊर्ध्वाधं मूलमन्त्रेण दिग्बन्धमपि देशिकः ॥
तेन संजनितं तेजो रक्षां कुर्यात् समन्ततः।

नीलतन्त्रे—कुल्लुकां च न जानाति मम मन्त्रं जपन्नरः।
पञ्चत्वं जायते तस्य अथवा वातुलो भवेत् ॥
तारिणीकुल्लुकायाश्च मन्त्रः कुल्लुकवर्जितः।
मतिमान् सद्विजातीनां नोपस्थेयः कदाचन ॥
कुल्लुकां च शिरे धृत्वा सर्वयज्ञफलं लभेत्।
नान्यो विचारः सर्वत्र विरूपाक्षस्य सम्मतम् ॥
कुल्लुकावर्जिते पुंसां यज्ञेनोपस्थितिर्भवेत्।
मम पूजा सदा व्यर्था मम यज्ञस्तथैव च ॥
तारामन्त्रस्य कुल्लुकं त्र्यक्षरं मन्त्रमुत्तमम्।
महोग्रायाः सदा पूजा पूजने कुल्लुका परा ॥
स्तोत्रमन्त्रव्रतादीनामनुष्ठाने च सर्वदा।
अननुष्ठानतस्तस्याः सर्वं तन्निष्फलं भवेत् ॥

मत्स्यसूक्ते—षड़क्षरं परं ब्रह्म यो जपेत् तु नराधमः।
तारिणी चण्डिकायाश्च मन्त्रं कुल्लुकवर्जितम् ॥
स ब्रह्म स्तेयकृत् तेन नरके पूर्णशोणिते।
कुम्भीपाके महाघोरे पच्यते पितृभिः सह ॥
षड़क्षरे तु कुल्लुकां जानीयान्मन्त्रवित् सदा।
धारयेत् तु शिरोदेशे सर्वकामप्रदायकम् ॥
कुल्लुकां च शिरे धृत्वा सर्वयज्ञफलं लभेत्।
अस्याधिकारः सर्वत्र विरूपाक्षस्य सम्मतम् ॥
कुल्लुके वर्जिते पुंसां यज्ञेनोपस्थितिर्भवेत्।
सर्वे ते निष्फला यज्ञा भवेयुर्नरकं व्रजेत् ॥
अज्ञात्वा कुल्लुकां देवीं ये जपन्ति च तारिणीम्।
कुलक्षयं तु ते यान्ति नरकं च व्रजन्ति ते ॥
देवीपूजा सदा व्यर्था देवीयागस्तथैव च।

कुल्लुकामन्त्रश्च मन्त्रोद्धारप्रकरणे एवोक्तः। तेन त्र्यक्षरीनीलसरस्वतीरूप-कुल्लुकामन्त्रं च विलिख्य शिरसि धृत्वा नित्यार्चनं कुर्यादिति पर्यवसितोऽर्थः।

ब्रह्मसंहितायान्तु—तारिणी कुल्लुका प्रोक्ता सर्वसिद्धिप्रदा सदा।

तस्योद्धारमहं वक्ष्ये शृणुष्वैकमना मुने ॥
प्रणवं पूर्वमुद्धृत्य पद्मेयुग्मं तथैव च ।
महापद्मेपदं पश्चात् पद्मावतिपदं शुभम् ॥
माये स्वाहेति मन्त्रोऽयं सप्तदशाक्षरो मनुः ।
रक्षाकरी च सा प्रोक्ता सदा परमसाधकः ॥

तथा—अथवा त्र्यक्षरं मन्त्रं कुल्लुकातारिणी भवेत् ।
कुल्लुकां च विना पूजां कृत्वाऽन्ते दुर्गतिं व्रजेत् ॥
देवीपूजा सदा व्यर्था ॥ इति

नानावचनेनास्य क्रत्वर्थतावगमात् । "सर्वयज्ञफलं लभेदि"त्यर्थवादः । वस्तुतस्तु यथा संयोगपृथक्त्वाधिकरणन्यायेन "दध्ना जुहोती"त्यनेन क्रत्वर्थत्वं "दध्नेन्द्रियकामस्ये"त्यनेन पुरुषार्थत्वञ्चावगम्यते । तथाऽत्राप्युभयार्थत्वमिति ध्येयम् ।

तन्त्रचूडामणौ—मन्त्रविद्यां च संधार्य वासुदेवं च योऽर्चयेत् ।
प्राप्नोति तत्फलं सम्यग् हरिसायुज्यतां व्रजेत् ॥
वासुदेवो हरो ब्रह्मा तारिणी प्रकृतिः सदा ।
एकमूर्त्तिः सदा चिन्त्या एकमूर्त्तिः सदा स्थिता ॥

तथा फेत्कारिण्याम्—
सुविमलनखदन्तपाणिपादो मुदितमनाः परदूषणेषु मौनी ।
हरिहरचरणारविन्दभक्तो चिरायुः सरस्वतीनिवासः ॥

इत्यादिना कुल्लुकाविद्याधारणोत्तरं हरिपूजनस्याङ्गताऽत्रावगम्यते । एकवीराकल्पे पुरश्चरणप्रकरणे—
मन्त्रकाले तु सततं भार्यां यत्नेन वर्जयेत् ।
वर्जयेद् वैष्णवं कल्पं वर्जयेत् तुलसीदलम् ॥

तथा हरगौरीसम्वादे—सहस्रनामस्तोत्रकथनानन्तरम्—
यानि नामानि सन्त्यत्र प्रसङ्गान्मुख्यवैरिणः ।
ग्राह्याणि तानि कल्पानि नान्यानि तु कदाचन ॥

इत्यादिना तत्पूजनादेर्वैगुण्यापादकत्वमवधार्यते । तेना"ऽतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाती"त्यादिवत् विकल्पोऽवधार्यते । अतिरात्रे षोडशिग्रहणपक्षे फलभूमाकल्पनवदत्रापि फलसिद्धौ तदननुष्ठानलक्षणाप्रामाण्यापत्तेः । अत एव "प्राप्नोति तत्फलं सम्यगि"त्यभिधानं संगच्छते । वस्तुतस्तु "मन्त्रकाल"

इति वचनाद् भार्यावचनसमभिव्याहारात् पुरश्चरणवैगुण्यापादकतैव तत्पूजनस्य न तु नित्यपूजावैगुण्यापादकतापि। तन्त्रचूडामणिवचनविरोधात्। एवं स्तोत्र-प्रकरणाम्नानात् पाठाङ्गत्वेव तन्नामग्रहणादेरित्यूह्यम्। तेन नित्यपूजायां प्रसक्त-तत्पूजनस्य पुरश्चरणादौ निषेधः सम्भवत्यन्यथाऽप्रसक्ततत्प्रतिषेधापत्तेः। न च पञ्चायतनदीक्षापक्षप्राप्ततत्पूजननिषेधोऽयं नित्यपूजायामेवेति वाच्यम्। तन्त्र-चूडामणिविरोधात्। अत्र पञ्चायतनदीक्षाया निषेधाच्च। अत एवाधिकारि-निन्दार्थमप्रसक्तस्यापि तत्पूजनस्य निषेधः। अयज्ञीयवैभाषा इतिवदिति परास्तम्।

किंच—"वर्जयेद् वैष्णवं कल्पमि"त्यनेन न तत्पूजायां निषेधोऽपि तु तत्-कल्पस्येतिकर्त्तव्यता। तथा च विष्णुमन्त्रोक्तेतिकर्तव्यतया देवीपूजनं वर्जयेदि-त्यर्थः। अत एवान्यमन्त्रेतिकर्तव्यतयाऽन्यमन्त्रोपासनस्यासम्भवमाशङ्क्य तत्रैवो-क्तम्—"वर्जयेत् तुलसीदलमि"ति। तथाच तुलसीदलादिना पूजैव तत्कल्पपदार्थः। स च नासम्भावित इति तस्मिन्निषेधः शक्यः कर्तुमिति तदभिप्रायः। एवं च नित्यार्चनकाले नैमित्तिकपुरश्चरणाद्यर्चनकालेऽपि हरिपूजनमङ्गम्। तदभावे देवीपूजाफलाभाव इति पर्यवसितम्। एवं च "यानि नामानी"त्यादिना अनङ्ग-व्यवायदोषपरिहारार्थं स्तोत्रपाठसमये हरेरपि नाम मध्ये न ग्राह्यम्। किमुता-न्यस्य। प्राप्नोतीत्यादिसम्भावनायामाचमनानुकल्प-विष्णुनामग्रहणप्राप्तौ च यान्येव प्रसङ्गादत्रोपनिबद्धानि तान्येव ग्राह्याणि नत्वन्यानि। एवं च "वेदो वे"ति न्यायान् "न गृह्णीयाद्धरेर्नाम" इत्यत्रापि स्तोत्रानुपात्तहरिनामग्रहणनिषेधः। अथवा अर्थवाद-मात्रस्यानर्थक्यात् नामसम्भावनायां हरेः स्वत्वास्पदीभूतं तुलसीदलमपि न गृह्णीयात्। न स्वीकुर्यान्न स्पृशेदपीत्यर्थः।

यद्वा—साधकास्त्रिविधा दिव्यवीरपशुभेदात्। तत्र पशुपरतया तन्त्रचूडा-मण्यादिवाक्यानि हरिपूजाङ्गताप्रतिपादकानि। वीरपरतया चैकवीराकल्पादि-वाक्यानि हरिपूजानिषेधकानि नियोज्यानीति सिद्धान्तरहस्यम्।

## अथ भूतशुद्धिः

भैरवतन्त्रे—अङ्के पाणियुगं कृत्वा वियद्बिन्दुयुतो भृगुः।
सर्गवानिति मन्त्रेण सतत्वं कुण्डलीयुतम्॥
जीवं चक्राणि भित्त्वाऽथ शिरस्थकमले शिवे।
संयोज्य चित्कलां रक्तां नाभौ ध्यायन् पठन् शनैः॥
वामनासेरितं वायुं ज्वलितेनापि वह्निना।
संशोष्य देहं संदह्य सपापं दक्षया ततः॥

रेचयेत् तु वधूबीजं पीताभं वायुरूपिणम् ।
हृदि ध्यायन् पठन् दक्षनासया पूरितानिलैः ॥
वामनासापुटेनैव भस्म प्रोत्सारयेद् बहिः ।
हूंकारं पूर्णचन्द्राभं ललाटे शशिमण्डले ॥
भीत्वैतस्य जपादस्मान्निपात्य चामृतं ततः ।
तदस्थि प्लावितं कृत्वा देहमुत्पादयेत् ततः ॥
सोऽहं मन्त्रेण तत्त्वानि जीवं कुण्डलिनीं क्रमात् ।
यथास्थानं समानीय निवर्त्य तारिणीमयम् ॥

वाराहीतन्त्रे—मूलाधारोद्गतं प्राणं ब्रह्ममार्गेण तान्त्रिकः ।
हंसेन पुष्करस्थाने परमात्मनि योजयेत् ॥

रुद्रयामले—वर्णसंहारकं कुर्यात् क्षाद्यकारान्तवर्णकम् ।
प्रतिलोमेन संहृत्य परमात्मनि योजयेत् ॥
पञ्चभूतं ततः पश्चाद् यो जपेत् परमात्मनि ।

स्वतन्त्रे—संहारक्रमयोगेन पञ्चतत्त्वं समुद्धरेत् ।

पञ्चतत्त्वं पञ्चभूतानि । तदुद्धारप्रकारो ज्ञानोन्नयने—

पादयोर्जानुपर्यन्तं चतुरस्रं सवज्रकम् ।
लंयुतं पीतवर्णं च भूस्थानं च विचिन्तयेत् ॥
जान्वोरानाभिचन्द्रार्धनिभं पद्मेन लाञ्छितम् ।
शुक्लवर्णं स्वबीजेन युक्तं ध्यायेदपां स्थलम् ॥
नाभितः कण्ठपर्यन्तं त्रिकोणं रक्तवर्णकम् ।
सस्वस्तिकं स्वबीजेन युक्तं वह्नेस्तु मण्डलम् ॥
कण्ठाद् भ्रूमध्यपर्यन्तं कृष्णं वायोस्तु मण्डलम् ।
षट्कोणं बिन्दुभिः षड्भिर्युक्तं बीजेन चिन्तयेत् ॥
भ्रूमध्याद् ब्रह्मरन्ध्रान्तं वर्त्तुलं ध्वजलाञ्छितम् ।
धूम्रवर्णं स्वबीजेन युक्तं ध्यायेन्नभःस्थलम् ॥
एवं ध्यात्वा ततस्तानि भूतानि प्रविलोपयेत् ।
पृथ्वीमप्सु च ता वह्नौ वह्निं वायौ समीरणम् ॥
प्रविलाप्य तथाकाशे आकाशं प्रकृतौ ततः ।
अपरब्रह्मरूपां तां मायाशक्तिं परात्मनि ॥
एवं समस्तदेहादिप्रपञ्चं परमात्मनि ।

प्रविलाप्य परब्रह्मरूपे तिष्ठेत् कियत् क्षणम् ॥
ततः पुरुषनिभं पापमनादिभवसञ्चितम् ।
ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ॥
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
खड्गचर्मधरं कुक्षौ कृष्णं दक्षिणतः स्मरेत् ॥

तन्त्रान्तरे—खड्गचर्मधरं पापमङ्गुष्ठपरिमाणकम् ।
अधोमुखं कृष्णवर्णं दक्षकुक्षौ विचिन्तयेत् ॥

वीरतन्त्रे—भूतशुद्धिं ततः कुर्यात् स्वमन्त्राक्षरयोगतः ।

भैरवीये—मायां नाभौ रक्तवर्णां ध्यात्वा तज्जातवह्निना ।
सूक्ष्मं पापात्मकं देहं दग्धं विचिन्तयेत् ततः ॥
श्रींकारं हृदि पीताभं तदुद्भूतेन वायुना ।
भस्म प्रोत्सारितं कृत्वा ललाटे चिन्तयेत् ततः ॥
कूर्चं तुषारवर्णाभं तदुद्भूतामृतेन च ।
तदस्थि प्लावितं बुद्ध्वा तत्रात्मानं विचिन्तयेत् ॥
सर्वव्यथाविनिर्मुक्तं निर्मलं देवतात्मकम् ।
विश्वव्यापकतोयान्तः-श्वेताब्जोद्भवकर्णिके ॥

रुद्रयामले—ताराभूतशुद्धिप्रकरणे—
यं मन्त्रं वायुबीजेन इड़या पूरयेत् तनुम् ।
षोड़शस्वरवर्णेन ॥ इति

अनयोर्विकल्पः । साम्प्रदायिकस्तु प्राक्तन एव पन्थाः । यामले—
भूतशुद्धिं ततः कुर्यात् स्थिरचित्तस्तु साधकः ।
विनिधाय निजाङ्के तु समुत्तानौ करौ स्वयम् ॥
मूलाधारे मूलविद्यास्वरूपां कुलकुण्डलीम् ।
प्रसुप्तभुजगाकारां सार्धत्रिबलयात्मकाम् ॥
नीवारशुकवत् तन्वीं सर्वविद्यास्वरूपिणीम् ।
विद्युत्कोटिप्रतीकाशां स्वयम्भूलिङ्गवेष्टिनीम् ॥
ध्यात्वा तां हंसमन्त्रेण प्रणवेनाऽथवा पुनः ।
कूर्चबीजेन वा देवि दृढं विभावयेद् गुरुः ॥

एकीभावं तयोः कृत्वा जीवात्मपरमात्मनोः ।
विचिन्त्य शून्यं परमं पार्थिवांशं जलैर्गतम् ॥
जलं च तेजसा कृष्णं तेजोरूपं विचिन्तयेत् ।
निर्वाणं वायुना वह्निं वायुरूपं विभावयेत् ॥
आकाशेनाहृतो वायुः खं वै मनसि लीयते ।
मनोऽहंकारवशगमहं तु महदाहृतम् ॥
प्रकृत्या च महत्तत्त्वं प्रकृतिं योजयेदथ ।
प्रकाशरूपिणी नित्या ब्रह्मविद्यास्वरूपिणी ॥
कैवल्या केवला शान्ता निर्गुणा परमात्मिका ।
सैषा च परमा ज्योतिः परमं च निरामयम् ॥
सहस्रदलमध्यस्थं शून्यरूपं परं पदम् ।
तथा—नाभिदेशे च यंकारं धूम्रं वायुं विचिन्तयेत् ।
तेनैव शोषयेल्लिङ्गं तनुं षोड़शमात्रया ॥
कर्मात्मकं चतुःषष्ट्या कुम्भयित्वा समाचरेत् ।
द्वात्रिंशन्मात्रया दक्षे रेचनं तेन वा पुनः ॥
रक्तवर्णं वह्निबीजं मेढ्रमूले विचिन्तयेत् ।
मलासनात्मकं लिङ्गं शरीरं तेन दाहयेत् ॥
पूर्वोक्तक्रमयोगेन दक्षनासाक्रमेण तु ।
देशिकस्तु तथा संख्या वामनासेन रेचयेत् ॥
वंकारं वारुणं बीजं घटिकायां विभाव्य च ।
तेनामृतं समुत्पाद्य सहस्रदलपङ्कजात् ॥
प्लावयेत् पूरकादीनि कृत्वा पादतलावधि ।
लंकारं पृथिवीबीजं गुदमूले विभावयेत् ॥
तेनैव क्रमयोगेन धिया संप्लावयेद् बुधः ।
पापपुण्यविनिर्मुक्तं शरीरं शाम्भवं परम् ॥
तेनैव पूर्णमार्गेण सम्पादयेदनन्तरम् ।
सोहंमन्त्रेण जीवं तु हृत्सरोजे समानयेत् ॥
पुनस्तां कुण्डलीं देवीं मूलाधारे समानयेत् ।
फेत्कारिण्याम्—लिङ्गं कार्यहृदिस्थं तु चैतन्यं सर्वसाक्षिणम् ।
प्रणवेन विनिःसार्य ब्रह्मरन्ध्राद् बहिर्बुधः ॥

तेनैव संपुटीकृत्य मस्तकोपरि धारयेत् ।
चैतन्यरहितं देहं बाह्यमभ्यन्तरं तथा ॥
नाभिमण्डलमध्यस्थ-वायुमण्डलमध्यगम् ।
यं बीजं धूम्रवर्णं च ध्यात्वा तेन विशोधयेत् ॥
अग्निमण्डलसंस्थेन रंबीजेनाऽग्निरूपिणा ।
निर्दहेदथ तद् भस्मराशिर्देहाकृतिर्भवेत् ॥
भ्रूमध्यस्थं हृदिस्थं वा ध्यायेद् वरुणमण्डलम् ।
अर्धचन्द्राकृतिश्वेतं पद्मद्वयपदाङ्कितम् ॥
ततस्तेन प्रकारेण प्लावयेन्मनुरूपिणीम् ।
बीजं तु पार्थिवं न्यस्य चिन्तयेद्धेममण्डलम् ॥
प्रणवेन द्विधा कृत्वा तत्र चैतन्यरूपिणम् ।
आत्मानं चिन्तयेन्मन्त्रदेवतारूपिणं ततः ॥

प्राणायामरूपां भूतशुद्धिमुक्त्वा उड्डीशे—

अथवा कुण्डलीदेवीं पञ्चभूतादिना सह ।
परमात्मनि संयोज्य तयोरैक्यं विभावयेत् ॥
ध्यानयोगेन मनसा सोहं सोहं विभावयेत् ।

इदं चाशक्तपरम् । शारदायामप्ययमेव क्रम उक्तः । नीलतन्त्रे—

भूतशुद्धिं विधायेत्थं शून्यं विश्वं विचिन्तयेत् ।
निर्लेपं निर्गुणं शुद्धमात्मानं तारिणीमयम् ॥
अन्तरिक्षे ततो ध्यायेदाकाराद्रक्तपङ्कजम् ।
भूयस्तस्योपरि ध्यायेत् टङ्कारे श्वेतपङ्कजम् ।
तस्योपरि पुनर्ध्यायेद् धूङ्कारं नीलसन्निभम् ॥
ततो हूंकारबीजेन कर्त्तृकां बीजभूषिताम् ।
कर्त्र्युपरिगतं ध्यायेद् देहञ्च परमात्मनः ॥
शब्दब्रह्मात्मिका माया मातृका प्रकृतिः परा ।
अजायत जगन्मातुराकाशं नभसोऽनिलः ॥
समीरणादभूदग्निरग्नेरापस्ततो मही ।
स्वीयमेभ्योऽपि भूतेभ्यस्तेजोरूपं कलेवरम् ॥
देवताराधने योग्यं समुत्पन्नं विभावयेत् ।

वशिष्ठसंहितायाम्—सोहं मन्त्रेण तामाद्यां नादान्ते सिद्धभाविताम् ।

ध्यात्वैवं ब्रह्मरन्ध्रात् तु हृदि जीवकलां न्यसेत् ॥

तन्त्रे—ततो जीवं प्रविन्यस्येत् प्राणमन्त्रेण देशिकः ।

शारदायाम्—ब्रह्मविष्णुशिवाः प्रोक्ता मुनयस्तन्त्रवेदिभिः ।
उक्तमृग्यजुषोः साम्नश्छन्दश्छन्दोविशारदैः ॥
चैतन्यरूपा प्राणात्मा देवता शक्तिरीरिता ।
कवर्गेण वियत्पूर्वभूतैर्हृदयमीरितम् ॥
शिरश्चवर्गशब्दाद्यैरीरितं तदनन्तरम् ।
ज्ञानेन्द्रियैष्टवर्गाद्यैस्तच्छिखा परिकीर्त्तिता ॥
कर्मेन्द्रियैस्तवर्गाद्यैः कवचं परिकीर्त्तितम् ।
वचनाद्यैः पवर्गाद्यैर्विलोचनमुदीरितम् ॥
बुद्ध्याद्यैर्यादिसंयुक्तैरस्त्रमस्य समीरितम् ।
आत्मनेऽन्ताः समाख्याता अङ्गमन्त्राः सजातयः ॥
नाभेश्चरणपर्यन्तं पाशबीजं प्रविन्यसेत् ।
हृदयान्नाभिपर्यन्तं शक्तिबीजं ततः परम् ॥
मूर्ध्वादि हृदयं यावदङ्कुशं विन्यसेत् सुधीः ।
हृदये धातुषु न्यसेद् यादीन् सप्त यथाक्रमम् ॥
प्राणे जीवे ततो न्यस्येद्धंसवर्णद्वयं पृथक् ।
कुर्याद् व्यापकमेतेन समस्तेन विधानवित् ॥

वीरचूडामणौ तु—षडङ्गन्यासादीनन्यथोक्तः । यथा—
अआ मध्ये कवर्गं च इई मध्ये चवर्गकम् ।
उऊ मध्ये टवर्गं च एऐ मध्ये तवर्गकम् ॥
ओ औ मध्ये पवर्गं च शेषमध्ये यवर्गकम् ।
न्यासं कुर्यान्महेशानि हृदयादिषडङ्गकम् ॥

तथा—एवं न्यासविधिं कृत्वा वर्णन्यासमथाचरेत् ।
नाभौ नारायणः प्रोक्तो माया तूदरमध्यतः ॥
वामांशे मेदो विन्यस्य मज्जास्थिनी करे न्यसेत् ।
शुक्रं वै दक्षिणे पादे वियद् वामे प्रविन्यसेत् ॥
न्यसेत् क्रोधं महादेवि मस्तकाच्चरणावधि ।

नारायणः आंकारः । शारदायाम्—
ततो विचिन्तयेद् देवीं जीवभूतां जगन्मयीम् ।

रक्ताब्धिपोतारुणमध्यसंस्थां पाशाङ्कुशाविक्षुशरासबाणान् ।
शूलं कपालं दधतीं कराब्जै रक्तां त्रिनेत्रां प्रणमामि देवीम् ॥

ततो वक्ष्यमाणलेलिहानमुद्रया हृदयं स्पृशन् प्राणमन्त्रं जपेत् । मन्त्रस्तु तत्रैव—

पाशादित्र्यक्षरात्मान्ते स्यादमुष्यपदं ततः ।
क्रमात् प्राणा इह प्राणास्तथा जीव इह स्थितः ॥
अमुष्य सर्वेन्द्रियाणि भूयोऽमुष्यपदं भवेत् ।
वाङ्मनोनयनश्रोत्र-घ्राणप्राणपदान्यथ ॥
पश्चादिहागत्य सुखं चिरं तिष्ठन्तु ठद्वयम् ।
अयं प्राणमनुः प्रोक्तः सर्वजीवप्रदायकः ॥

अत्रामुष्यपदस्थाने देवतानाम देयम् । तदुक्तं रुद्रयामले—

अमुकपदं यद्रूपं यत्र मन्त्रे च दृश्यते ।
साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत् ॥ इति ।

वशिष्ठसंहितायाम्—ततो जन्मादिकद्वयष्टक्रिया संस्कारसिद्धये ।
षोडशप्रणवावृत्तीः कृत्वा शक्तिं परां स्मरेत् ॥

## अथ मातृकान्यासः

फेत्कारिणीतन्त्रे—मन्त्रा मूकत्वमायान्ति विन्यासेन विना लिपेः ।
सर्वमन्त्रप्रसिद्ध्यर्थं तस्मादादौ लिपिं न्यसेत् ॥

तन्त्रान्तरे—इड़या पूरयेत् प्राणं स्वरैः स्पर्शैश्च कुम्भयेत् ।
रेचयेद् यादिकैरुष्मैस्ततः पिङ्गलया पुनः ॥
तथैव पूरणं वायोः कुम्भनं रेचनं पुनः ।
इड़या स्यात् ततो द्वाभ्यां पूरणादित्रयं पुनः ॥
प्राणायामत्रयं कृत्वा पश्चाद् व्यापकमाचरेत् ।
अकाराद्यैः क्षान्तवर्णैरापादतलमस्तकम् ।

शारदायाम्—ऋषिर्ब्रह्मा समुद्दिष्टो गायत्री छन्द ईरितम् ॥
सरस्वती समाख्याता देवता देशिकोत्तमैः ।
अक्लीबह्रस्वदीर्घान्तर्गतैः षड्वर्णकैः क्रमात् ।
षडङ्गानि विधेयानि जातियुक्तानि देशिकैः ॥
पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षस्थलां
भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।

मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥

मन्त्रतन्त्रप्रकाशे—आद्यावभ्यन्तरे न्यस्य षडाधारेषु पार्वति ।
अकारादिक्षकारान्तान् स्थूलदेहे बहिर्न्यसेत् ॥

दक्षिणामूर्त्तिः—कलापत्राम्बुजे कण्ठे स्वरान् सम्यक् प्रविन्यसेत् ।
हृदर्कपत्रे तद्वर्णान् नाभौ दशदले न्यसेत् ॥
दशवर्णान् लिङ्गमूले षड्दले षड् दलेश्वरि ।
चतुर्दले तथाधारे चतुर्वर्णांस्ततो न्यसेत् ॥
भ्रूमध्ये द्विदले हक्षावित्यन्तर्मातृकां न्यसेत् ।

वैष्णवे तु गौतमीये—एकैकं वर्णमुच्चार्य मूलाधाराच्छिरोऽन्तकम् ।
नमोऽन्तमिति विन्यास आन्तरः परिकीर्त्तितः ॥

तथा—मूलाधारे चतुर्दले तथान्तर्मातृकां न्यसेत् ।
षड्दले विद्युदाकारे स्वाधिष्ठानेऽनलत्विषि ।
बभमैर्यरलैर्युक्ते वर्णैः षड्भिश्च सुव्रते ॥
मणिपूरे दशदले नीलजीमूतसन्निभे ।
डादिफान्ताक्षरैर्युक्ते बिन्दूभूषितमस्तकैः ॥
अनाहते द्वादशारे प्रवालरुचिसन्निभे ।
कादिठान्ताक्षरैर्युक्ते योगिनीहृदयङ्गमे ॥
विशुद्धे षोड़शदले धूम्राभे स्वरभूषिते ।
आज्ञाचक्रे च चन्द्राभे द्विदले हक्षलाञ्छिते ॥
सहस्रारे हेमनिभे सववर्णविभूषिते ॥
अकथादित्रिरेखासु हलक्षत्रयभूषिते ।
तन्मध्ये परबिन्दुं च सृष्टिस्थितिलयात्मकम् ॥
एवं समाहितमना ध्यायेन् न्यासोऽयमान्तरः ।
मूलादिब्रह्मरन्ध्रान्तं विष्णुं ध्यायेत् चिदात्मकम् ॥
बिन्दुस्रुतसुधासारैस्तर्पयन् मातृकां न्यसेत् ।
एकैकं वर्णमुच्चार्य मूलाधाराद्ध्रुवान्तकम् ॥
नमोऽन्तमिति विन्यास आन्तरः परिकीर्त्तितः ।

अन्तर्मातृकान्यासो मनसैव कार्यः । "पुष्पैरनामया वापि मनसा वा न्यसेद्-मूनि"ति मन्त्रतन्त्रप्रकाशवचनात् । अनमया साङ्गुष्ठया ।

अङ्गुष्ठानामिकाभ्यां तु न्यासः सर्वत्र सम्मतः ।

इति पद्यवाहिनी(?)वचनात् । अत्रैवं व्यवस्था—पुष्पैर्देवतामूर्त्तौ, अनमया स्वदेहे, मनसा मूलाधारादिषु । इदञ्च ऋष्यादिकरषडङ्गन्यासबहिर्मातृकादिव्यतिरिक्तेषु, तत्र मुद्रान्तरविधानात् । कुलार्णवे—

यतिवैखानसैः कार्यः संहारान्तः कुलेश्वरि ।
न्यासो गृहस्थैः स्थित्यन्तः सृष्ट्यन्तो वर्णिनां भवेत् ॥

तन्त्रे—इत्यन्तर्मातृकां न्यस्य बहिस्तां तु प्रविन्यसेत् ।

## अथ मातृकान्यासस्थानानि

गौतमीये—ललाटमुखवृत्ताक्षि-श्रुतिघ्राणेषु गण्डयोः ।
ओष्ठदन्तोत्तमाङ्गास्ये दोःपत्सन्ध्यग्रकेषु च ॥
पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेऽंसके ।
ककुद्यंसे च हृत्पूर्व-पाणिपादयुगे ततः ॥
जठराननयोर्न्यस्येन् मातृकार्णान् यथाक्रमात् ।
त्वगसृङ्मांसमेदोऽस्थि-मज्जाशुक्रात्मकान् विदुः ॥
यादीन् हादीन् न्यसेदात्मपरमज्ञानपूर्वकान् ।

रचूडामणौ तु—मूर्ध्नि वक्त्रे तथा नेत्रे कर्णयोर्नासिकापुटे ।
कपोले ओष्ठदन्ते च जिह्वाग्रे कण्ठदेशतः ॥
कादिं दक्षिणहस्ते च चवर्गं वामहस्तके ।
टवर्गं दक्षिणे पादे तवर्गं वामतो न्यसेत् ॥
कुक्षौ पृष्ठेऽथ नाभौ च उदरे पादिपञ्चकम् ।
त्वगसृङ्मांसमेदोऽस्थि-मज्जाशुक्राणि धातवः ॥
जीवात्मा परमात्मा च न्यसेद् यादींस्ततः क्रमात् ।
हृदये दक्षिणांसे च ककुद्वामांसतो न्यसेत् ॥
हस्तयोः पादयोः पश्चादाचरणं मस्तकावधि ।
मूर्धादिचरणपर्यन्तं न्यसेत् साधकसत्तमः ॥

इत्युक्तम् । तदनयोर्विकल्पः । कुलावतारे—

पञ्चाशदक्षरन्यासः क्रमेण परिकीर्त्तितः ।
ओमाद्यन्तो नमोऽन्तो वा सबिन्दुर्बिन्दुवर्जितः ॥
पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः ।
सविसर्गः सोभयश्च रहस्यं तत् तु कथ्यते ॥

विसप्रदो बिन्दुयुतो विद्यादौ बिन्दुवर्जितः ।
पुत्रप्रदः सविसर्गः सोभयो भक्तिदायकः ॥
मायालक्ष्मीबीजपूर्वो वाग्भवाद्योऽथवा पुनः ।
त्रिबीजाद्यो रमाद्यो वा न्यस्तव्यः साधकोत्तमैः ॥

## अथ सृष्टयादिन्यासः

वीरचूडामणौ—मातृकात्रितयं कुर्यात् सृष्टिसंहारकस्थितिम् ।
न्यासं कुर्यान्महेशानि कल्पोक्तं च विशेषतः ॥
कुलावतारे—सृष्टेस्तु सुतपुष्टयादि स्थितेस्तत्पालनं भवेत् ।
संहृतेर्दोषसंहारस्तस्मात् त्रितयमाचरेत् ॥
शारदायाम्—न्यसेत् सर्गान्वितान् सृष्टया ध्यात्वा देवीं यथाविधि ।
बिन्दुयुक्तामिमां न्यस्येत् संहृत्या प्रतिलोमतः ॥
विद्यात् पूर्वोदितान् विद्वान् ऋष्यादीनङ्गसंयुतान् ।
ध्येया वर्णमये पीठे देवी वाग्वल्लभा शिवा ॥
अक्षस्रजं हरिणपोतमुदग्रटङ्कं विद्यां करैरविरतं दधतीं त्रिनेत्राम् ।
अर्धेन्दुमौलिमरुणामरबिन्दवासां वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ॥
सर्गबिन्द्वन्तिकान् न्यस्य डार्णाद्यान् स्थितिवर्त्मना ॥

फेत्कारिणीतन्त्रे—
उदरोपक्रमान् न्यासो हृदयान्तं स्थितिर्मता ।
इत्युक्तम् । इदं चान्तर्मातृकारीत्योक्तमिति फलतो न कश्चिद् विशेषः ।
त्रिशक्तिरत्ने—अकथादित्रिभेदेन विभज्य मनुवल्लिपिम् ।
कवर्गं प्रथमं न्यस्येद्‌वर्गं च ततः परम् ॥
तवर्गं विन्यसेत् पश्चात् स्थितिरेषा प्रकीर्त्तिता ।
यकाराद्यं तथा तं च अमारभ्य ममान्तकम् ।
यथास्थानं प्रविन्यस्येत् स्थितिर्यद्वेयमीरिता ॥
भमारभ्य क्षकारान्तमकाराद्यं च पश्चिमम् ।
पूर्वस्थानेषु विन्यस्येदथवेयं स्थितिर्भवेत् ॥
शारदायाम्—विद्यात् पूर्वोदितान् विद्वान् ऋष्यादीनङ्गसंयुतान् ।
ध्यायेद् वर्णेश्वरीमत्र वल्लभेन समन्विताम् ॥
सिन्दूरकान्तिममिताभरणां त्रिनेत्रां विद्याक्षसूत्रमृगपोतवरान् दधानाम् ।
पार्श्वस्थितां भगवतीमपि काञ्चनाङ्गीं ध्यायेत्कराब्जधृतपुस्तकवर्णमालाम् ॥

## अथ मातृकान्यासमुद्राः

तन्त्रान्तरे—ललाटेऽनामिकामध्ये न्यसेच्च मुखवृत्तके ।
तर्जनीमध्यमानामा विन्यसेच्चैव नेत्रयोः ॥
तर्जन्यनामे संयुज्य न्यसेत् साधकसत्तमः ।
अङ्गुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकौ नसोः ॥
मध्यमां गण्डयोर्न्यस्य मध्यमामोष्ठयोर्न्यसेत् ।
अनामां दन्तयोर्न्यस्य मध्यमामुत्तमाङ्गके ॥
मुखेऽनामां मध्यमां च हस्ते पादे च पार्श्वयोः ।
कनिष्ठानामिकामध्या न्यस्तव्याः पृष्ठतस्तथा ॥
ताः साङ्गुष्ठा नाभिदेशे सर्वाः कुक्षौ च विन्यसेत् ।
हृदये साधकः सर्वा अंसयोश्च ककुत्स्थले ॥
हृत्पूर्वहस्तपत्कुक्षि-मुखेषु तलमेव च ।
एतास्तु मातृकामुद्राः क्रमेण परिकीर्त्तिताः ॥
अज्ञात्वा विन्यसेद् यस्तु न्यासः स्यात् तस्य निष्फलः ।

अत्र केचित्—"न्यासं निर्वर्त्तयेद् देवि षोढान्यासपुरःसरमि"ति तन्त्रचूडामणिवचनात् सर्वादौ षोढान्यासविधानात्—

अङ्गन्यासकरन्यासौ कुर्यादत्रैव केवलम् ।
अत्रोक्तमाचरेदस्मिन्नान्यत् संचारयेद् बुधः ॥

इति फेत्कारिणीवचनाच्च मातृकान्यासं नास्तीति वदन्ति । तन्न—

मन्त्रा मूकत्वमायान्ति विन्यासेन विना लिपेः ।
सर्वमन्त्रप्रसिद्ध्यर्थं तस्मादादौ लिपिं न्यसेत् ॥

इति फेत्कारिणीतन्त्रवचनात्—

मातृकात्रितयं कुर्यात् सृष्टिसंहारकस्थितिम् ।
न्यासं कुर्यान्महेशानि कल्पोक्तं च विशेषतः ॥

इति ताराप्रकरणीयवीरचूडामणिवचनाच्च । तेनादौ मातृकैव न्यसनीया । षोढान्यासपुरःसरता तु न्यासान्तरापेक्षयैव सम्भवतीति तन्त्रचूडामणिवचनं विनिगकम् ।

## अथ षोढान्यासः

तन्त्रचूडामणौ—ताराषोढां प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताम् ।
सर्वविघ्नोपशमनीं सर्वपापप्रणाशिनीम् ॥

महादारिद्र्यशमनीं सर्वसम्पत्प्रदायिनीम् ।
सर्वकामप्रदां नित्यां सर्वसाम्राज्यदायिनीम् ॥
शिष्याय भक्तियुक्ताय विनीताय महात्मने ।
वदान्याय कुलीनाय शुद्धाचाररताय च ॥
एवंविधाय देवेशि साधकाय प्रकाशयेत् ।
अन्यथा सिद्धिहानिः स्यादित्याज्ञा शम्भुना कृता ॥
रुद्रैस्तु प्रथमो न्यासो द्वितीयस्तु ग्रहैर्मतः ।
लोकपालैस्तृतीयः स्याच्छिवशक्त्या चतुर्थकः ॥
तारादिभिः पञ्चमः स्यात् षष्ठः पीठैर्निगद्यते ।

## अथ रुद्रन्यासः

एकेन सहिता रुद्राः पञ्चाशत् परिकीर्त्तिताः ।
बिन्दुयुक्तैर्मातृकार्णैस्त्र्यक्षरीबीजपूर्वकैः ॥
ङेन्तैर्नमोन्तैर्देवेशि विन्यसेत् तान् क्रमात् सुधीः ।
तारिणी त्र्यक्षरी प्रोक्ता भवबन्धविनाशिनी ॥
नीलवर्णां त्रिनयनां शवासनसमायुताम् ।
बिभ्रतीं विविधाकल्पान् मौलावक्षोभ्य(र्धेन्दु)भूषिताम् ॥
एवं ध्यात्वा तारिणीं तु समाहितमनाश्चिरम् ।

एकेन सहिता इति । ते च शारदायाम्—

श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्त्तिरमरेश्वरः ।
अर्घीशो भारभूतीशस्तिथीशः स्थाणुको हरः ॥
झिण्टीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ।
अक्रूरश्च महासेनः षोडश स्वरमूर्तयः ।
पश्चात् क्रोधीशचण्डेश-पञ्चान्तकशिवोत्तमाः ।
अथैकरुद्रकूर्मैक-नेत्राह्वचतुराननाः ॥
अजेशसर्वसोमेशास्तथा लाङ्गलिदारुकौ ।
अर्धनारीश्वरश्चोमा-कान्तश्चाषाढिदण्डिनौ ॥
स्युरत्रिमीनमेषाख्य-लोहिताश्च शिखी तथा ।
छगलण्ड-द्विरण्डेशौ महाकालाख्यबालिनौ ॥
भुजङ्गेश-पिनाकीश-खड्गीशाख्यवकास्तथा ।
श्वेतभृग्वीशनकुलिशिवाः संवर्त्तकस्तथा ॥

एते रुद्राः स्मृता रक्ता धृतशूलकपालकाः । इति ।

बिन्दुयुक्तैरित्यादि । तेन ह्रीं श्रीं ह्रूं अं श्रीकण्ठेशाय नमः । ह्रीं श्रीं ह्रूं आं अनन्तेशाय नमः इत्यादयः प्रयोगाः । केचित् तु पूर्णोदर्यादिशक्तिसहितानेतान् न्यसन्ति । शक्तयश्च शारदायाम्—

पूर्णोदरी स्याद् विरजा शाल्मली तदनन्तरम् ।
लोलाक्षी वर्त्तुलाक्षी च दीर्घघोणा समीरिता ॥
सुदीर्घमुखी-गोमुख्यौ दीर्घजिह्वा तथैव च ।
कुण्डोदर्यूर्ध्वकेशी च तथा विकृतमुख्यपि ॥
ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी तथा ।
सुश्रीमुखी च विद्यामुख्येताः स्युः स्वरशक्तयः ॥
महाकाली-सरस्वत्यौ सर्वसिद्धिसमन्विते ।
गौरी त्र्यैलोक्यविद्या स्यान्मन्त्रशक्तिस्ततः परम् ॥
आत्मशक्तिर्भूतमाता तथा लम्बोदरी मता ।
द्राविणी नागरी भूयः खेचरी चापि मञ्जरी ॥
रूपिणी वीरिणी पश्चात् काकोदर्यपि पूतना ।
स्याद् भद्रकाली-योगिन्यौ शङ्खिनी गर्जिनी तथा ॥
कालरात्रिश्च कुब्जिन्या कपर्दिन्यपि वज्रिणी ।
जया च सुमुखेश्वर्या रेवती माधवी तथा ॥
वारुणी वायवी प्रोक्ता पश्चाद्रक्षोविदारिणी ।
ततश्च सहजा लक्ष्मीर्व्यापिनी माययाऽन्विता ॥
एता रुद्राङ्कपीठस्थाः सिन्दूरारुणविग्रहाः ।
रक्तोत्पल-कपालाभ्यामलङ्कृतकराम्बुजाः ॥

इति रुद्रन्यासः

## अथ ग्रहन्यासः

स्वरैर्हृदि न्यसेत् सूर्यं रक्तं त्र्यक्षरपूर्वकैः ।
भ्रुवोर्मध्ये यवर्गेण सोमं शुक्लं तु विन्यसेत् ॥
नेत्रत्रये कवर्गेण मङ्गलं लोहितं न्यसेत् ।
चवर्गेण बुधं श्यामं न्यसेद् हृदयमण्डले ॥
टवर्गेण कण्ठकूपे पीतवर्णं बृहस्पतिम् ।
गलदेशे तवर्गेण पाण्डरं भार्गवं न्यसेत् ॥

नाभिदेशे पवर्गेण नीलवर्णं शनिं न्यसेत् ।
शवर्गेण धूम्रवर्णं राहुं वक्त्रे न्यसेत् ततः ॥
ल-क्षाभ्यां गुददेशे तु केतुं धूम्रं वरानने ।
कामरूपधरान् सर्वान् सर्वाभरणभूषितान् ॥

इति ग्रहन्यासः

## अथ लोकपालन्यासः

इन्द्रमग्निं यमं रक्षो वरुणं पवनं विभुम् ।
ईशानमात्मनो मूर्ध्नि दिक्षु चाष्टसु च क्रमात् ॥
अधोऽनन्तं मूर्ध्निदेशे ब्रह्माणं च तथा न्यसेत् ।
ह्रस्व-दीर्घ-स्वरैश्चाष्टवर्गैस्त्र्यक्षरपूर्वकैः ॥

ह्रस्वेत्यादि । तेन ह्रीं त्रीं हूं अं इं उं ऋं ऌं एं ओं अं इन्द्राय नमः इति पूर्व-ललाटे । ह्रीं त्रीं हूं आं ईं ऊं ॠं ॡं ऐं औं अः अग्नये नमः इत्यग्नौ दक्षिणकर्णोपरि । अष्टवर्गाः कचटतपयशलाः । इति लोकपालन्यासः

## अथ शिवशक्तिन्यासः

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
ततः परशिवो देवि षट् शिवाः परिकीर्त्तिताः ॥
मूलाधारे तु ब्रह्माणं डाकिनीसहितं न्यसेत् ।
सर्वत्र त्र्यक्षरीयुक्तं वादिसान्तं सबिन्दुकम् ॥
स्वधिष्ठानाख्यचक्रे तु सविष्णुराकिणीं तथा ।
बादिलान्तं प्रविन्यस्य नाभौ तु मणिपूरके ॥
डादिफान्तार्णसहितं रुद्रं च लाकिनीं तथा ।
अनाहते कादिठान्तमीश्वरं काकिनीं न्यसेत् ॥
विशुद्धाख्ये महाचक्रे षोड़शस्वरसंयुतम् ।
सदाशिवं शाकिनीं तु विन्यस्य पूर्ववत् ततः ॥
आज्ञाचक्रे तु देवेशि हक्षवर्णसमन्वितम् ।
परं शिवं ब्रह्मरूपं हाकिनीसहितं न्यसेत् ॥

इति शिवशक्तिन्यासः

## अथ तारादिन्यासः

तारा चोग्रा महोग्रा च वज्रा काली सरस्वती ।
कामेश्वरी च चामुण्डा इत्यष्टौ तारिणी मताः ॥

सर्वत्रादौ त्र्यक्षरीं तु समुच्चार्य क्रमेण तु ।
स्वरयुग्मेन वर्गेण भूषितेन च बिन्दुना ॥
ङेन्ता नमोऽन्तास्ताराद्या न्यस्तव्या ध्यानपूर्विकाः ।
ब्रह्मरन्ध्रे ललाटे च भ्रूमध्ये कण्ठगह्वरे ॥
हृदये नाभिदेशे च लिङ्गे चाधारके न्यसेत् ।

ह्रीं त्रीं हुं अं आं कं खं गं घं ङं तारायै नमः इत्यादयः प्रयोगाः ।

इति तारादिन्यासः

## अथ पीठन्यासः

मूलाधारे कामरूपं हृदि जालन्धरं ततः ।
ललाटे पूर्णगिर्याख्यमुड्डियानं तदूर्ध्वके ॥
वाराणसीं भ्रुवोर्मध्ये चाव(ज्वल)न्तीं लोचनत्रये ।
मायावतीं मुखवृत्ते कण्ठे मधुपुरीं ततः ॥
अयोध्यां नाभिदेशे तु कट्यां काञ्चीं विनिर्दिशेत् ।
दशैतानि प्रधानानि पीठानि क्रमतो विदुः ॥
ह्रस्वदीर्घैश्चाष्टवर्गैर्नमोन्तैः क्रमतो न्यसेत् ।

इति पीठन्यासः

इति तन्त्रचूडामण्युक्तमहाषोढान्यासः

## अथ नीलतन्त्रोक्तताराषोढान्यासः

नीलतन्त्रे—मन्त्रेणाऽन्तरितां कृत्वा षड्वारं मातृकां न्यसेत् ।
क्रमोत्क्रमाद् वरारोहे ताराषोढा प्रकीर्त्तिता ॥
कृते तु न्यासमात्रे तु सर्वपापं विनश्यति ।
योगिनीनां भवेत् पूज्यः स देवो न तु मानुषः ॥
यं नमन्ति महेशानि षोढा रचितविग्रहाः ।
अल्पायुः स भवेत् सद्यो देवता कम्पते भिया ॥
नास्त्यस्य पूज्यो लोकेषु पितृमातृमुखोज्ज्वलः ।

षड्वारं सृष्टिस्थितिसंहारक्रमात् । तेन सृष्टिस्थितिसंहार-संहारस्थितिसृष्टय इति क्रम इति केचित् । अन्ये तु—संहार-सृष्टि-स्थितयः पुनरपि तथैवेति वदन्ति । वस्तुतः क्रमोत्क्रमयोरेव वचनारूढत्वात् अकारादिक्षकारान्तान् क्षकाराद्यकारान्तान् मन्त्रान्तरितान् वारत्रयं न्यसेत् । एवं षोढान्यासो भवतीति मम प्रतिभाति । इति नीलतन्त्रोकताराषोढान्यासः

## अथ रुद्रयामलोक्ततारापोढान्यासः

रुद्रयामले—शृणु देवि प्रवक्ष्यामि गुह्यषोढा त्वियं प्रिये ।
न प्रकाश्यमिदं क्वापि मन्त्रिणः कायरक्षणे ॥
प्रणवं मातृकावर्णैः पुटितं मातृकास्थले ।
तेनैव पुटितं वर्णं न्यसेत् तत्रैव पार्वति ॥
मायाबीजं तथा देवि न्यस्तव्यं तु प्रयत्नतः ।
बधूबीजं तथा चैव विन्यसेत् सुसमाहितः ॥
कूर्चबीजं तथा देवि न्यसनीयमशेषतः ।
अस्त्रं चैव तथा न्यस्त्वा सकलं तदनन्तरम् ॥
गुह्यषोढा त्वियं देवि न प्रकाश्या कदाचन ।
अवश्यं प्रत्यहं कार्या ध्यानं पूजा जपस्तथा ॥

अत्र अं ॐ अं ॐ अं ॐ नमः इति ललाटे । एवं प्रथमन्यासः । अं ह्रीं अं ह्रीं अं ह्रीं नमः इति ललाटे इति द्वितीयक्रमः । अं त्रीं अं त्रीं अं त्रीं नमः इति तृतीयक्रमः । अं हूं अं हूं अं हूं इत्यादि चतुर्थे । अं फट् अं फट् अं फट् नमः इत्यादि पञ्चमे । अं ॐ ह्रीं त्रीं हूं फट् अं ॐ ह्रीं त्रीं हूं फट् अं ॐ ह्रीं त्रीं हूं फट् नमः इत्यादि षष्ठक्रमः ।

इति रुद्रयामलोक्ततारापोढान्यासः

वीरतन्त्रोक्तषोढान्यासस्तु कालीप्रकरणे वक्ष्यते ।

## अथ तारकान्यासः

वीरतन्त्रे—अकादिक्रमतो न्यस्येद्रोहिण्यादिक्रमेण तु ।
व्युत्क्रमेण च तत्त्वानि शेषं शेषेण योजयेत् ॥
रोहिण्यादिमहान्यासं कृत्वा नरवरः सुधीः ।
रोहिणीसुतवत् सूर्य्यामशोच्यो भवति ध्रुवम् ॥
गद्यपद्यमयी वाणी कथायां तस्य जायते ।
अदृष्टश्रुतशास्त्राणां व्याख्याता भवति ध्रुवम् ॥
अकृत्वा तारकान्यासं तारिणीं प्रजपेद् यदि ।
शतलक्षप्रजप्तोऽपि न मन्त्रः सिद्धिदायकः ॥

तत्र सम्प्रदायानुसारी प्रयोगः । अं कं आकाशतत्त्वात्मिकायै रोहिणीरूपायै नमः शिरसि । आं खं वायुतत्त्वात्मिकायै मृगशिररूपायै नमो मुखे । इं गं तेज-स्तत्त्वात्मिकायै आर्द्रारूपायै नमो हृदि । ईं घं जलतत्त्वात्मिकायै पुनर्वसुरूपायै नमो

गुह्ये। उं ऊं पृथिवीतत्त्वात्मिकायै पुष्यरूपायै नमः पादयोः। ऊं वं घ्राणतत्त्वात्मिकायै अश्लेषारूपायै नमो नसोः। ऋं छं रसनातत्त्वात्मिकायै मघारूपायै नमो जिह्वायाम्। ॠं जं चक्षुस्तत्त्वात्मिकायै पूर्वफल्गुनीरूपायै नमश्चक्षुषोः। ऌं झं त्वक्तत्त्वात्मिकायै उत्तरफल्गुनीरूपायै नमः सर्वाङ्गे। ॡं ञं श्रोत्रतत्त्वात्मिकायै हस्तारूपायै नमः श्रोत्रयोः। एं टं गन्धतत्त्वात्मिकायै चित्रारूपायै नमो नसोः। ऐं ठं रसतत्त्वात्मिकायै स्वातीरूपायै नमो जिह्वायाम्। ओं डं रूपतत्त्वात्मिकायै विशाखारूपायै नमश्चक्षुषोः। औं ढं रसतत्त्वात्मिकायै स्वातीरूपायै नमः सर्वाङ्गे। अं णं शब्दतत्त्वात्मिकायै ज्येष्ठारूपायै नमः श्रोत्रयोः। अः तं उपस्थतत्त्वात्मिकायै मूलारूपायै नमो लिङ्गे। अं थं पायुतत्त्वात्मिकायै पूर्वाषाढ़ारूपायै नमो गुह्ये। आं दं पादतत्त्वात्मिकायै उत्तराषाढ़ारूपायै नमः पादयोः। इं धं पाणितत्त्वात्मिकायै श्रवणारूपायै नमो हस्तयोः। ईं नं वाक्तत्त्वात्मिकायै धनिष्ठारूपायै नमो मुखे। उं पं आनन्दतत्त्वात्मिकायै शतभिषारूपायै नमो लिङ्गे। ऊं फं विसर्गतत्त्वात्मिकायै पूर्वभाद्रपदरूपायै नमो गुह्ये। ऋं बं गतितत्त्वात्मिकायै उत्तरभाद्ररूपायै नमः पादयोः। ॠं भं आदानतत्त्वात्मिकायै रेवतीरूपायै नमो हस्तयोः। ऌं मं वचनतत्त्वात्मिकायै अश्विनीरूपायै नमो मुखे। ॡं एं ऐं ॐ यं रं लं वं अधस्तत्त्वात्मिकायै भरणीरूपायै नमो नाभ्यादिपादपर्यन्तं न्यसेत्। औं अं अः शं षं सं हं ळं क्षं ऊर्ध्वतत्त्वात्मिकायै कृत्तिकारूपायै नमो नाभ्यादि-मस्तकपर्यन्तं न्यसेत्।

इति तारकान्यासः

## अथ ऋष्यादिन्यासः

तन्त्रे—ऋषिच्छन्दो देवतानां विन्यासेन विना यदा।
जप्यते साधितोऽप्येष तस्य तुच्छं फलं भवेत्॥

मन्त्रचूडामणौ—अक्षोभ्य ऋषिरेतस्या बृहती छन्द ईरितम्।
नीलसरस्वती देवी त्रिषु लोकेषु गोपिता॥
हूं बीजमस्त्रं शक्तिः स्याच्चतुर्वर्गफलप्रदा।

शिरो-वदन-हृदय-लिङ्ग-पादसर्वाङ्गेषु तेषां न्यासः। तदुक्तं तन्त्रे—
ऋषिन्यासो मूर्ध्नि देशे छन्दस्तु मुखपङ्कजे।
देवता हृदये चैव बीजं गुह्यप्रदेशके॥
शक्तिं च पादयोश्चैव सर्वाङ्गे कीलकं न्यसेत्।

योगिनीतन्त्रे—ऋष्यादीन् विन्यसेद् देवि चतुर्थीहृदयान्तकान्।
चतुर्थी विभक्तिः। हृदयं नमः।

सारसंग्रहे—ऋषिच्छन्दोदेवतानां न्यासे त्वङ्गुलयः स्मृताः ।
चतुस्रोऽङ्गुष्ठरहिताः शक्त्यन्तं विन्यसेत् ततः ॥ इति ।

बीजशक्तिन्यासोऽप्येवमेव । कीलकन्यासो व्यस्तहस्ताभ्यां सर्वाङ्गे । तदुक्तम्—
कीलकं व्यस्तहस्ताभ्यां सर्वाङ्गे साधकाग्रणीः ।

## अथ कराङ्गन्यासः

फेत्कारिण्याम्—षड्दीर्घाद्याद्यबीजेन कराङ्गन्यसनं ततः । करन्यासे विशेषस्तत्रैव—
वृद्धाङ्गुष्ठं समारभ्य कनिष्ठान्तं तथा पुनः ।
उत्पत्तिसंज्ञको न्यासः संहारोऽस्य विपर्ययः ॥
मध्यमामूलमारभ्य चोभयोरपि हस्तयोः ।
तर्जन्यन्तं चरेन् न्यासं स्थितिर्नामकृतोदयः ।

सिद्धसारस्वते—अखिलवाग्रूपिणीं प्रोच्य हृदयाय नमो वदेत् ॥
अखण्डवाग्रूपिणीं च शिरसे वह्निवल्लभा ॥
ब्रह्मवाग्रूपिणीमुक्त्वा शिखायै वषडित्यपि ।
विष्णुवाग्रूपिणीमुक्त्वा कवचाय हुमुच्चरेत् ॥
रुद्रवाग्रूपिणीं नेत्रत्रयाय वौषडित्यपि ।
सर्ववाग्रूपिणीमुक्त्वा चास्त्राय फडिति स्मरेत् ॥
षड्दीर्घमायया बीजं बीजान्ते तानि योजयेत् ।

तन्त्रचूडामणौ—बीजान्ते एकजटायै हृदयं परिकीर्त्तितम् ।
तारिण्यै शिरसे तद्वद् वज्रोदके शिखां तथा ॥
उग्रजटे च कवचं महापरिसरे तथा ।
पिङ्गोग्रैकजटे तद्वन् नेत्रास्त्रे परिकीर्त्तिते ॥

इत्युक्तम् । तेन फेत्कारिणीवचनमन्यभागोपलक्षणपरम् । सिद्धसारस्वत-तन्त्रचूडामणिप्रोक्तप्रकारयोर्विकल्पः । सिद्धसारस्वतप्रोक्तषडङ्गन्यासो नीलसरस्वत्यां तन्त्रचूडामणिप्रोक्तषडङ्गन्यासप्रकारस्तारैकजटयोरित्यपि वदन्ति ।

तन्त्रे—हृदये मध्यमानामातर्जनीभिर्न्यसेद् बुधः ।
मध्यमातर्जनीभ्यां च शिरसि न्यासमाचरेत् ॥
अङ्गुष्ठेन शिखायां च दशभिः कवचे न्यसेत् ।
नेत्रेषु तिसृभिश्च स्यादस्त्रमूर्ध्वोर्ध्वगं त्रिशः ॥
मध्यमातर्जनीभ्यां स्यादङ्गमुद्राः स्मृता अपि ।

मध्यमातर्जनीभ्यामूर्ध्वोर्ध्वक्रमेण तालत्रयं कुर्यादित्यर्थः ।

स्वतन्त्रे—अनुक्ताङ्गेषु मन्त्रेषु पदशो वर्णशोऽपि वा ।
स्वेनैवाङ्गानि कल्यानि मूलेन सकलेन वा ॥

## अथ व्यापकन्यासः

भैरवतन्त्रे—पञ्चधा नवधा वापि मूलेन सप्तधा तथा ।
व्यापयेदिति शेषः । स्वतन्त्रतन्त्रेऽपि—
मूलेन व्यापकं न्यासं नवधा कारयेत् प्रिये ।

अत्र योगपीठन्यासो नास्ति । तारातन्त्रे क्वचिदप्यभिधानादर्शनात् । "नान्यत् सञ्चारयेद् बुध" इत्यभिधानाच्च । यदि कालीतन्त्रातिदेशेन तत्प्राप्तिरुचिता तदाग्रे वक्ष्यमाणपीठपूजाक्रमेण तन्न्यासोऽवगन्तव्यः ।

कुमारीतन्त्रे—ततः स्त्रीवेशधारी स्यात् सिन्दूराङ्कितभालकः ।
शृङ्गारोज्ज्वलभूषाढ्यस्ताम्बूलपूरिताननः ॥
एवं वेशादिकं सर्वं वनितामपि कारयेत् ।

आदिपदेन भूतशुद्ध्यादिव्यापकान्तं पञ्चमयोगोक्तन्यासादिकं चोच्यते ।

कुलार्णवे—यो न्यासकवचच्छन्नो मन्त्रं जपति तं प्रिये ।
विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥
अकृत्वा न्यासजालं यो मूढात्मा प्रजपेन् मनुम् ।
सर्वविघ्नैः स बाध्येत व्याघ्रैर्मृगशिशुर्यथा ॥

स्वतन्त्रतन्त्रे—इत्थं विन्यस्तदेहः सन् चक्रराजं समालिखेत् ।
स्वर्णे वा राजते ताम्रे पाषाणे चाष्टधातुषु ॥
स्वयम्भुकुसुमं कुण्डगोलोत्थरोचनागुरुः ।
काश्मीरं मृगनाभिश्च कुलं च मलयोद्भवम् ॥
एष गन्धः समाख्यातः सर्वदा चण्डिकाप्रियः ।
एतेन गन्धयोगेन योनिचक्रं समालिखेत् ॥

अत्र गन्धानामैच्छिकग्रहणम् । कुमारीतन्त्रे—
एतत् तु विलिखेत् ताम्रे कुण्डगोलविलेपिते ।

रुद्रयामले—ततः कुङ्कुमसिन्दूरैः कार्यं यन्त्रं तु योगिना ।
सौवर्णे राजते ताम्रे स्फाटिके वैद्रुमे तथा ॥
चक्रे यथोक्तविधिना पूज्या देवी नरोत्तमैः ।

स्फाटिकादौ स्थिररेखारूपमपि यन्त्रं प्रशस्तम् । अत एव सारसंग्रहे—
ताम्रे द्वादशकं वर्षं स्फाटिकादौ तु सर्वदा ।

तेषां मध्ये स्फाटिकं तु सर्वसिद्धिप्रदं भवेत् ॥

तन्त्रान्तरे—यावज्जीवं सुवर्णं स्याद् रौप्यं द्वाविंशतिः प्रिये ।
ताम्रे द्वादशकं वर्षं तदूर्ध्वं भूर्जपत्रके ॥

रुद्रयामले—एकतोलं द्वितोलं वा त्रितोलं वेदतोलकम् ।
स्वेच्छातोलं नरः कृत्वा प्रत्यवायं समश्नुते ।

तथा—ताम्रे लक्षगुणं प्रोक्तं रौप्ये कोटिगुणं भवेत् ॥
सौवर्णेऽनन्तफलदं मण्यादौ किं वदामि ते ।
विद्रुमे रचिते यन्त्रे पद्मरागेऽथवा प्रिये ।
इन्द्रनीलेऽथ वैदूर्ये स्फाटिके मरकतेऽपि वा ॥
धनं पुत्रं तथा दारान् यशांसि लभते ध्रुवम् ।

रत्नसागरे—अङ्ग्यङ्गुलेन हेमस्य रजतस्य तथैव च ।
ताम्रस्य पूर्वसंख्यैव माणिक्यादौ यथेच्छया ॥

गौरीयामले—चातुर्विध्यं हि चक्रस्य प्रस्ताराश्च भवन्ति हि ।
भूकूर्मपद्मप्रस्तारा मेरुश्चापि तथाविधः ॥
निम्नरेखासमायोगो भूप्रस्तारो मयोदितः ॥
कूर्मपद्मकप्रस्तार ऊर्ध्वरेखं मयोदितम् ॥

सौत्रामणितन्त्रे—ऋजुरेखे भवेल्लक्ष्मीर्वक्ररेखे दरिद्रता ।

कुलार्णवे—आभिरूप्याच्च बिम्बस्य पूजायाश्च विशेषतः ।
साधकस्य च विश्वासाद् देवतासन्निधिर्भवेत् ।

फेरवीये—अष्टपत्रं लिखेत् पद्मं त्रिकोणोज्ज्वलकर्णिकम् ।
मायां पूर्वदले न्यस्य याम्ये बीजं द्वितीयकम् ॥
तथोत्तरे पश्चिमे च फट्कारौ विलिखेत् ततः ।
मध्ये बीजं लिखित्वा तु भूतशुद्धिं समाचरेत् ॥

भूतशुद्धिमिति मकारपञ्चकशुद्धिमित्यर्थः । भूतपदस्य पञ्चसंख्यार्थकत्वात् । अन्यथा—"इत्थं विन्यस्तदेहः सन् चक्रराजं समालिखेदित्य"नेन विरोधापत्तेः ।

केचित् तु—भूतशुद्धियन्त्रलिखनयोः पौर्वापर्यविकल्पमेवेच्छन्ति ।

वीरतन्त्रे—षट्कोणं विलिखेत् पद्ममष्टपत्रं सलक्षणम् ।

फेत्कारिणीतन्त्रे—सयोनि गोमयेनाष्टपत्रमब्जं सुशोभनम् ।
भूपुरं वसुवज्राढ्यं यन्त्रमेकजटात्मकमिति ॥

भूपुरमप्यधिकमुक्तम्। एवं च षट्कोणत्रिकोणयोर्विकल्पः। समुच्चय एवेति वीरचूडामणिमतं वक्ष्यते।

नीलतन्त्रे—व्योमेन्दौ रसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केशरं
वर्गोल्लासिवसुच्छदं वसुमतीगेहेन संवेष्टितम्।
ताराधीश्वरवारिवर्णविलसद् दिक्कोणसंशोभितं
यन्त्रं नीलतनोः परं निगदितं सर्वार्थसिद्धिप्रदम्॥

अत्र नीलतनोरित्यभिधानात् त्र्यक्षरोपासकेनास्मिन् यन्त्रे पूजा चतुरक्षर-पञ्चाक्षरोपासकेन तु फेत्कारिण्याद्युक्तयन्त्रे। व्योमेन्दावित्यादिना धारणयन्त्रमुक्तमित्यपि वदन्ति।

मत्स्यसूक्ते—अनुक्तकल्पे यन्त्रं तु लिखेत् पद्मं दलाष्टकम्।
षट्कोणकर्णिकं वृत्तं वेदद्वारोपशोभितम्॥

तन्त्रे—आः सुरेखे वज्ररेखे हूं फट् च वह्निवल्लभा।
मन्त्रेणानेन विलिखेत् पद्मपत्रं मनोहरम्।

कुमारीतन्त्रे—स्वयम्भूपुष्पसंयुक्ते कुङ्कुमारुणसेविते।
शुद्धासने च पशुभिरदृष्टे पुरतो न्यसेत्॥

दक्षिणामूर्त्तिसंहितायाम्—
श्रीखण्डरक्तश्रीखण्ड-श्रापर्णीसम्भवे पटे।
चक्रं संस्थापयेद् देवि नान्यत्र वरवर्णिनि॥

कुलार्णवे—यन्त्रे सा पूजिता देवि सहसैव प्रसीदति।
कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात्॥
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति तत्त्वतः।
शरीरमिव जीवस्य दीपस्य स्नेहवत् प्रिये॥
सर्वेषामपि देवानां तथा यन्त्रं प्रतिष्ठितम्।
तस्माद् यन्त्रं लिखित्वाऽथ ध्यात्वा वासावृतिं शिवम्॥
ज्ञात्वा गुरुमुखात् पूर्वं पूजयेद् विधिना प्रिये॥

तथा—न रात्रावङ्कयेद् यन्त्रं साधकस्तु कदाचन।
प्रमादादङ्किते चैव देवताशापमाप्नुयात्॥

सिद्धेश्वरीतन्त्रे—संस्थाप्य पुरतो देवि शुभे पीठे सुरेश्वरि।
दद्यात् पुष्पाञ्जलिं तत्र मूलमन्त्रेण साधकः।

योगिनीतन्त्रे—योगिनीमूलमन्त्रेण तत्र पुष्पाञ्जलिं क्षिपेत्।

अशून्यं कुसुमैः कुर्याच्छून्यं विघ्नं विनिर्दिशेत् ॥

योगिनीमूलमन्त्रो यथा—भैरवतन्त्रे—

ह्रस्वः साक्षिभयं श्वेतो भगवान् मदनो वकः ।
ताभिषेकं तथा चोक्त्वा भृगुः काली मरुत् प्रिये ॥
कूर्चास्त्रं वह्निभार्येति यन्त्रे पुष्पाञ्जलिं क्षिपेत् ।

ह्रस्वोऽकारः । भयं भकारः । साक्षि ह्रस्वेकारयुक्तम् । श्वेतो मूर्धन्यषकारः । भगवान् एकारयुक्तः । मदनः ककारः । वकः तालव्यशकारः । ताभिषेकेति स्वरूपम् । भृगुर्दन्त्यसकारः । काली मकारः । मरुत् यकारः । कूर्चं हूंकारः । अस्त्रं फट् । वह्निभार्या स्वाहा । कुमारीतन्त्रे—

पीठन्यासं ततः कुर्यादाधारशक्तिपूर्वकम् ।
प्रकृतिं कमठं चैव शेषं पृथ्वीं तथा पुनः ॥
सुधाम्बुधिं मणिद्वीपं चिन्तामणिगृहं तथा ।
श्मशानं पारिजातं च तन्मूले रत्नवेदिकाम् ॥
तस्योपरि मणेः पीठं न्यसेत् साधकसत्तमः ।
चतुर्दिक्षु मुनीन् देवान् शवांश्च शवमुण्डकान् ॥
धर्मादींश्चाप्यधर्मादीन् पादगात्रचतुष्टये ।
हृदि पद्मं तथा पद्मे सूर्यसोमौ महेश्वरि ॥
वैश्वानरं तथा सत्त्वं रजश्चैव तमस्तथा ।
आत्मानं चैव विन्यस्य शक्तीर्हृत्पद्मके न्यसेत् ॥

अत्र "पीठन्यासं ततः कुर्यादि"त्यत्र न्यासपदोपादानं कालिकाक्रमाभिप्रायेण कुमारीतन्त्रस्य तदीयत्वादिति वदन्ति । अत्र च बाह्यपीठार्चनक्रमे तदुपयोगः । धर्मादीनिति । तेन कोणचतुष्टये धर्मज्ञानवैराग्यैश्वर्याणि दिक्चतुष्टये अधर्माज्ञानावैराग्यानैश्वर्याणि पूजयेदित्यर्थः । शक्तीः पीठशक्तीः । तारार्णवे—

षट्कोणान्तर्गतं पद्मं भूबिम्बद्वितयं पुनः ।
तन्मध्ये पूजयेद् देव्या वाहनं शवमेव च ॥
श्मशानं तत्र संचिन्त्य तत्र कल्पद्रुमं स्मरेत् ।
तन्मूले मणिपीठं च नानामणिविभूषितम् ॥
नानालङ्कारभूषाढ्यं मुनिदेवैश्च भूषितम् ।
शिवाभिर्बहुमांसास्थिमोदमानाभिरन्ततः ।
चतुर्दिक्षु शवान् मुण्डान् चिताङ्गारास्थिविभूषितान् ॥

केशरेषु पीठशक्तयः पूज्याः। ताश्च सिद्धसारस्वते—

लक्ष्मीः सरस्वती चैव रतिः प्रीतिस्तथैव च।
कीर्त्तिः शान्तिश्च पुष्टिश्च तुष्टिरित्यष्टशक्तयः॥

सारसंग्रहे—पीठशक्तिरथाभ्यर्च्येत् केसरेषु समन्ततः।
वरदाभयधारिण्यः पीठं पीठाणुना यजेत्॥

वीरचूड़ामणौ तु—पीठशक्तिविधानेन नवशक्तीः प्रपूजयेत्।
रतिः प्रीतिः प्रिया कान्तिः कामिनी काममालिनी॥
कन्दर्पदलिनी दुर्गा भाविनी नवशक्तयः।
वियद् भृगुं समुच्चार्य मनुं बिन्दुकलान्वितम्॥
महाप्रेतपदं पश्चात् हृदयान्तमयो मनुः।

मनुः पीठमनुः। कुमारीतन्त्रे—पीठमन्त्रं तन्त्रान्तरमुक्तम्।

यथा—वाग्भवं प्रथमं चोक्त्वा परायै तदनन्तरम्।
अपरायै परापरायै ह्सौर्वाच्यमतः परम्॥
सदाशिवमहाप्रेतङेन्तं पद्मासनं तथा।
नम इत्येव मन्त्रोऽयं पीठन्यास उदाहृतः॥

यद्यपि कुमारीतन्त्रं कालीप्रधानम् तथाप्यतिदेशादत्रापि तदन्वेतीति वदन्ति। वशिष्ठसंहितायाम्—

ततस्तु कारयेद् विद्वान् सप्तच्छदवृत्तिं द्विजः।
ह्रींकारसम्पुटं कृत्वा ॐकारेण समन्वितम्॥
पूजादौ प्रत्यहं विप्रः सप्तकृत्वो जपेन्मनुम्।
अनेन तु विधानेन सरक्षा मन्त्रतेजसः॥
देवीभूतानि सर्वाणि तथा च साधकोत्तमाः।
भैरवस्तु स्वयं देवो मन्त्रतेजसि लोलुपाः॥
हरन्ति सर्वे तेजांसि रक्षां सप्तछदं विना।

## अथ मन्त्रशुद्धिः

कुलार्णवे—ग्रथित्वा मातृकावर्णैर्मूलमन्त्राक्षराणि च।
क्रमोत्क्रमाद् द्विरावृत्या मन्त्रशुद्धिरियं भवेत्॥

## अथ द्रव्यशुद्धिः

कुलार्णवे—पूजाद्रव्याणि संप्रोक्ष्य मूलास्त्राद्भिर्विधानतः।
दर्शयेद् धेनुमुद्रां च द्रव्यशुद्धिः प्रकीर्त्तिता॥

## अथ विशेषशुद्धिः

कुलार्णवे—कुलद्रव्यशक्तिशुद्धिरग्रे वाच्या। ॐ प्रतद्विष्णु स्तुवते वीर्येण मृगोन भीमः कुचरो गरिष्ठाः यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा इति मन्त्रेण मांसं शोधयेत्। "प्रतद् विष्णुरिति मन्त्रं मांसशुद्धौ नियोजयेदि"ति वचनात्। ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा मृतात्। इति मन्त्रेण मत्स्यं शोधयेत्। "त्र्यम्बकस्य तु मन्त्रेण मत्स्यशुद्धिं समाचरेदि"ति वचनात्। ॐ तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्रासो विपण्यवो जागृवांं स समिन्धते विष्णोर्यत् परमं पदम्। इति मन्त्रेण मुद्रां शोधयेत्। "तद्विष्णोरिति मन्त्रेण तद्विप्रासोऽणुना तथा। मुद्रां तु शोधयेन्मत्री देवताकारिकामिति वचनात्। ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु आसिंचतु प्रजापतिर्धाता गर्भं दधातु वै गर्भं देहि सिनीवालि गर्भं देहि सरस्वति। गर्भं धेह्यश्विनौ देवा बाधत्तां पुष्करस्रजौ। आभ्यां मन्त्राभ्यां कुण्डगोलोत्थौ शोधयेत्। "विष्णुर्योनिममुं मन्त्रं गर्भं धेहीति वै तथा। कुण्डगोलोत्थयोः शुद्धौ साधको विनियोजयेत्"। इति वचनात्। तन्त्रे—तारं कूर्चास्त्रमुद्धृत्य शिवादित्रयबिन्दुयुक्।

वह्निजाया तारमाया श्रीबीजं सुरतप्रिये॥
तारमायारमास्त्रं च वह्निजायां च वर्त्तुलम्।
ततो मृतोद्भवायेत्यमृतवर्षिणि तत्परम्॥
प्रियेे देविपदं युक्तं शापं मोचय युग्मकम्।
अमृतं स्रावयद्वन्द्वं अमृतं कुरुयुग्मकम्।
वह्निजायान्तमन्त्रेण शुक्रशुद्धिं समाचरेत्॥

वर्त्तुलं मकारः। रुद्रयामले—

मांसं तु त्रिविधं प्रोक्तं जलखेचरभूचरम्।
तथा—गोनरेभाश्व महिषवराहात्रमृगोद्भवाम्॥
महामांसाष्टकं प्रोक्तं देवताप्रीतिकारकम्।

कुलार्णवे—मत्स्यं च त्रिविधं प्रोक्तमुत्तमाधममध्यमम्।
उत्तमं त्रिविधं देवि क्षालपाठानरोहिताः॥
प्रवीणं कण्टकैर्हीनं तैलकं स्वादुसंयुतम्।
देव्याः प्रीतिकरं चैव मध्यमं तदुदाहृतम्॥
क्षुद्राणि तानि सर्वाणि अधमान्याहुरुत्तमाः।

तथा—व्रीहेयं मण्डलाकारं चन्द्रबिम्बनिभं शुभम् ।
चारुपक्कं मनोहारि शर्कराद्यैः प्रपूरितम् ॥
पूजाकाले च देवीनां मुद्रैषा परिकीर्त्तिता ।

तन्त्रान्तरे तु—मुद्रा तु देवि संप्रोक्ता भर्जितं चणकादिकम् ।
भृष्टधान्यादिकं यावच्चर्वणीयं प्रकल्पयेत् ।
तस्य संज्ञा कृता मुद्रा महामोदप्रवर्धिनी ॥ इत्युक्तम् ।

मुण्डमालायाम्—साधवारतिसम्भूतं कुण्डमुत्तमभूतिदम् ।
विधवारतिसम्भूतं गोलं सिद्धिप्रदं भुवि ॥

कुलार्णवे—कुलद्रव्यैर्विना कुर्याज्जप-यज्ञ-तपो-व्रतम् ।
निष्फलं तद् भवेद् देवि भस्मनीव हुतं यथा ॥

## अथानुकल्पः

तत्रैव—मद्याभावे तु वटिकां जले संलोड्य तर्पयेत् ।
गुड़मिश्रेण तक्रेण तच्च वा मधुभाजनम् ॥
सौवीरेणाऽथवा कुर्यादेतत् कर्म न लोपयेत् ।

वटिकाप्रकारस्तु तत्रैवोक्तः—

मद्यं मांसं च विजयां चाष्टगन्धैः सुमिश्रिताम् ।
समर्च्य वटिकां कृत्वा परिगृह्णाद् विचक्षणः ॥

इति मधुभाजनं कुर्यादित्यनुषङ्गः । सौवीरं काञ्जिकम् ।

कुमारीतन्त्रे—नालिकेरोदकं कांस्ये ताम्रे वा विसृजेन् मधु ।
गव्यं च ताम्रपात्रस्थं सुरातुल्यं घृतं विना ॥

समयाचारे—तक्रं क्षीरं गुड़ं क्षौद्रं मध्वाज्यतिलशर्कराः ।
तैलं मज्जारनालं च द्रव्यं दशविधं स्मृतम् ।

द्वितीयानुकल्पस्तत्रैव—

मांसाभावे तु लसुनमार्द्रकं नागरं तु वा ।
आदाय पूजयेद् देवीमन्यथा निष्फलं भवेत् ॥

तथा—लवणार्द्रपियालं च गोधूमं माषपञ्चमम् ।
लसुनं च महादेवि मांसप्रतिनिधौ स्मृतम् ॥

पञ्चमानुकल्पो भावचूड़ामणौ—

यदि विप्रो भवेत् त्रस्तः कुलपूजापरायणः ।
तदानेन विधानेन कुर्यात् कुलसमुद्भवम् ॥

अपरापुष्पगर्भे तु कुलस्थानं मनोहरम् ।
हयारिकुसुमे देव स्वयमस्ति सदाशिवः ॥
तन्मध्ये लघुमाधाय पुष्पमध्ये तु चन्दनम् ।
रक्तं वा कुसुमं दत्त्वा ध्यात्वात्मानं शिवात्मकम् ॥
योजयेच्छिवशक्त्योस्तदैक्यं सम्भावयन् धिया ।
क्षणं विचिन्त्य तत्रैव संचिन्त्य परमेश्वरीम् ॥
जप्त्वा तदेव कुण्डाख्यं द्रव्यं परमदुर्लभम् ।

लघुमार्त्तवम् । रक्तं वा कुसुममित्यार्तवालाभे । पुष्पमध्ये करवीरपुष्पमध्ये । चन्दनं श्वेतचन्दनम् । भैरवीतन्त्रे—

स्वयम्भूकुसुमाभावे रक्तचन्दनकं क्षिपेत् ।

इदं सर्वं वीरमात्रपरमिति बोध्यम् ।

## अथ सादनम्

कुलचूडामणौ—नानाविधानि पुष्पाणि गन्धानि विविधानि च ।
कर्पूरजातिधूपादिवासितं पटवासितम् ।
ताम्बूलं देयद्रव्यं च धूपदीपादिकं च यत् ॥
सर्वालङ्कारभूषाभिर्भूषितः कौलिकेश्वरः ।
मूलमन्त्रजप्ततोयैः प्रोक्षितं स्थापयेत् ततः ॥
सर्वं स्वदक्षिणे स्थाप्यं वामे चार्घ्यं निवेशयेत् ।
पश्चिमे देवतायाश्च कुलद्रव्याणि धारयेत् ।

कालिकापुराणे—मदिरां पृष्ठतो दद्यादन्यत् पानं तु पृष्ठतः ।

तुकारोऽप्यर्थः । तथा—

प्रक्षालनाय करयोः पश्चात् पात्रं निधापयेत् ।
घृतादिज्वलितान् दीपान् स्थापयेत् परितः शुभान् ॥
ओड्रपुष्पैर्विशेषेण वज्रपुष्पेण मिश्रितम् ।
सर्वं पुष्पं प्रदद्याच्च भक्तियुक्तेन चेतसा ॥

पुष्पभेदा मत्स्यसूक्ते—

सुगन्धिश्वेतलौहित्य कुसुमैरर्चयेत् कुलैः ।
विल्वैर्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैः ॥

यामले—पुष्पैर्देवाः प्रसीदन्ति पुष्पे देवाश्च संस्थिताः ।
किञ्चातिबहुनोक्तेन पुष्पस्योक्तिर्मतल्लिका ॥

परं ज्योतिः पुष्पगतं पुष्पेणैव प्रसीदति ।
त्रिवर्गसाधनं पुष्पं पुष्टिश्रीस्वर्गमोक्षदम् ।
पुष्पमूले वसेद् ब्रह्मा पुष्पमध्ये तु केशवः ॥
पुष्पाग्रे च महादेवः सर्वे देवाः स्थिता दले ।
तस्मात् पुष्पैर्यजेद् देवान् नित्यं भक्तियुतो नरः ॥
पूजनीया सदा भक्त्या नृणां शीघ्रफलप्रदा ।

कुलैर्वज्रपुष्पाद्यैः । मुण्डमालायाम्—

पुष्पाण्यपि तथा दद्याद्रक्तकृष्णसितानि च ।
श्वेतपुष्पं जवापुष्पं करवीरं तथा प्रिये ॥
तगरं मालती जाती सेवन्ती यूथिका तथा ।
धुस्तूराशोकवकुल-श्वेतकृष्णापराजिताः ॥
वकपुष्पं विल्वपत्रं चम्पकं नागकेशरम् ।
मल्लिका झिण्टिका काञ्ची रक्तं यत् परिकीर्त्तितम् ॥
अर्कपुष्पं बर्वरं च बन्धूकं च प्रियंवदा ।
अष्टम्यां च विशेषेण तुष्टा भवति पार्वति ॥
पद्मपुष्पेण रक्तेन सन्तुष्टाः सर्वदेवताः ।
कृष्णैर्वा यदि वा शुक्लैः कालिका वरदा भवेत् ॥
श्मशानधुस्तूरेणैव तुष्टा धूमावती परा ।
वन्यपुष्पैश्च विविधैः सन्तुष्टा देवी पार्वती ॥
आमलक्यास्तु पुष्पेण तुष्टा पत्रेण पार्वती ।
अष्टम्यां च चतुर्दश्यां नानापुष्पैः समर्चयेत् ॥
श्मशाने रात्रिशेषे वा शनिभौमदिने निशि ।

मालतीविधिर्देवतान्तरे अत्र निषेधात् । तथाहि हरगौरीसम्वादे—

वर्जयेन् मालतीपुष्पं वर्जयेत् तुलसीदलम् । इति ।

त्रिशक्तिरत्ने—वज्रपुष्पेण संमिश्रैरर्चयेत् सिद्धिहेतवे ।
अभावाद् वज्रपुष्पस्य स्मरणात् सिद्धिमाप्नुयात् ॥
तुलसीमालतीवर्जं पुष्पं दद्यात् प्रसन्नधीः ।

कालिकापुराणे—

पुष्पं कोकनदं पद्मं जवा बन्धूकमेव च ।
सर्वेषां पुष्पजातीनां रक्तपुष्पं विशिष्यते ॥

क्रियासारे—देवीनामर्कमन्दारावादित्ये तगरं तथा ।
गणेशस्य च सूर्यस्य रक्तपुष्पमतिप्रियम् ॥
तथा—वकुलैर्नार्चयेद् देवीमपक्कं न निवेदयेत् ।
फलं ज्ञात्वा विशुद्धं च बालपक्कमपि त्यजेत् ॥
नाक्षतैरर्चयेद् विष्णुं न तुलस्या विनायकम् ।
न दूर्वयाऽर्चयेच्चण्डीं विल्वपत्रैर्विनायकम् ॥
उन्मत्तमर्कपुष्पं च विष्णौ वर्ज्यं सदा बुधैः ।
शिवे कुन्दं मदन्तीं च यूथीं बन्धूककेतके ॥
गौतमीये—न रक्तचन्दनं जातु गृह्णीयाद्रक्तपुष्पकम् ।
विल्वपत्रैस्तत्प्रसूनैर्नार्चयेद् देवकीसुतम् ॥
शुष्कैश्च नार्चयेद् विष्णुं पुष्पैः पत्रैः फलैरपि ।
स्नात्वानीतैः पर्युषितैर्याचितैः कृष्णवर्णकैः ॥
स्वयं विकाशितैः पुष्पैः स्वयं च पतितैर्भुवि ।
वर्जयेद् बृहतीपुष्पं निर्गन्धं च विशेषतः ।
त्रिपत्रन्यूनकुसुमैर्नार्चयेत् तु कदाचन ॥
कुसुमं पाटलिञ्चैव शिरीषं परिवर्जयेत् ।
भूगतं वर्जयेत् पुष्पं शेफालीं वकुलं विना ॥
वासोभिः संवृतैर्नीतं मतिमान् नार्पयेच्छिवे ।
कालिकाभिस्तथा त्याज्यो विना चम्पकपद्मके ॥
जवां रक्तां त्रिसन्ध्ये द्वे मालतीं केतकीं तथा ।
घुसृणं कुमुदं रक्तहयारिं च हरे त्यजेत् ॥
विल्वस्य खदिरस्यैव तथा धात्रीफलस्य च ।
तमालस्य च पद्मस्य छिन्नभिन्ने न दूष्यतः ॥
पुष्पमालायाम्—गुञ्जापराजितोन्मत्तं वराहक्रान्तया सह ।
आम्रातकमिदं पुष्पं निषिद्धं सूर्यपूजने ॥
निषिद्धं विहितं सूर्ये तगरं कण्टकारिका ।
मन्दारमर्कधुस्तूरं शाल्मलीकाञ्चनार्जुनम् ॥
निषिद्धं विष्णुपूजायां पुष्पं वैभीतकं तथा ।
निषिद्धं विहितं विष्णोः शिरीषं शुक्लपुण्ड्रकम् ॥
नरसिंहस्य पूजायां निषिद्धं केतकीद्वयम् ।

शिरीषबन्धूकविभीतकानां मदन्तिकाकेतकिपुण्ड्रकाणाम्।
करञ्जसर्जेन्द्रमहीरुहाणां कुन्दस्य पुष्पाणि शिवे प्रशस्तम्॥
अन्तर्जलक्षालितमाननस्थं स्वयं विशीर्णं भुवि संविलीनम्।
एतानि पुष्पाणि समस्तदेवपूजाविधावाहुरकर्मकाणि॥
दुर्गान्यदेवीपूजायां मन्दारार्कः सुशस्यते।

निषिद्धानि मत्स्यसूक्ते—

महालक्ष्म्यास्तु तुलसीं झिण्टिकां काञ्चनं तथा।

पुष्पाध्याये—कुन्देन नार्चयेत् सूर्यं न तुलस्या विनायकम्।
कमलैः कमलां नैव न शङ्खं शङ्खवारिणा॥
याचितं निष्फलं पुष्पं क्रयक्रीतं च निष्फलम्।
तुलस्यगस्त्यबिल्वानां नास्ति पर्युषितात्मता॥
वकस्यापि न षण्मासाद् यावत् पर्युषितात्मता।
वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम्॥
अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम्।

कालीतन्त्रे—नानोपहारबलिभिर्नानापुष्पैर्मनोहरैः।
अपामार्गदलैर्भृङ्गैस्तुलसीवर्जितैः शुभैः॥
पूजनीया सदा भक्त्या नृणां शीघ्रफलाप्तये।

तुलसीवर्जितैरिति दिव्यवीरपरम्। यत् तु कौलावलीये—

तुलसीवर्जिता पूजा न जातु फलदा भवेत्।

तत् तु पशुभावे। तत्रापि विशेषः—

भैरवी-सुन्दरी-काली-ब्रह्म-विघ्न(विष्णु)विवस्वताम्।
तुलसीवर्जिता पूजा सा पूजा सफला भवेत्॥

यामलेऽपि—तुलस्या गन्धमाघ्राय क्रुद्धा भवति सुन्दरी।

क्रियासारे—सर्वैः पुष्पैः सदा पूजा विहिताविहितैरपि।
कर्त्तव्या सर्वदेवानां भक्तियोगोऽत्र कारणम्॥
देवीपूजा सदा शस्ता जलजैः स्थलजैरपि।
विहितैर्वा निषिद्धैर्वा भक्तियुक्तेन चेतसा।

मालिनीतन्त्रे—पूजयेत् परमेशानि पुष्पाभावात् तु पत्रकैः।
पत्राणामप्यलाभे तु द्रुमगुल्मोद्भवादिभिः।
तद्भुवामप्यलाभे तु तत्फलेन प्रपूजयेत्।

अक्षतैर्वा जलैर्वापि तदभावे तु सर्षपैः ॥

सितैस्तेषामप्यलाभे मानसं पूजनं चरेत् ।

रुद्रयामले—स्वद्रव्यैः पूजयेद् विद्यां जवापावकसिन्दूरैः।

तथा—वेदनं रक्तसंज्ञं तु शोणितं समुदाहृतम् ।

औड्रपुष्पं महेशानि योनिपुष्पं निगद्यते ॥

वज्रपुष्पत्रैविध्यं मुण्डमालायाम्—

आषोड़शादनूढ़ाया उत्तमं सर्वसिद्धिदम् ।

बलात्कारेण ऊढ़ाया मध्यमं भोगवर्धनम् ॥

रजोयोगवशादन्यदधमं सुखदायकम् ।

स्वयम्भूकुसुमं देवि त्रिविधं भुवि जायते ॥

अनूढाया अनुपभुक्तायाः । ऊढाया उपभुक्तायाः ।

## अथ कलशस्थापनम्

भावचूड़ामणौ—स्ववामभागे षट्कोणं तन्मध्ये ब्रह्मरन्ध्रकम् ॥

लिखित्वा तत्र कुम्भं वै सौवर्णं राजतं तथा ।

ताम्रं भूमिमयं वापि महालौहविवर्जितम् ।

स्थापयेत् कलशाधारं कुम्भं सुगन्धवासितम् ॥

आधारश्च कुलार्णवे उक्तः—

आधारं त्रिविधं प्राहुः षट्पदं वा चतुष्पदम् ।

अथवा वर्त्तुलाकारं कुर्याद् देवि मनोहरम् ॥

तथा—आधारेण विना भ्रंशो न हि तुष्यन्ति देवताः ।

तस्माद् विधिवदाधारं कल्पयेत् कुलनायिके ॥

तन्त्रे—पञ्चाशदङ्गुलव्यास उत्सेधः षोड़शाङ्गुलः ।

कलशानां प्रमाणं तु मुखमष्टाङ्गुलं भवेत् ॥

तथा कलशमुपक्रम्य—

वेष्टितं रक्तवस्त्रेण रक्तमाल्येन भूषितम् ।

वामभागे महेशानि मण्डले चतुरस्रके ॥

तत्र संस्थापयेद् भद्रे देवीकुण्डे वरानने ।

मण्डले कलशे द्रव्ये वह्न्यर्कशशिमण्डले ॥

पूजयेदिति शेषः । चतुरस्र इति यथोक्तमण्डलोपलक्षकम् ।

तन्त्रे—योनिद्वयं समालिख्य तदन्तर्ब्रह्मरन्ध्रकम् ।

वृत्तेन वेष्टयित्वा तु चतुरस्रेण वेष्टयेत् ॥
अर्घ्योदकेन संप्रोक्ष्य तत्र संस्थाप्य यन्त्रिकम् ।
कलाभिर्दशभिर्व्याप्तं यजेत् तत्राग्निमण्डलम् ॥
क्षालितं हेतिमन्त्रेण रक्तमाल्यविभूषितम् ।
स्थापयेत् कलशं तत्र सौवर्णादिविभेदतः ॥
कलाद्वादशसंयुक्तं भानुबिम्बं यजेदिह ।
शुद्धेन हेतुना मन्त्री मूलमन्त्रेण पूरयेत् ॥
कलाषोड़शसंव्याप्तमिन्दुबिम्बं यजेदिह ।
रक्षयेदस्त्रमन्त्रेण तन्मन्त्रेणावगुण्ठयेत् ॥
वीक्षयेन्मूलमन्त्रेण तेनैवाभ्युक्ष्य साधकः ।
गन्धादिना समभ्यर्च्य भावयेद् देवतात्मकम् ॥
तारभागैस्त्रिभिर्मन्त्री बिम्बत्रितयमर्चयेत् ।

तारभागैरिति । अकार-उकार-मकारैरित्यर्थः । तदयं क्रमः—मं दशकलात्मने वह्निमण्डलाय नमः इत्याधारे । अं द्वादशकलात्मने सूर्यमण्डलाय नमः इति कलशे । उं षोड़शकलात्मने चन्द्रमण्डलाय नमः इति द्रव्ये पूजयेत् । अर्घ्यादौ तथा दर्शनात् ।

## द्रव्यशुद्धिः

अथ द्रव्यं शोधयेत् । कुलामृतदीपिकायाम्—

दृष्ट्वा प्रणम्य प्रथमं तद्रूपां वारुणीं कलाम् ।
तारेण कुसुमं दत्त्वा प्रोक्षयेदस्त्रवारिणा ॥
नाराचेनाऽक्षतान् दत्त्वा मूलास्त्रेणाऽभिरक्षयेत् ॥
मोचयित्वा शुक्रशापात् पवमानेन पावयेत् ।
शोषयेद् वायुमन्त्रेण वह्निना संदहेदनु ॥
ऊर्ध्वं संचिन्तयेन् मन्त्री भास्करं चार्कमण्डलम् ।
सौरमन्त्रेण देवेशि वारुणीं मनसा स्मरन् ॥
अर्कादमामयीं धारां पतन्तीं चिन्तयेदनु ।
सोमबीजं पठन् हान्तं सेन्दुखण्डं सुधामयम् ॥
जपन् संपूरयेत् पात्रं कृतया धेनुमुद्रया ।
अमृतां प्रजपेन्मन्त्री सप्तधा कूर्ममुद्रया ॥
अमृतं च ततो नीत्वा कर्पूराद्येन वासयेत्।

किञ्चिदुत्थाप्यान्यपात्रेण निःक्षिप्य ज्वलनं क्षिपेत् ॥
विद्यातत्त्वेन देवेशि दर्शयेद् योनिमुद्रिकाम् ।
सर्वभूतमयीं देवीं तत्र सञ्चिन्तयेदनु ।
तामात्मनैक्यं नीत्वा तु योजयेत् तां महात्मना ॥
सर्वभूतमयं पश्चादात्मानं परिचिन्तयेत् ।

तद्रूपां देवतास्वरूपाम् । सौरमन्त्रो हंस इति । अमामयीम् अमृतमयीम् । सोमबीजं स इति । हान्तं हकारान्तम् । अर्धचन्द्रयोगो हकारः एवं सोहमिति सिद्धम् । अमृता कूर्ममुद्रा च वक्ष्यते । ज्वलनं क्षिपेत् । अन्यपात्रस्थामृते । विद्यातत्त्वेनेति विद्यातत्त्वेन सूक्ष्मदेहं शोधयामि स्वाहेति मन्त्रेण । सर्वभूतमयीमिति पूर्ववत् कुण्डलिनीमुत्थाप्य शिवेन सह संयोज्यात्मानं सर्वभूतमयं ध्यायेदित्यर्थः । शुक्रशापमोचनमन्त्रा उक्ताः ।

कुमारीतन्त्रे—अन्यच्च शृणु देवेशि यथा कुलादिकर्मणि ।
हानिर्न जायते देवि तान् वै मन्त्रान् शृणु प्रिये ॥
एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥
सूर्यमण्डलसम्भूते वरुणालयसम्भवे ।
अमाबीजमये देवि शुक्रशापाद् विमुच्यताम् ॥
देवानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ।
तेन सत्येन देविशि ब्रह्महत्यां व्यपोहतु ॥
एवं मन्त्रजपेनैव अभिमन्त्र्य कुलं शुभम् ।
प्रदद्याच्चण्डिकायै वै नैवेद्यमुदरे हरेत् ॥

शापमोचनप्रकारान्तरं तारार्णवे—
प्रणवं पूर्वमुद्धृत्य चन्द्रबीजं वरानने ।
षड्दीर्घस्वरसंयुक्तं बिन्दुनादकलान्वितम् ॥
शुक्रशापविमोचिकायै सुरादेव्यै नमस्ततः ।
जपेद् द्वादशधा मन्त्रं शुक्रशापविमुक्तये ॥

वृत्तौ तु—वेदादिवरुणान्तं च षड्दीर्घस्वरभेदितम् ।
शुक्रशापविमोचितायै सुधादेव्यै नमोऽस्तु ते ॥
द्वादशधा जपेन्मन्त्रं शुक्रशापविमुक्तये ।

इत्युक्तम् । तदनयोः शुक्रशापविमोचनप्रकारयोर्विकल्पः । तुल्यार्थयोः

समर्थयोः समुच्चयासम्भवात्। ततः ॐ वां वीं वूं वैं वौं वः ब्रह्मशापविमोचितायै सुधादेव्यै नमः इत्यनेन वा दशवारजप्तेन ब्रह्मशापविमोचनं ह्रीं श्रीं क्रां क्रीं क्रूं क्रैं क्रौं क्रः सुरे कृष्णशापं मोचय अमृतं स्रावय स्रावय स्वाहा इत्यनेन द्वादशवारजप्तेन कृष्णशापविमोचनं कुर्यात्। तदुक्तम्—

वेदादिर्वारुणं बीजं षड्दीर्घस्वरभेदितम्।
ब्रह्मशापविमोचितायै सुधादेव्यै नमोऽस्तु च॥
दशकृत्वो जपेन् मन्त्रं ब्रह्मशापविमुक्तये।
मायाश्रियावङ्कुशं च षड्दीर्घस्वरभेदितम्॥
सुरे कृष्णस्वरूपान्ते शापं मोचय तत्परम्।
अमृतं स्रावयद्वन्द्वं वह्निजाया ततः परम्॥
अनेन मनुना मन्त्री कृष्णशापं विमोचयेत्।
पवमानः परानन्दः पवमानः परो रसः॥
पवमानं पवज्ञानं तेन ते पावयाम्यहम्।

इति पवमानमन्त्रं च लिलित्वा द्रव्यमध्ये भैरवभैरव्योर्ध्यानं कुर्यात्। तदुक्तं तारार्णवे—सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम्।
अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनम्॥
अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरिस्थितम्।
वृषारूढं नीलकण्ठं सर्वाभरणभूषितम्॥
कपालखट्वाङ्गधरं घण्टाडमरुवादिनम्।
पाशाङ्कुशंधरं देवं गदामुषलधारिणम्॥
खड्गखेटकपट्टीशमुद्गरं शूलदण्डकम्।
बिभ्रतं तोमरं मुण्डं वरदाभयपाणिनम्॥
लोहितं देवदेवेशं भावयेत् साधकोत्तमः।

एवं ध्यात्वा स्वमन्त्रेण पुष्पाञ्जलित्रयेण पूजयेत्। ततः आनन्दभैरवीं ध्यायेत्।
तत्रैव—भावयेच्च सुरां देवीं चन्द्रकोट्ययुतप्रभाम्।
हिमकुन्देन्दुधवलां पञ्चवक्त्रां त्रिलोचनाम्॥
अष्टादशभुजैर्युक्तां सर्वानन्दकरोद्यताम्।
प्रहसन्तीं विशालाक्षीं देवदेवस्य सम्मुखीम्॥
अथवा देवदेवेशमर्धनारीश्वरं यजेत्।

एवं ध्यात्वा स्वमन्त्रेण पूजयेत्।

मन्त्रौ चोक्तौ तन्त्रे—शिवचन्द्रौ मातृकान्तं तथा मलववह्नयः ।

वायुश्च वामकर्णेन पूरितो बिन्दुनादतः ॥

बीजमेतत् समुच्चार्य तथा चानन्दभैरवम् ।

ङेन्तं शिखामन्त्रयुतं पूर्वबीजं सुसंलिखेत् ॥

चन्द्रं हित्वादिमं कुर्यात् कर्णे वामाक्षि योजयेत् ।

सुरादेव्यै ततो वोषड़ियमानन्दभैरवी ॥

अनेन मनुयुग्मेन ध्यानपूर्वं यजेच्च तौ ।

शिवो हकारः । चन्द्रः सकारः । मातृकान्तं क्षकारः । मलवस्वरूपम् । वह्नी रेफः । वायुर्यकारः । वामकर्ण ऊकारः । एतौ युक्तौ कार्यौ । ङेन्तं चतुर्थ्यन्तम् । शिखामन्त्रो वषड़िति । भैरवीमन्त्रमाह—पूर्वबीजमित्यादि । प्रथमवर्णयोर्व्यत्ययः कार्यः । चरमाक्षरे ऊकारं त्यक्त्वा वामाक्षि ईकारो योज्यः । सोऽयमानन्दभैरवीमन्त्रो भवतीत्यर्थः ।

मायया चादिसंयुक्तं वह्निमायेन्दुसंयुतम् ।

परमस्वामिनि प्रान्ते परमाकाशशून्य च ॥

वाहिनि चन्द्रपदान्ते सूर्याग्निभक्षिणीति च ।

पात्रं विश विश स्वाहा दशधा प्रजपेन् मनुम् ॥

वाङ्मायाकमलाप्रान्ते आनन्देश्वरि विद्महे ।

सुधादेव्यै धीमहीति तन्नोऽर्धनारीश्वरीति ॥

प्रचोदयादिति जपेद् गायत्रीं दशधा सुधीः ।

स्वतन्त्रे—ततश्च भावयेद् द्रव्यममृते रक्तभं(?)प्रिये ।

अकथादित्रिपङ्क्त्या तु हलक्षत्रयमण्डितम् ॥

पूर्वोक्तयोनिमुद्रायां शिवशक्त्योस्तु संगमम् ।

अमृतं चिन्तयेद् द्रव्यमष्टधा चामृतां जपेत् ॥

इदं तु कारणं देवि सुरसंघनिषेवितम् ।

अत एवमस्य नाम सुधेति भुवनत्रये ॥

अस्य गन्धः केशवस्तु तेनागन्धेन कौलिकः ।

न पूजयेत् परां देवीं चण्डिकां कालिकां शिवाम् ।

अकथेत्यादित्रिकोणे षोड़शस्वरान् वामपंक्तौ ककारादिषोड़शवर्णानधःपंक्तौ थकारादिषोड़शवर्णान् दक्षिणपंक्तौ हलक्षान् मध्ये लिखित्वा पूर्वोक्तविधिना कुण्डलिनीमुत्थाप्य शिवे संयोज्य तद्गलितामृतधारां वहन्नासापुटेन द्रव्यमध्ये

पतितां ध्यात्वा द्रव्यममृतमयं ध्यायेदित्यर्थः। अमृतामन्त्रः कुलार्णवे उक्तः—

वाग्भवं पावनो भूमिः पुष्टिबिन्दुसमन्विता।
स्थितिश्च पावनानुग्रहार्धेन्दुसमलङ्कृताम्॥
स्थिराऽर्घीशेन्दुसंयुक्ता श्वेतो बिन्दुयुगान्वितः।
अथामृते पदं ब्रूयात् तत्पश्चादमृतोद्भवे॥
अथामृतेश्वरि प्रोक्त्वा पश्चादमृतवर्षिणि।
अमृतं श्रावययुगं द्विठान्तो द्रव्यशुद्धिकृत्॥
अमृताख्यो मनुः प्रोक्तः पञ्चत्रिंशद्भिरक्षरैः।

वाग्भवमैकारः। पावनो पकारः। भूमिर्लकारः। पुष्टिरूकारः। बिन्दुरनुस्वारः। तेन ऐं प्लूं इति सिद्धम्। स्थितिः सकारः। पावनो रेफः। अनुग्रह औकारः। अर्धेन्दुः अर्धचन्द्रानुस्वारः। तेन स्रौं इति सिद्धम्। स्थिरा जकारः। अर्घीशः ऊकारः। इन्दुरनुस्वारः। एवं जूमिति सिद्धम्। श्वेतः सकारः। बिन्दुयुगं विसर्गः। एवं सः इति सिद्धम्। द्विठः स्वाहा। सुगममन्यत्। अस्य चाष्टधा जपः लिखितवचनात्। कुलामृते कुण्डलिन्युत्थानात् पूर्वमयं जप उक्तः। तदत्र यथा सुसम्प्रदायमाचरणीयम्। तन्त्रे—

नीलं हयं समधिरुह्य पुरः प्रयान्ती लीलांशुकाभरणमाल्यविलेपनाढ्या।
निद्रापटेन भुवनानि तिरोदधाना खड्गान्विता भगवती परिपातु भक्तान्॥

एवं ध्यात्वा जपेद् विद्याद्वयं च साधकोत्तमः।
मायालक्ष्मीद्वयस्यान्ते नमो भगवतीति च॥
महेश्वरि स्वरूपान्ते सर्वपशुजनेति च।
मनश्चक्षुस्तिरस्कारणं कुरुद्वन्द्वं च ठद्वयम्॥
तथान्यतिरस्कारिणीं लज्जाकामेश्वरीं ततः।
वाणीं ग्लौंतिरस्कारिणं सकलजनेति च॥
वाग्वादिनीति सकलपशुव्रातजनेति च।
मनश्चक्षुश्रोत्रजिह्वाघ्राणोक्तितिरस्करणम्॥
कुरुद्वयं ठत्रयं च सविसर्गं शिरो मनुः।
तस्योपरि स्वमूलं च वरुणं सप्तधा जपेत्॥
इत्यनेन विधानेन द्रव्यशुद्धिं समाचरेत्।

भावचूडामणौ—प्रकारान्तरेण शोधनमुक्तम्। तथाहि—

घटं च हेतुद्रव्येण पूरयेदित्यनुवर्तौ(?)।

तत्र यन्त्रं विलिख्यादौ यद् यत् कुलसमुद्भवम् ।
ध्यात्वेष्टदेवतां तत्र जपेदष्टोत्तरं शतम् ।
धेनुयोनी विचिन्त्याऽथ प्रसृतं तद् विचिन्तयेत् ॥
दृष्ट्वाऽमृतमुपात्तं वै नृत्यन्ति योगिनीगणाः ।
नृत्यन्ति भैरवाः सर्वे नृत्यन्ति भैरवीगणाः ॥

यद् यत् कुलसमुद्भवमिति यद् देवताया यादृशं यन्त्रमित्यर्थः । धेनुयोनी मुद्रे च—

अन्योन्याभिमुखाश्लिष्टा कनिष्ठाऽनामिका पुनः ।
तथा च तर्जनी मध्या धेनुमुद्राऽमृतप्रदा ॥
मध्यमे कुटिले कार्ये तर्जन्युपरि संस्थिते ।
अनामिके मध्यगते तथैव हि कनिष्ठिके ॥
सर्वा एकत्र संयोज्या अङ्गुष्ठपरिपीडिताः ।
योनिमुद्रा समाख्याता त्रैलोक्योत्पत्तिमातृका ॥ इति तन्त्रोक्तेः ।

## अथ पात्रस्थापनम्

समयाचारे—सामान्यार्घ्यं ततः कृत्वा पयसा साधकोत्तमः ।
तज्जलैर्मण्डलं कृत्वा पात्राणि स्थापयेत् ततः ।

सामान्यार्घ्यं पूजोपकरणासादनात् प्रागेव स्थापयन्ति । तद्विधिश्च तत्रैव लिखितः । तन्त्रे—साध्यसाधकयोर्मध्ये षट्त्रिंशदङ्गुलं भवेत् ।
द्वादशाङ्गुलमूर्ध्वं च अधोभागे तथाङ्गुलम् ॥
द्वादशाङ्गुलमध्यस्थं तत्र संस्थापयेद् बुधः ।

तथाङ्गुलं द्वादशाङ्गुलम् । तथा—

द्वाथ च द्वादशं त्यक्त्वा देवार्थं द्वादशं त्यजेत् ।
द्वादशाङ्गुलमध्यस्थं तत्र चार्घ्यं निधापयेत् ॥

कुमारीकल्पे—ततोऽर्घ्यं स्थापयेन् मन्त्री स्ववामे सुरसुन्दरि ।
त्रिशक्तिरत्ने—कलशाद् दक्षिणे भागे त्रिकोणं वृत्तसंयुतम् ।
षट्कोणं चतुरस्रं च कृत्वा तन्मध्यभागतः ।
विलसच्चन्द्रशकलं गन्धर्वं च समालिखेत् ॥
ओजापूकादिकं पीठं तच्चतुर्दिक्षु पूजयेत् ।
अङ्गमन्त्रैश्च षट्कोणे शक्तौ मूलत्रिभेदतः ।
आधारशक्तिं सम्पूज्य पूर्ववद् यन्त्रिकामपि ॥
महाशङ्खं नालिकेरं सौवर्णं राजतं तथा ।

ताम्रं शुक्तयुद्भवं वापि पात्रं तत्र निधापयेत् ॥

विलसदिति। गन्धर्वमीकारः। ओजापूकादि ओड्यान-जालन्धर-पूर्णगिरि-कामरूपाणि तेषां च पूजनं स्वाग्रादिप्रादक्षिण्येन चतुरस्ररेखासु सम्प्रदायात्। अङ्गपूजने तन्मन्त्रेषु सर्वान्ते नमस्कार एव योज्यः न तु जात्यन्तरम्। "अङ्ग-मन्त्रैर्नमोऽन्तके"रित्यादेरावरणपूजायां तथा दर्शनात्। शक्तौ त्रिकोणे। मूल-त्रिभेदतः मूलखण्डत्रयेण पूजनम्। आधारशक्तिरीकारः। यन्त्रिका आकारः। तत्पूजनं च दशकलात्मकवह्निपूजनमेव। पात्रभेदः कुलार्णवेऽप्युक्तः—

स्वर्णरूप्यशिलाकूर्म-कपालालाबुमृण्मयम्।
नारिकेलं शङ्खमुक्तातामशुक्तिसमुद्भवम् ॥
पुण्यवृक्षसमुद्भूतं पात्रं संलोलितं शुभम्।

संलोलितं वर्त्तुलीकृतम्। महाहारवतन्त्रे—

विश्वामित्रकपालं तु सर्वपात्रोत्तमोत्तमम्।

तथा—ब्रह्महत्यादिपापानि विश्वासघातनं तथा।
दृष्ट्वा पात्रं नारिकेलं सर्वमेव प्रणश्यति ॥
कन्याकोटिप्रदानानि तथा होमशतानि च।
यो ददाति महेशानि राहुग्रस्ते दिवाकरे ॥
तत्फलं कोटिगुणितं नारिकेलार्घ्यपात्रतः।
अलाभे तस्य पात्रस्य अन्यपात्रेण पूजयेत् ॥

तथा—नरपात्रं महाभागे विज्ञेयं चोत्तमोत्तमम्।
नारिकेलाभिधं देवि ज्ञेयं चोत्तममध्यमम् ॥
रत्नपात्रं च सुश्रोणि ज्ञेयं चोत्तमकल्पकम्।

त्रिशक्तिरत्ने—पात्रमित्यनुवृत्तौ(?)—

समर्च्य पूर्ववन् मन्त्री शङ्खं द्रव्येण पूरयेत्।
जपन् विलोमतो वर्णान् मूलमन्त्रसमुज्ज्वलान् ॥
सम्पूज्य पूर्ववत् तत्र वृत्तं षट्कोणमालिखेत्।
अकथादित्रिरेखान्तं त्रिकोणं वृत्तमध्यतः ॥
मूलखण्डत्रयेणाऽथ त्रिकोणं परिपूजयेत्।
षट्कोणे च षडङ्गानि ततस्तीर्थमयं स्मरेत् ॥
आनन्दभैरवं ध्यात्वा समभ्यर्च्य विधानतः।
पूजयेत् पञ्चरत्नानि कुलद्रव्याणि निःक्षिपेत् ॥

रचयेत् पूर्ववच्छेषमयमर्घ्यविधिः स्मृतः ।

आनन्दभैरवमित्युपलक्षणम् आनन्दभैरव्यपि पूज्या युगलद्वयावाहित्वात् । पञ्चरत्नपूजनं चार्घ्यस्थद्रव्ये । ग्लूं गगनरत्नाय नमः स्लूं स्वर्गरत्नाय नमः प्लूं पाताल-रत्नाय नमः म्लूं मर्त्यरत्नाय नमः न्लूं नागररत्नाय नमः इति स्वाग्रादि-चतुर्दिक्षु मध्ये कुर्यात् । कुलद्रव्याणि कुण्डोद्भवादीनि । कुमारीकल्पे—

अर्घ्यद्रव्यं चार्घ्यपात्रे निःक्षिप्य यत्नतः सुधीः ।
कुण्डगोलोद्भवं द्रव्यं स्वयम्भूकुसुमं तथा ॥
नाधर्मो विद्यते सुभ्रु महामन्त्रस्य साधने ।

सारसंग्रहे—त्रिकोणं वृत्तसंवीतं चतुरस्रेण वेष्टितम् ।
गन्धलिप्तेषु वामाग्रे विदध्यान् मत्स्यमुद्रया ॥
संपूज्य गन्धैर्देवार्घ्यं देवायान्ते नमोऽणुना ।
अङ्गानि चतुरस्रस्य कोणेषु पुरतस्तथा ॥
दिक्षु चास्त्रं समभ्यर्च्य शङ्खाधारं प्रविन्यसेत् ।
मूलेन क्षालितं शङ्खाधारं संस्थापयामि च ॥
कालं सबिन्दुकं तद्वद् भुजङ्गेशं समुद्धरेत् ।
वह्न्यन्ते मण्डलायेति तथाऽधर्मप्रदेति च ॥
दशकलात्मने चोक्त्वा नमो गन्धादिभिर्यजेत् ।

त्रिकोणमित्यादि चक्रनिर्माणप्रकारान्तरम् । तत्रैव चतुरस्रकोणादिषु षडङ्गा-र्चनम् । तदत्र पक्षद्वये यथास्वगुरूपदेशमाचरणम् । मत्स्यमुद्रा च तन्त्रे उक्ता—

दक्षपाणिपृष्ठदेशे वामपाणितलं क्षिपेत् ।
अङ्गुष्ठौ चालयेन् मत्स्यमुद्रेयं मत्स्यरूपिणी ॥

कालं मकारम् । बिन्दुरनुस्वारः । भुजङ्गेशो रेफः । तद्वद् बिन्दुयुतम् । अत्र प्रत्येकं वह्निकला अपि पूज्या अन्यत्र तथा दर्शनात् । तथा—

अस्त्रेण क्षालितं शङ्खं तत्र संस्थाप्य पूजयेत् ।
अर्घमानं तु प्रादेशं चतुरङ्गुलमुच्छ्रितम् ॥
अर्घपात्रमिति प्रोक्तं स्थापयामीति मन्त्रतः ।
अमर्कमण्डलायेति वदेद् द्वादश इत्यथ ॥
कलात्मने पदं चोक्त्वा अर्घ्यपात्राय हृन्मनुः ।
अनेन शङ्खमभ्यर्च्य कलाः सूर्यस्य पूजयेत् ॥

तन्त्रान्तरे—क्रोधबीजास्त्रबीजाभ्यामाधारे क्षालितं शुभम् ।

महाशङ्खं तथा मन्त्री स्थापयेत् स्त्रीं पठन् ततः ॥
शिवां दीर्घत्रयोपेतां कालीब्रह्मारमान्विताम् ।
दीर्घः शचीपतिर्वायुर्हृदयं मन्मथान्तिमम् ॥
दीर्घत्रयसमोपेतं तारिणी पूर्ववत् पुनः ।
शिवं दीर्घत्रयोपेतं लीलाशब्दात् तु पूर्ववत् ॥
मायाशरान्तिमं शम्भुं वामकर्णेन्दुसंयुतम् ।
सर्वकामः कालरात्रिः दीर्घा लायपदात् ततः ॥
सर्वाधाराय सर्वाय सर्वोद्भवाय सर्वतः ।
सर्वशुद्धिमयायाऽथ सर्वासुरपदात् ततः ॥
रुधिरारुणकान्तिक्षुत् शुभ्राय सुरभाजन ।
आद्य देवीकपालाय हृदयान्तो मनुर्मतः ॥
एभिश्चतुर्भिर्मनुभिर्महाशङ्खं प्रपूजयेत् ।

क्रोधबीजास्त्रबीजाभ्यां हूं फडिति बीजाभ्याम् । स्त्रीमिति स्वरूपम् । शिवां ह्रींकारम् । दीर्घत्रयम् आ-ई-ऊ रूपम् । कालीति स्वरूपम् । ब्रह्मा ककारः । रमा पकारः । आयुता आकारयुक्ता । दीर्घ आकारयुक्तः । शचीपतिर्लकारः । वायुर्यकारः । हृदयं नमः । तेन ह्रां ह्रीं ह्रूं कालीकपालाय नमः इति प्रथमो मन्त्रः । मन्मथान्तिमं स्त्रींकारम् । दीर्घत्रयं आ-ई-ऊ-रूपम् । तारिणीति स्वरूपम् । पुनः पूर्ववत् कपालाय नमः इति । तेन स्त्रां स्त्रीं स्त्रूं तारिणीकपालाय नमः इति द्वितीयो मन्त्रः । शिवं हकारः । दीर्घत्रयोपेतं आ-ई-ऊ-युतम् । लीलाशब्दात् लीलेत्यक्षरद्वयानन्तरं पूर्ववत् कपालाय नमः इति । तेन ह्रां ह्रीं ह्रूं लीलाकपालाय नमः इति तृतीयो मन्त्रः । माया ह्रींकारम् । शरान्तिमं स इति बीजम् । शम्भुं हकारम् । वामकर्णेन्दुसंयुतम् ऊकारानुस्वारयुतम् । सर्वेति स्वरूपम् । कामं ककारः । कालरात्रिः पकारः । दीर्घा आकारयुक्ता । लायेति स्वरूपम् । कान्तिराकारः । क्षुत् यकारः । तेन ह्रीं सः हूं सर्वकपालाय सर्वाधाराय सर्वाय सर्वोद्भवाय सर्वशुद्धिमयाय सर्वासुररुधिरारुणाय शुभ्राय सुरभाजनाय देवीकपालाय नमः इति चतुर्थो मन्त्रः ।

तत्र सम्पूजयेन् मन्त्री मण्डलं तिग्मरोचिषः ।
मूलेन पूरयेन् मन्त्री सुधाबुद्धया विधानवित् ॥
गन्धपुष्पाक्षतान् क्षिप्त्वा त्रिखण्डां दर्शयेत् पुनः ।
पीयूषरोचिषो मन्त्री मण्डलं तत्र पूजयेत् ॥

तारं शक्तिरमेशक्तिमनुस्वारविभूषिताम् ।
मूलं तृतीयं भैरव्याः क्रोधबीजसमुज्ज्वलम् ॥
अनेन मनुना मन्त्री भावयेदष्टशो जलम् ।

शक्तिरेकारः ।

शक्त्या सुधां विनिक्षिप्य शङ्खयोनी प्रदर्शयेत् ।
वृत्ताष्टदलषट्कोणे मूलगर्भे मनोहरे ॥
वक्ष्यमाणप्रकारेण संविचिन्त्य कुलेश्वरीम् ।
उपचारैः प्रपूज्यैनां मूलमन्त्रेण मन्त्रवित् ॥
अङ्गुष्ठानामिकायोगात् तर्पयेत् तेन तारिणीम् ।
तर्जन्यङ्गुष्ठयोगेन मध्यमाङ्गुष्ठयोगतः ।
अनामाङ्गुष्ठयोगेन कनिष्ठाङ्गुष्ठयोगतः ॥
तर्पयेद् वेदवारं तां मूलमन्त्रेण देवताम् ।

तथान्यत्रापि—

ततः सुधामयैस्तोयै मूलान्तां मातृकां पठन् ।
विलोमां पूरयेत् तस्मिन् पूजको मनुनाऽमुना ॥
अर्घपात्रं पूरयामीत्युक्त्वा संपूरयेत् ततः ।
कर्णचन्द्रौ बिन्दुयुतौ कामप्रदपदात्ततः ॥
षोड़शान्ते कलाशब्दमात्मने नम इत्यथ ।
गन्धपुष्पैः समभ्यर्च्य कलाषोड़शकं यजेत् ॥

कर्ण उकारः । चन्द्रोऽर्धचन्द्रः । बिन्दुरनुस्वारः । तेन उँ । कलास्तूक्ताः—

कुलार्णवे—धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।
सुश्रीः स्वरूपा कपिला हव्यकव्यवहे अपि ॥
आग्नेया यादिवर्णोत्था दश धर्मप्रदाः कलाः ।
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ॥
सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ।
कभाद्या वसुदाः सौराः ठडान्ता द्वादशेरिताः ॥
अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रकान्तिश्च ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥
पूर्णा पूर्णामृता चेति कथिताः कुलनायिके ।
सौम्याः कामप्रदायिन्यः षोड़शस्वरजाः कलाः ॥

यादिवर्णोत्थेति। बिन्दुयुतान् यादिदशवर्णान् पूर्वं दत्त्वा अग्निकलाः। कादिठान्तान् भादिडान्तान् प्रतिलोमवर्णांश्च बिन्दुयुक्तानादौ दत्त्वा सूर्यकलाः। अकारादिषोड़शस्वरान्-बिन्दुयुतान् आदौ दत्त्वा चन्द्रकलाश्च पूज्या इत्यर्थः। तथा ( मेरुतन्त्रे )—प्राग्वत् तीर्थं समावाह्य तीर्थमन्त्रेण तत्र च।

संयोज्य नेत्रमन्त्रेण पुष्पं न्यस्य शिखाणुना॥
प्रदर्श्य गालिनीमुद्रां मुद्रया धेनुसंज्ञया।
अमृतीकृत्य विधिवत् सुधाबीजेन साधकः॥
ध्यात्वेष्टदेवतां तत्र सकलीकृत्य साधकः।
अङ्गन्यासेन चास्त्रेण कलयेच्च दिशो दश॥
नेत्रमन्त्रेण संवीक्ष्य मुद्रया शङ्खसंज्ञया।
अवगुण्ठ्य ततो दीप्य मुद्रया धेनुसंज्ञया॥
गन्धपुष्पादिभिस्तत्र पूजयेदिष्टदेवताम्।
षड़ङ्गानि च सम्पूज्य मन्त्रयेन् मूलमन्त्रतः॥
अष्टकृत्वस्ततश्चार्घं दापयेन् मत्स्यमुद्रया।
आभिचारिककार्येषु विलोमेन जपेदिति॥

इति कर्मोपदेशिन्यां मूलमन्त्रजपे विशेष उक्तः। तथा—

तच्छङ्खस्थं जलं किञ्चित् कुम्भतोये विनिःक्षिपेत्।

प्राग्वदङ्कुशमुद्रया। तीर्थमन्त्रेण "गङ्गे चे"त्यादिमन्त्रेण। संयोज्य तीर्थानि। गालिनीमुद्रा मन्त्रतन्त्रप्रकाशे उक्ता—

कनिष्ठाङ्गुष्ठकौ युक्तौ करयोरितरेतरम्।
तर्जनीमध्यमानामाः संहता भुग्नवर्जिताः॥
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता।

सुधाबीजं वमिति। सकलीकृत्याऽङ्गन्यासेनेत्यन्वयः। कलयेत् तालत्रयं दत्त्वा छोटिकाभिर्बन्धयेदित्यर्थः। शङ्खमुद्रा तन्त्रे उक्ता—

वाममुष्ट्यन्तरेऽङ्गुष्ठं निवेश्य सरलाङ्गुलीः।
दक्षिणस्य करस्यैव वामाङ्गुष्ठेन संस्पृशेत्॥
शङ्खमुद्रेयमाख्याता मन्त्रविद्भिरनुत्तमा।

त्रिशक्तिरत्ने—कलशोक्तविधानेन स्थापयेत् पात्रसन्ततिम्।

स्थापनक्रमश्चोक्तस्तन्त्रे—

श्रीपात्रघटयोर्मध्ये सर्वपात्राणि स्थापयेत्।

गुरुपात्रं घटस्यान्ते तदन्ते भोगपात्रकम् ॥
तदन्ते शक्तिपात्रं च योगिनीनां तदन्तिके ।
तदन्ते वीरपात्रं च बलिपात्रं तदन्तिके ॥
पाद्यं चाचमनीयं च पात्राणि स्थापयेत् क्रमात् ।
उत्तमं नव पात्राणि सप्त पात्राणि मध्यमम् ।
अधमं त्रीणि पात्राणि एकपात्रं न कारयेत् ॥

मेरुतन्त्रे—एकैकपात्रं मूलेण ह्यष्टकृत्वोऽभिमन्त्रयेत् ।
प्रदर्शयेद्द धेनुमुद्रां ॥

अन्तशब्दः सन्निधिवाचकः । पाद्यं चाचमनीयं चेत्युपलक्षणम् । अर्घ-स्नानीय-मधुपर्क-पुनराचमनीयपात्राण्यत्रैव स्थापनीयानि । तावदशक्तौ त्रिशक्तिरत्ने—

अथवा कलशं शङ्खं शक्तिपात्रत्रयं भवेत् ।

अत्रादिकल्पे पाद्यादिपात्राणि स्थापनीयानि पूजोपयुक्तत्वात् । नवरत्नेश्वरे—

पात्रद्वयमभावाद्वा कुर्यान् न्यूनं न चाचरेत् ।
एकपात्रं न कर्त्तव्यं यदि साक्षान् महेश्वरः ॥
मन्त्राः पराङ्मुखा यान्ति आपदश्च पदे पदे ।
इह लोके च दारिद्र्यं मृते च पशुतां व्रजेत् ॥
जलेनैव च पाद्यादिपात्राणि पूरयेदिति ॥

साम्प्रदायिकाः । अयं क्रमो वीरकल्पे । पशुकल्पे तु—

स्वदक्षे प्रोक्षणीपात्रमाधायाऽद्भिः प्रपूरयेत् ।
किञ्चिदर्घ्याम्बु संगृह्य प्रोक्षण्यम्भसि योजयेत् ॥
ततः साधारकं पात्रं पुरतः स्थापयेद्द बुधः ।
तत्पार्श्वे पाद्यदानं च तत्पार्श्वेऽर्घप्रदानकम् ॥
आचमनीयं तत्पार्श्वे तद्वामे मधुपर्ककम् ।
पुनराचमनीयं च स्नानीयं तत्क्रमान् न्यसेत् ॥

इति क्रमः । पाद्यादिद्रव्याण्युक्तानि फेत्कारिण्याम्—

उशीरं रोचनं चैव पाद्यपात्रे तु कल्पयेत् ।
कुशाग्रानक्षतं चैव तिलव्रीहियवानपि ॥
आज्यसिद्धार्थपुष्पाणि क्षिपेदर्घ्यस्य पात्रके ।
जातीकर्पूरकक्कोल-बहुमूलतमालकान् ॥
चूर्णयित्वा यथान्यायं क्षिपेदाचमनीयके ।

माक्षिकं शर्करा सर्पिर्दधिक्षीरयुतं तथा ॥
मधुपर्कं कल्पयित्वा प्रदद्याद् दधिपूर्वकम् ।

स्नानीयं शुद्धसुगन्धिजलेन । "गन्धाद्भिः कारयेत् स्नानमि"ति पुरश्चरणचन्द्रिकावचनात् । पुनराचमनीयमाचमनीयवदेव । त्रिशक्तिरत्ने—

पुष्पादिना समुद्धृत्य बिन्दुं शङ्खामृतस्य च ।
निक्षिपेत् सर्वपात्रेषु सर्वं दिव्यं विचिन्तयेत् ॥

## अथ तर्पणम्

तन्त्रे—एवं पात्राणि संस्थाप्य तेनैव तर्पणं चरेत् ।

अत्र गुरुतर्पणादपि प्राग् भैरवभैरव्योर्वामहस्तेन तत्त्वमुद्रया तर्पयन्ति । तत्प्रकारस्तत्त्वार्णवे उक्तः पूर्वोक्तध्यानमुक्त्वा—

ध्यात्वैवं तर्पयेन् मूर्ध्नि तावुभौ साधकः सुधीः ।

तावुभौ भैरव्यौ । ताभ्यां पूर्वोक्तमन्त्राभ्यामन्ते स्वनाम संयोज्य तौ तर्पयेदिति पर्यवसितम् ।

त्रिशक्तिरत्ने—ब्रह्मरन्ध्रे स्वके मन्त्री मुद्रया तत्त्वसंज्ञया ।
तर्पयेद् गुरुपात्रीय-द्रव्येणौघत्रयं सुधीः ॥
स्वगुरूनपि सन्तर्प्य त्रिः सकृद् वा विशेषतः ।
आत्मनो हृदयाम्भोजे परिवारगणावृताम् ॥
देवीपात्रामृतेनापि तर्पयेत् कुलनायिकाम् ।

तत्त्वमुद्रा तर्पणेऽनामाङ्गुष्ठयोगेन भवति । तथाहि ज्ञानार्णवे—

तर्पणानि पुनर्दद्यात् त्रिवारं तत्त्वमुद्रया ।
अङ्गुष्ठानामिकाभ्यां तु तत्त्वमुद्रेयमीरिता ॥ इति ।

या तु—तर्जन्यङ्गुष्ठयोगेन तत्त्वमुद्रा प्रकीर्त्तिता । इति ।

तत्रोक्ता, सा तर्पणादन्यत्र ध्यानादौ । ओघत्रयं च ताराया भावचूडामणावुक्तम्—

अथ तारागुरून् वक्ष्ये दृष्टादृष्टफलप्रदान् ।
ऊर्ध्वकेशो व्योमकेशो नीलकण्ठो वृषध्वजः ॥
दिव्योघाः सिद्धिदा वत्स सिद्धौघान् शृणु तत्त्वतः ।
वशिष्ठः कूर्मनाथश्च मीननाथो महेश्वरः ॥
हरिनाथो मानवौघानथ वक्ष्यामि सद्गुरून् ।
तारावती भानुमती जया विद्या महोद(हेश्व)री ॥
सुखानन्दः परानन्दः पारिजातः कुलेश्वरः ।

विरूपाक्षः कैरवी च कथितं तारिणीकुलम् ॥
आनन्दनाथशब्दान्ता गुरवः सर्वसिद्धिदाः ।
स्त्रियोऽपि गुरुरूपाश्च देव्यन्ताः परिकीर्त्तिताः ॥

स्वगुरून् परमगुरून् परापरगुरून् परमेष्ठिगुरुन् ।

कुलचूडामणौ—अज्ञाने गुरुनाम्नां वै गुरुत्रितयमर्चयेत् ।
चतुष्टयं वा संकोचो न कर्त्तव्यस्ततः परम् ॥

भावनिर्णये—आदौ सर्वत्र देवेशि मन्त्रदः परमो गुरुः ।
परापरगुरुस्त्वं हि परमेष्ठिरहं * यतः ॥

परापरस्त्वद्रूपत्वेन परमेष्ठी गुरुर्मद्रूपत्वेन ध्यात्वा तर्पणीय इति भावः ।

चतुष्टयमाह—गुरुः परमगुरुश्चैव परापरगुरुस्तथा ।
परमेष्ठी गुरुश्चैव कथिता गुरवस्तत्र ॥

गुरूणां लौकिकं नाम श्रीपूर्वकमुच्चार्य शेषे गुरु-परमगुर्वादिपदं योजयित्वा अमुकपादुकां तर्पयामीत्येवं तर्पयेदिति साम्प्रदायिकाः । देवीपात्रं विशेषार्घपात्रमेव । तद्द्रव्येण साङ्गां सपरिवारां सायुधां सवाहनां श्रीअमुकदेवीं तर्पयामीत्येवं तर्पयेदित्यर्थः । आवाहनात् प्राग् भोगपात्रामृतेन वा तर्पयन्ति ।

समयाचारे—शुद्धं द्रव्यं समादाय तर्पणं तत्त्वमुद्रया ।
अङ्गुष्ठतर्जनीमध्ये शुद्धिं संगृह्य वामतः ॥
वामेन दक्षिणेनाऽपि देवीं सन्तर्पयेत् सुधीः ।

वामेन दक्षिणेनाऽपीत्यभिधानाद् देवीतर्पणे करयोरैच्छिको विकल्प इति केचित् । अन्ये तु वामेन शुद्धिं संगृह्य दक्षिणहस्ततत्त्वमुद्रया देवीं तर्पयेत् । अङ्गुष्ठतर्जनीमध्य इति । शुद्धिग्रहणमात्रा त्वियम् । तर्पणे तत्त्वमुद्रायाः प्रकारान्तरेणोक्तत्वादित्याहुः ।

## अथ तत्त्वशुद्धिः

अथ तत्त्वशुद्धिं कुर्यात् । तत्र श्रुतिः—ॐ प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा । ॐ पृथिव्यप्तेजोवाय्वाकाशानि मे शुद्ध्यन्तां ज्योतिरित्यादि । ॐ प्रकृत्य-हङ्कार-बुद्धि-मनः-श्रोत्राणि मे शुध्यन्तामित्यादि । ॐ त्वक्-चक्षुर्जिह्वा-घ्राण-वचांसि मे शुध्यन्तामित्यादि । ॐ पाणि-पाद-पायूपस्थ-शब्दा मे शुध्यन्तामित्यादि । ॐ स्पर्शरूपरसगन्धाकाशानि मे

* तान्त्रिकप्रयोगोऽयम् । बहुषु ग्रन्थेषु तथैव दर्शनात् ।

शुध्यन्तामित्यादि। ॐ वायुतेजःसलिलभूम्यात्मानो मे शुध्यन्तामित्यादि सप्त-मन्त्रान् परामृशन् हस्ताभ्यां सप्तधा सर्वाङ्गे स्पृशेदिति तत्त्वशुद्धिः।

## अथ बलिदानम्

अथ वटुकादिबलिं दद्यात्। तथाहि कुलार्णवे—

यावन्नो वटुके दद्यात् तावन्नैव कुलेश्वरि।
तृप्यन्ति देवताः सर्वाः स्मरणाद् यजनादपि॥
वटुकादीन् यजेत् तस्माद् गन्धपुष्पासवामिषैः।
तत्तन्मन्त्रविधानेन देवताप्रीतिमाप्नुयात्॥
यत्किञ्चिद्‌द्रव्यसंघातं पूजार्थं भोगहेतुना।
आनीतं दीयतां भक्त्या क्षेत्रेशे(त्रपे)भ्यः कुलेश्वरि॥

वटुक इत्युपलक्षणम्। वटुकादिष्वित्यर्थः। ज्ञानार्णवे—

ईशानवह्निनैर्ऋत्य-वायुकोणेषु पूर्ववत्।
मण्डलानि विधायाऽथ पूर्ववत् पूजयेत् प्रिये॥
पूर्ववद् बलिदानं च दद्यात् सर्वसमृद्धये।
वटुकाय महेशानि योगिनीभ्यश्च वल्लभे॥
गणेश-क्षेत्रपालाभ्यां पूर्ववद् बलिमुत्सृजेत्।

समयाचारे तु—

दक्षिणे वटुके दद्यादुत्तरे योगिनीबलिम्।
पूर्वे भूतबलिं दद्यात् क्षेत्रपालाय पश्चिमे॥

तथा—अङ्गुष्ठानामिकाभ्यान्तु वटुकाय बलिर्मतः।
कनिष्ठाङ्गुष्ठयोगेन योगिनीबलिमाहरेत्॥
अङ्गुष्ठतर्जनीभ्यां तु क्षेत्रपालबलिं हरेत्।
अङ्गुलीभिश्च सर्वाभिरुक्तो भूतबलिः प्रिये॥

ज्ञानार्णवे—तथा मुष्टेस्तु मध्यस्थामङ्गुलीं दण्डवत् कुरु।
गजदन्तमहामुद्रा गणपस्य बलौ भवेत्॥

मन्त्रास्तु ज्ञानार्णव एव—

एह्येहि देवीपुत्रान्ते वटुकान्ते च नाथ च।
कपिलान्ते जटाभार-भास्वरान्ते त्रिनेत्र च॥
ज्वालामुखं च सर्वान्ते विघ्नान् नाशय नाशय।

सर्वोपचारसहितं बलिं गृह्ण द्विधा पदम् ॥
वह्निजायान्वितो मन्त्रो वटुकस्य समीरितः ।
अनेन मनुना देवि वटुकस्य बलिं हरेत् ॥
ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वाऽनले वा सलिलपवनयोर्यत्र तत्र स्थिता वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदा पुष्पधूपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु देवेन्द्रतुल्याः ॥
एतदन्ते महेशानि यां बीजं योगिनी ततः ।
भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥
कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत् ।
अनेन मनुना देवि योगिनीबलिमाहरेत् ॥
तथा—षड्दीर्घस्वरसंभिन्नं क्षकारं पुनरालिखेत् ।

क्षकारे बिन्दुराचारात् ।

पुनः क्षेत्रपदं पालधूपदीपादि चालिखेत् ।
सहितं बलिमालिख्य गृह्ण गृह्ण ततो वदेत् ॥
वह्निजायान्वितो मन्त्रः क्षेत्रपालस्य सुन्दरि ॥
अनेन मनुना देवि क्षेत्रपालबलिं हरेत् ।
गां गीं गूं त्रयमालिख्य ङेन्तं गणपतिं वदेत् ॥
वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत् ।
मे वशं चानयेत्युक्त्वा बलिं गृह्ण द्विधा पदम् ॥
वह्निजायान्वितो मन्त्रो गणपस्य बलिं हरेत् ।
ज्ञानार्णवे—वामभागे कृतस्याथ मण्डलस्योपरि क्षिपेत् ।
आधारं पूजयेत् तत्र पात्रं चान्नोदकान्वितम् ॥
सकारणं मन्त्रयित्वा सर्वभूतबलिं हरेत् ।
षोडशार्णेन मनुना त्रिवारं वीरवन्दिते ॥
तारं च भुवनेशानि सर्वविघ्नपदं ततः ।
कृद्भ्यश्च सर्वभूतेभ्यो हुंकारं वह्निवल्लभाम् ॥
समुच्चरन् बलिं दद्यान् मुद्रया तत्त्वसंज्ञया ।

इदं च सम्प्रदायानुरोधेनोक्तम् । वस्तुतः पुरश्चरणप्रकरणे वक्ष्यमाणवीरचूडामण्युक्तमन्त्रैरेव वटुकादिबलिदानं युक्तम् । तस्यैवात्रासाधारणत्वात् ।

## अथावाहनम्

तदुक्तं कुमारीकल्पे—ततो हृदयपद्मान्तः-स्फुरन्तीं विद्युदाकृतिम् ।
सुषुम्णा वर्त्मना नीत्वा शिरःस्थाने महेश्वरि ॥
वामया नासया देवि वायुबीजेन मन्त्रवित् ।
देवेशीत्यादिमन्त्रेण चक्रादावाहयेत् सुधीः ॥
ध्यात्वा कामकलामादौ ध्यायेद् देवीमतः परम् ।

देवेशीति मन्त्रस्तु—देवेशि भक्तिसुलभे परिवार-समन्विते ।
यावत् त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥

इति । चक्रात् शिरस्थपद्मात् । स्वतन्त्रतन्त्रे—
ततः कामकलाध्यानादावाह्य कालिकां ततः ।
कूर्माख्यमुद्रया पुष्पं चक्रमध्ये निधापयेत् ॥

कूर्ममुद्रा तन्त्रे उक्ता—
वामहस्तस्य तर्जन्यां दक्षस्य च कनिष्ठिका ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ॥
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ॥
वामस्य पितृतीर्थेन मध्यमानामिका तथा ।
अधोमुखे ततः कुर्याद् दक्षिणस्य च हस्ततः ॥
कूर्मपृष्ठसमं कुर्याद् दक्षिणस्य च मण्डलम् ।
एवंविधः सर्वसिद्धिं ददाति करकच्छपः ॥

कामकलाध्यानं तन्त्रचूडामणौ—
मुखं बिन्दुवदाकारं तदधः कुचयुग्मकम् ।
तदधः सपरार्धं च सपरिष्कृतमण्डलम् ॥
एतत् कामकलाध्यानं सुगोप्यं साधकोत्तमैः ।

एतद्रहस्यं स्वगुरुमुखादवगन्तव्यम् ।

## अथ ध्यानम्

गन्धर्वतन्त्रे—श्मशानं तत्र संचिन्त्य तत्र कल्पद्रुमं स्मरेत् ।
तन्मूले मणिपीठं च नानामणिविभूषितम् ॥
शिवाभिर्बहुमांसास्थि-मोदमानाभिरन्ततः ।

चतुर्दिक्षु शवा मुण्डाश्रिताङ्गारास्थिभूषिताः ॥
तन्मध्ये भावयेद् देवीं यथोक्तध्यानयोगतः ।
नीलतन्त्रे—प्रत्यालीढपदां घोरां मुण्डमालाविभूषिताम् ।
खर्वां लम्बोदरीं भीमां व्याघ्रचर्मावृतां कटौ ॥
नवयौवनसम्पन्नां पञ्चमुद्राविभूषिताम् ।
चतुर्भुजां ललज्जिह्वां महाभीमां वरप्रदाम् ॥
खड्गकर्त्रीधरां सव्ये वामे मुण्डोत्पलान्विताम् ।
पिङ्गोग्रैकजटां ध्यायेन् मौलावक्षोभ्यभूषिताम् ॥
बालार्कमण्डलाकार-लोचनत्रयभूषिताम् ।
प्रज्वलत्पितृभूमध्यगतां द्रंष्ट्राकरालिनीम् ।
सावेशस्मेरवदना-मस्थ्यलङ्कारभूषिताम् ।
विश्वव्यापकतोयान्तः-श्वेतपद्मोपरिस्थिताम् ॥
मन्त्रचूडामणौ—तस्योपरि गृहे देवीं खर्वां नीलमणिप्रभाम् ।
लम्बोदरीं व्याघ्रचर्म-समावृतनितम्बिनीम् ॥
पीनोन्नतपयोभारां रक्तवर्त्तुललोचनाम् ।
ललज्जिह्वां महाभीमां द्रंष्ट्राकोटिसमुज्ज्वलाम् ॥
नीलोत्पलललसन्मालां बद्धजूटां भयङ्करीम् ।
श्वेतास्थिपट्टिकायुक्त-कपालपञ्चशोभिताम् ॥
ललाटे रक्तनागेन कृतकर्णावतंसकाम् ।
अतिशुभ्रमहानाग-कृतहारमहोज्ज्वलाम् ॥
दूर्वादलश्यामनाग-कृतयज्ञोपवीतिनीम् ।
चतुर्भुजां रक्तमांस-खण्डखण्डितमुष्टिना ॥
जटाजूटाक्षसूत्रेण शोभितां तीक्ष्णधारया ।
खड्गेन दक्षिणस्योर्ध्वे शोभितां वीरनादिनीम् ॥
तदधःस्थाद् बीजवृन्त-कर्त्रिकालङ्कृतां पराम् ।
वामोर्ध्वे रक्तनालेन दिगम्बरमनोहराम् ॥
दधतीं नीलपद्मं च तदधःस्थात् कपालकम् ।
जगतां जाड्यसंयुक्तं दधतीं कुन्दसन्निभम् ॥
धूम्राभनागसंदोह-कृतकेयूरसत्वराम् ।
सुवर्णवर्णनागेन कङ्कणोज्ज्वलपाणिकाम् ॥

शुभ्रवर्णमहादेव-कृतसद्वविमलासनाम् ।
निर्यन्त्रणभिया तद्वत् संकुचत्प्रपदात्मिकाम् ॥
शवपादद्वयारूढ-वामपादां महोन्मुखीम् ।
कुन्दाभनागसंशोभि-कटिसूत्रां त्रिलोचनाम् ॥
असृग्रक्तेन नागेन कृतनूपुरपल्लवाम् ।
सद्यश्छिन्नगलद्रक्त-मुण्डै रक्तविभूषणैः ॥
अन्योन्यकेशग्रथितैः पादपद्मविलम्बितैः ।
पञ्चाशद्भिर्महामाला-शोभितां परमेश्वरीम् ॥
ज्वलच्चितामध्यसंस्थां द्वीपिचर्मोत्तरांशुकाम् ।
अक्षोभ्यनागसम्बद्ध-जटाजूटां वरप्रदाम् ॥
एवम्भूतां महादेवी-मात्मानं यागवस्तु च ।
विज्ञापयेन् महादेव पण्डितोऽहं महाकविः ॥

तारोपनिषदि—विरुद्धवाक्यार्थशरीरमण्डले नवाम्बुदाभां गुरुमुन्नतोदरीम् ।
अतीव खर्वां नवयौवनस्था-मधःस्थशार्दूलककृत्तिमूर्धजाम् ॥
अनैक्यमाहत्य शवोपरिस्थितां शवार्धमालीढपरीतमध्यमाम् ।
विशीर्णवर्णां नृशिरःस्रजोद्भवां त्रयीविवर्त्तारुणलोचनत्रयाम् ॥
अभेदपिङ्गैकजटाविराजितां विभूषणाच्छिन्नसितास्थिभीषणाम् ।
महाष्टसिद्धिप्रकराहिभूषणा-मट्टाट्टहासैर्जगतामभीतिदाम् ॥
जटास्वनन्तः श्रवसोश्च तक्षको महाहिपद्मो हृदि हारभूषणाम् ।
तथैव कर्कोटकृतोपवीतिकां सुमेखलायामथ देववासुकिः ॥
सशङ्खपालः किल कङ्कणो मतः पदेषु पद्मः किल नूपुरश्रियम् ।
भुजेषु नागः कुलिकोऽङ्गदो मतो भुजोऽर्धमालामहता स्थितिः स्थिता ॥
सितश्च रक्तो धवलश्च मेचकस्तथैव नागोऽथ सितश्च पाण्डरः ।
भुजङ्गमानामिह वर्णजातयो भवन्ति सर्वे मुनिभिर्ज्वलम्बिताम् ॥
कपालकर्त्रीग्रथितोग्रमूर्धजां सनालमिन्दीवरकान्तिमालिकाम् ।
विकोशखड्गं सततं च दक्षिणे स्वपौरुषोत्थैर्दधतीं भुजैः सदा ॥
पदार्थदंष्ट्राद्वयपञ्चमुद्रया विराजमानामसितोत्पलस्रजम् ।
विचिन्तयेत् तां च कवित्वकारिणीं मनोगतार्थं प्रजपेच्च तारिणीम् ॥

फेत्कारिणीतन्त्रेऽपि—प्रत्यालीढपदार्पिताङ्घ्रिशवहृद्घोराट्टहासा वरा
खड्गेन्दीवरकर्त्रीखर्परभुजा हूंकारबीजोद्भवा ।

खर्वा नीलविशालपिङ्गलजटाजूटोग्रनागैर्वृता
जाड्यं न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा स्वयम् ॥

प्रत्यालीढलक्षणं तु सङ्गीतरत्नाकरे—

वामो यत्र निषण्णोरुरन्तरे पूर्वमानतः ।
दक्षिणं चरणं चाग्रे पञ्चतालप्रसारितम् ॥
अङ्घ्री द्वावपि तद्विन्द्यादालीढं तु सदैवतम् ।
आलीढाङ्घ्रिविपर्यासात् प्रत्यालीढमुदाहृतम् ॥

तालः वितस्तिः । "तालमात्रं वितस्तिका" इति तत्रैवोक्तेः । अङ्घ्री पादौ । "मौलावक्षोभ्यभूषितामि"त्यत्र अक्षोभ्यो नागः । "अक्षोभ्यो देवीमूर्धन्यस्त्रिमूर्त्तिर्नागरूपधृक्" इति भावचूडामणिवचनात् । ब्रह्मसंहितायाम्—

अथ ध्यानं प्रवक्ष्यामि तारिण्याः सर्वसिद्धिदम् ।
ज्वलत्पावकजालज्वालातिभास्वच्चितामध्यसंस्थां सुपुष्टां सुखर्वाम् ।
शवं दक्षपादेन कण्ठे निपीड्य स्थितां वामकेनाङ्घ्रिणाङ्घ्रिं निपीड्य ॥
बृहल्लम्बमानोदरीं मेघवर्णां समुत्तुङ्गपीनस्तनाभोगरम्याम् ।
जवारागरागप्रवृत्तां त्रिनेत्रां ललज्जिह्वया दंष्ट्रया भीषणास्याम् ॥
लसद्द्वीपिचर्मावृताङ्गीं स्मितास्यां जटाजूटमध्यस्थितेन्दीवराङ्गीम् ।
शिरोदेशभास्वत्पिशङ्गाभिसर्पज्जटाजूटमध्यस्थिताक्षोभ्यमूर्त्तिम् ॥
मिथःकेशबद्धाचिरछिन्नसम्यग्गलल्लोहितां मानवीं मुण्डमालाम् ।
दधानां च पञ्चाशदाख्यानसंख्यायुतच्छिन्नमुण्डावलीं निर्मलाङ्गीम् ॥
महासृक्समांसोत्कराधार्यसव्यस्फुरत्पाणिना धारयन्तीं महासिम् ।
भुजे वाम ईषत्स्फुरद्रक्तनाल-स्फुरन्नीलपङ्केरुहं धारयन्तीम् ॥
करे सव्य उच्चैरधस्ताद् दधानां शितां कर्त्तृकां वामपाणौ कपालम् ।
जगद्वर्त्तिसंसारजाड्यातिपूर्णं स्फुरत्कर्त्तृकाधारया खण्डयन्तीम् ॥
विचित्रास्थिमालं करालं कपालं ललाटे च पञ्चान्वितं धारयन्तीम् ।
घनाभाहिबद्धं जटाजूटमुच्चैर्जवारागनागोल्लसत्कुण्डलां च ॥
स्फुरद्धूमरोचिर्महाकायनाग-स्फुरच्चारुकेयूरशोभाभिरामाम् ।
सुवर्णाभनागोल्लसत्कङ्कणेन स्फुरन्तीं लसच्छ्वेतनागाभिरामाम् ॥
शरीरेण दूर्वादलश्यामनागैः कृतं चारुयज्ञोपवीतं दधानाम् ।
दधानां च कुन्दाभनागेन सम्यक् कृतं चारुकाटेयसूत्रं पवित्रम् ॥
महापाटलाभेन नागेन वृत्तां विभूषां च पादद्वये संदधानाम् ।

चिरं चिन्तयामीदृशं चारुरूपाममेयामदोषामपारां ससाराम् ॥
सुरश्रेणिमौलिप्रभारञ्जिताङ्घ्रिं नताशेषदोषापहामिष्टदात्रीम् ।
यदीयप्रसादादिदं विश्वजातं जनः प्राप्नुयान् मोदते सम्यगेव ॥
सदेवं स्तवं यः पठेदेकचित्तो वशस्तस्य लोको भवेत् तन्न नूनम् ।
न दारिद्र्यपापे न वा दुर्मतिः स्याल्लभेतापि मोक्षं तथा धर्मकामौ ॥

## अथ प्राणप्रतिष्ठा

तन्त्रे—आवाहनं स्थापनं च सन्निधापनमेव च ।
सन्निरोधनमित्युक्तं सम्मुखीकरणं तथा ॥
विधाय स्वस्वमुद्राभिः प्राणस्थापनमाचरेत् ।

आसां लक्षणमुक्तं लक्षणसंग्रहे—

हस्ताभ्यामञ्जलिं बद्ध्वाऽनामिकामूलपर्वणि ।
अङ्गुष्ठौ निःक्षिपेत् सेयं मुद्रा त्वावाहनी मता ॥
अधोमुखी त्वियं वै स्यात् स्थापनीति निगद्यते ।
उच्छ्रिताङ्गुष्ठमुष्ट्योस्तु संयोगात् सन्निधापनी ॥
अन्तःप्रवेशिताऽङ्गुष्ठा सैव संरोधिनी मता ।
उत्तानमुष्टियुगला संमुखीकरणं भवेत् ॥
सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ॥
देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिः ।

अमृतीकरणं धेनुमुद्रया । सा प्रोक्ता ।

अन्योन्यग्रथिताऽङ्गुष्ठा प्रसारितपराङ्गुलिः ।
महामुद्रेयमुदिता परमीकरणे प्रिये ॥
प्रयोजयेदिमा मुद्रा देवताह्वानकर्मणि ।

अत्राद्यपञ्चमुद्रासु इहागच्छ इह तिष्ठ इह सन्निधेहि इह सन्निरुध्यस्व इह सम्मुखीभवेति क्रमाद् वदन्ति ।

उड्डीशे—अत एवाभिपूर्णाया देवतायाः प्रपूजने ।
सादरं सम्मुखीभावमावाहनमिहोच्यते ॥

अत एव आवाहनमुद्राप्रदर्शनादेव । तथा—

विभोर्निवेशनं यन्त्रे स्थापनं कथितं बुधैः ।
पूजां प्रयुज्यमानां तु गृहीत्वाऽनुग्रहादिकम् ॥

कर्त्तुं सामर्थ्यमस्यास्तु तत् सान्निध्यं प्रचक्षते ।
आकर्मकाण्डपर्यन्तं सान्निध्यं हि विभोश्च यत् ॥
स सन्निरोध उद्दिष्टो भक्तितो मन्त्रविन् नरैः ।
आनन्दायतनं तत्त्वं सच्चिदानन्दलक्षणम् ॥
तदत्र सकलं व्याप्तं ध्येयं स्यादवगुण्ठने ।
सकलीकरणं कृत्वा मन्त्रैरेभिरथैकताम् ॥
अङ्गानामङ्गिना सार्धं विदध्यादमृतीकृतिम् ।
क्षमा तस्यापराधानां विज्ञेया परमीकृतिः ॥

अपराधानाम् अपरिच्छिन्नस्य ब्रह्मण आवाहनादिमुद्रया परिच्छिन्नताभावन-रूपापराधानाम् । मुद्रान्तराणि भैरवतन्त्रे—"पञ्चमुद्राविभूषितामि"त्यभिधाय—

योनिश्च भूतिनी चैव बीजाख्या दैत्यधूमिनी ।
लेलिहानेति संगुप्ताः पञ्चमुद्राः प्रकीर्त्तिताः ॥

आसां बीजानि तत्रैव—

योनिर्मायाऽधरा धेनुर्वधूः कूर्चं क्रमाद् विदुः ।
बीजान्यासां लक्षणं तु क्रमेण कथयाम्यहम् ॥

योनि ऐं । माया ह्रीं । अधरा एतदनन्तरीभूता । धेनुः वं । वधूः स्त्रीं । कूर्चं हूं । तथा—तर्जन्यनामिके मध्ये कनिष्ठे च क्रमादपि ।

करयोर्योजयेच्चैव कनिष्ठामूलदेशतः ॥
अङ्गुष्ठाग्रं तु निक्षिप्य महायोनिः प्रकीर्त्तिता ।
अधोमुखीमिमां मुद्रां दर्शयेद् बीजपूर्विकाम् ॥
अस्यां तु देवि तर्जन्यौ निपात्य पृष्ठतस्ततः ।
संस्थाप्याऽङ्गुष्ठके मुद्रा भूतिनी परिकीर्त्तिता ॥

तन्त्रान्तरेऽपि—बद्ध्वा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ।

अङ्गुष्ठे च तदग्रे तु मुद्रेयं भूतिनी मता ॥

भैरवतन्त्रे—परिवर्त्य करौ स्पृष्टावङ्गुष्ठतर्जनीयुगम् ।

अर्धचन्द्राकृतिन्यायं युगपत् कारयेत् समम् ॥
अधः कनिष्ठामाकृष्य मध्यमे विनियोजयेत् ।
मुद्रैषा कथिता देवि बीजाख्या ज्ञानरूपिणी ॥
परिवर्त्य करौ कृत्वा कनिष्ठाकृष्टमध्यमाम् ।
अनामयोर्युगं चाधस्तर्जनीयुगलं पृथक् ॥

अन्योन्यं निबिडं बद्ध्वा अङ्गुष्ठाग्रेऽनामिके।
दैत्यानां धूमकेत्वाख्या मुद्रैषा कथिता प्रिये ॥
स्ववक्त्रं विस्फारितं कृत्वाप्यधो जिह्वां च चालयेत्।
पार्श्वस्थमुष्टियुगलं लेलिहानेति कीर्त्तिता ॥

ततः पूर्वोक्तप्राणप्रतिष्ठामन्त्रेण लेलिहामुद्रया प्राणप्रतिष्ठां कुर्यात्। लेलिहा-मुद्रा यथा—तर्जनीमध्यमानामां समीं कुर्यादधोमुखीम्।
अनामायां क्षिपेद् वृद्धामृजुं कृत्वा कनिष्ठिकाम् ॥
लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्त्तिता।

## देवशुद्धिः

अथ देवशुद्धिं कुर्यात्। तदुक्तं कुलार्णवे—
पीठे देवं प्रतिष्ठाप्य सकलीकृत्य साधकः।
मूलमन्त्रेण दीपिन्या मालिन्याऽर्घोदकेन च ॥
त्रिवारं प्रोक्षयेद् विद्वान् देवशुद्धिरियं प्रिये।

प्रतिष्ठा सकलीकरणं चोक्तमेव। प्रोक्षणं चात्र मूलेनैव युक्तिसिद्धम्। दीपिनी-मालिन्योः पराप्रासादमन्त्रघटितत्वेन ऊर्ध्वाम्नाय एव नियोग इति। कुलार्णवे—
सकलीकृत्य तत्प्राणान् समुद्दीप्येन्द्रियाणि च।
प्रतिष्ठाप्याऽर्चयेद् देवमन्यथा निष्फलं भवेत् ॥

त्रिशक्तिरत्ने—पूर्ववत् तर्पयेद् देवीं देवीयात्रामृतेन हि।
फेत्कारिण्याम्—आवाह्य स्थापयित्वा तु ध्यात्वा वै पूजयेत् ततः।
सारसंग्रहे—मुद्राः प्रदर्श्य विधिवदुपचारैः प्रपूजयेत् ॥
मुद्रा आवाहन्यादिकाः। उपचाराश्चोक्ता मन्त्रमुक्तावल्याम्—
पाद्यार्घ्याचमनीयानि स्नानं वसनभूषणे।
गन्धपुष्पधूपदीपनैवेद्याचमनानि च ॥
ताम्बूलमर्चना स्तोत्रं तर्पणं च नमस्क्रिया।
प्रयोजयेदर्चनायामुपचारांस्तु षोड़श ॥
पाद्यमर्घं निवेद्याथ तथैवाचमनीयकम्।
मधुपर्काचमनं चैव गन्धप्रसूनके ततः ॥
धूपदीपौ च नैवेद्यं दशोपचारकं मतम्।
गन्धादयो नैवेद्यान्ता पूजा पञ्चोपचारिका ॥

प्रपञ्चसारे—सपर्या त्रिविधा प्रोक्ता तासामेकतमं श्रयेत्।

त्रिविधा षोडश-दश-पञ्चोपचारभेदात् ॥

कुलोड्डीशे—उपचारेषु सर्वेषु यत्किञ्चिद् दुर्लभं भवेत् ।
तत् सर्वं मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत् ॥
तत्र तत्र जलं दद्यादुपचारान्तरान्तरा ।

## उपचारविधिः

अथोपचाराणां विधिर्लिख्यते । सारसंग्रहे—

देवस्य वामभागे तु दद्यान् मूलेन चासनम् ।
पौष्पं दारुमयं वास्त्रं चार्म कौशं च तैजसम् ।
षड्विधं चासनं प्रोक्तं देवताप्रीतिकारकम् ।

पौष्पं सुगन्धिपुष्परचितम् । दारुमयं कण्टकिभिन्नं चन्दनादिघटितम् । वास्त्रं कार्पास-कौशेय-कम्बलादि । कौशं सप्तविंशतिकुलपत्राणां विष्टरः ।

तदुक्तं डामरे—सप्तविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता ।
विष्टरः सर्वयज्ञेषु लक्षणं परिकीर्त्तितम् ॥ इति ।

तैजसं सुवर्णादिरचितं लोहसीसादिवर्जम् । चार्मं मृगव्याघ्रद्याद्यजिनम् । स्वागतं तु स्वागतमुद्रां प्रदर्श्य श्रीअमुकदेवि स्वागतमित्युच्चार्य कर्त्तव्यम् ।

कालीकल्पे—पाद्यं तु पादयोर्दद्यान् नमोमन्त्रेण मन्त्रवित् ।

शारदायाम्—एतच्छ्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् ।

कालीकल्पे—स्वाहामन्त्रेण देवेशि अर्घ्यं दद्याच्छिरोपरि ॥

शारदायाम्—गन्धपुष्पाक्षतयव-कुशाग्रतिलसर्षपैः ।
सदूर्वैः सर्वदेवानामेतदर्घ्यमुदाहृतम् ॥

कालीकल्पे—आचमनं मधुपर्कं च स्वधामन्त्रेण वै मुखे ।

शारदायाम्—स्वधामन्त्रेण वदने दद्यादाचमनीयकम् ।
जातीलवङ्गकक्कोलैस्तद्युक्तं मन्त्रवेदिभिः ॥

स्वधामन्त्रेण वमिति बीजेन । तदुक्तं स्वतन्त्रे—

मधुपर्कं मुखे दद्याज् जलमन्त्रेण देशिकः ।

तथा—स्वधाणुना ततः कुर्यान् मधुपर्कं मुखाम्बुजे ।
आज्यं दधिमधून्मिश्रमयमुक्तो मनीषिभिः ॥

कुलोड्डीशे—माक्षिकं शर्करा सर्पिर्दधि क्षीरयुतं तथा ।
मधुपर्कं कल्पयित्वा प्रदद्याद् विधिपूर्वकम् ॥

सर्वतः क्षौद्रमधिकं दधिसर्पिःसिताः समम् ।
क्षीरं तु सर्वतः स्वल्पं मधुपर्क उदाहृतः ॥

शारदायाम्—तेनैव मनुना कुर्यादद्भिराचमनीयकम् ।

पुनराचमनीयकम्—कालीकल्पे—

स्नानं गन्धं हृदा दद्यात् पुष्पाणि वौषडित्यपि ।
ततो निवेदयामीति सर्वं दद्यात् महेश्वरि ॥

यामले च—वारुणेन च बीजेन मधुपर्कं मुखाम्बुजे ।
तेनैव मनुना कुर्यादद्भिराचमनीयकम् ॥
गन्धाद्भिः कारयेत् स्नानं वाससी परिधापयेत् ।
दद्याद् दिव्योपवीतं च हाराद्याभरणानि च ॥
गन्धश्चन्दनकर्पूर-कालागुरुभिरीरितः ।

वसनं च दुकूलं देयम् । "दत्त्वा सूक्ष्मे दुकूलके" इति पुरश्चरणचन्द्रिकावचनात् । तत्रापि शक्ते रक्तवस्त्रं प्रशस्तम् । "रक्तं शक्त्यर्कविघ्नानामि"ति यामलवचनात् ।

मन्त्रतन्त्रप्रकाशे—तैलादिदूषिताद् रोगः सच्छिद्राद् वाध्यता भवेत् ।
जीर्णाद् दरिद्रता कर्त्तुर्मलिनात् कान्तिहीनता ॥

सारसंग्रहे—यज्ञोपवीतं दत्त्वाऽथ भूषणानि समर्पयेत् ।
ङेन्तं नमोऽन्तं तन्नाम पूजनादौ प्रयोजयेत् ॥
तानि नानाविधानि स्युर्मुकुटादिप्रभेदतः ।
स्त्रीपुंप्रभेदतस्तानि ज्ञेयानि तु विचक्षणैः ॥

यज्ञोपवीतं पुंदेवते देयमित्यर्थः । गन्धाः पुरश्चरणचन्द्रिकायामुक्ताः—

चन्दनं मलयोत्पन्नमनाघ्रातं सुशीतलम् ।
कर्पूरागुरुकस्तूरी-हिमाम्बुक्षोदितं शुभम् ॥

क्षोदितं घृष्टम् । कुङ्कुमरक्तचन्दने अपि प्रशस्ते तन्त्रान्तरात् । तारार्णवे—

रोचनाकपिकाश्मीर-मांसी-तगरुचन्दनैः ।
सचोरैरष्टगन्धोऽयं तारायाः प्रीतिदायकः ॥

कपिर्बाला । गोठिमन इति कश्चित् । चोरः शठी । तगरुर्गन्धविशेषः । अत्र विहितपुष्पाण्यासादनप्रकरणे प्रोक्तानि । पुष्पविधिः पुरश्चरणचन्द्रिकायाम्—

अनन्यार्पितमच्छिद्रं पूतं पुण्यं नवं शुभम् ।
गुणवन्वनसंयुक्तं नानागन्धमनोहरम् ॥

ज्ञानार्णवे—पुष्पैः पर्युषितैर्देवि नार्चयेत् स्वर्णजैरपि ।

निर्माल्यभूतैरुच्छिष्टैः कुसुमैः परमेश्वरि ॥

उच्छिष्टैरन्यदेवतापूजावशिष्टैः। ज्ञानमालायाम्—

पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम्।
दुःखदं तत् समाख्यातं यथोत्पन्नं तथार्पणम् ॥

तथा—अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधौ न तत्।

अञ्जलिदाने अधोमुखता न दोषायेत्यर्थः। तन्त्रे—

अङ्गुष्ठतर्जनीभ्यां च चक्रे पुष्पं निवेदयेत्।

धूपविधिः पुरश्चरणचन्द्रिकायाम्—

इत्थं धूपं प्रकुर्वीत ताम्रकांस्यादिनिर्मिते।
भाजने द्विपदे भुग्ननाले पद्मावतौ शुभे ॥
साराङ्गारविनिक्षिप्तैर्गुग्गुल्वगुरुवृक्षजैः।
निर्यासाद्युत्थितैर्धूमैर्गन्धद्रव्यैर्यथोदितैः ॥

निर्यासः सर्जरसादिः। प्रपञ्चसारे--तन्त्रलीलावत्याम्—

जटामांसीगुग्गुलं च चन्दनागुरुकैस्तथा।
चन्द्रैरजनिसंयुक्तैर्माक्षिकैः सह कुङ्कुमैः ॥
सर्पिःसंमिश्रितैर्दद्याद् देव्यै धूपं महेश्वरि।
सगुग्गुल्वगुरुशीर-सिताज्यमधुचन्दनैः ॥
साराङ्गारविनिक्षिप्तैर्धूपं नीचैः प्रधूपयेत्।

कुलोड्डीशे—गुग्गुलुं सरलं दारु पत्रं मलयसम्भवम्।
ह्रीबेरमगुरुं कुष्ठं गुडं सर्जरसं घनम् ॥
हरीतकीं नखीं लाक्षां जटामांसीं च शैलजम्।
षोडशाङ्गं विदुर्धूपं दैवे पैत्रे च कर्मणि ॥
अथवाऽगुरुकर्पूरचन्दनैः सह गुग्गुलम्।
मधुसर्पिर्जटामांसी शैलजं कुङ्कुमं तथा ॥
एभिर्विमिश्रितः कार्यो धूपोऽयं पार्वतीप्रियः।

तन्त्रे—मधु मुस्तं घृतं गन्धो गुग्गुल्वगुरुशैलजम्।
सरलं शिह्लसिद्धार्थं दशाङ्गो धूप इष्यते ॥
सिताज्यमधुसंमिश्रं गुग्गुल्वगुरुचन्दनम्।
षडङ्गधूपमेतत् तु सर्वदेवप्रियं सदा ॥

शैवागमे—धूपभाजनमस्त्रेण प्रोक्ष्याऽभ्यर्च्य हृदाणुना।

अस्त्रेण पूजितां घण्टां वादयन् गुग्गुलुं दहेत् ॥

गुग्गुलुपदं विहितधूपद्रव्यमात्रोपलक्षकम् । तन्त्रे—

अस्त्रेण धूपदीपादीन् संपूज्य दापयेत् ततः ।
यथा गन्धं तथा देवि धूपं दद्याद् विचक्षणः ॥

तथेति । मध्यमाङ्गुष्ठाभ्यामित्यर्थः । दीपविधिः कुलोड्डीशे—

घृतप्रदीपः प्रथमस्तिलतैलसमुद्भवः ।
सार्षपः फलनिर्यासजातो वा वारिजोद्भवः ॥
दधिजश्चान्नजश्चैव दीपाः सप्त प्रकीर्त्तिताः ।
पद्मसूत्रभवा वर्त्ति-र्दर्भसूत्रभवाऽथवा ॥
जालजा वादरी वापि तूलकोषोद्भवाऽथवा ।
वर्त्तिका दीपकृत्येषु सदा पञ्चविधा स्मृता ॥
तैजसं राजसं लौहं मार्त्तिक्यं नारिकेलजम् ।
तृणराजोद्भवं वापि दीपपात्रं प्रशस्यते ॥
एवं दीपं प्रकुर्वीत नेत्ररञ्जनकारणम् ।
दीपं तु यागपर्यन्तमधोमुखं प्रकल्पयेत् ॥

कालिकापुराणे—लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात् ।
न स दीप इहाख्यात ह्योघवह्निस्तु स स्मृतः ॥

तथा—शणं वा दारकं वस्त्रं जीर्णं मलिनमेव वा ।
उपभुक्तं न दद्यात् तु वर्त्तिकार्थं कदाचन ॥
नैव निर्वापयेद् दीपं देवार्थमुपकल्पितम् ।
दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत् ॥

पुरश्चरणचन्द्रिकायाम्—वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ।
आरोप्य दर्शयेद् दीपानुच्चैः सौरभशालिनः ॥

तथा—दीपश्च धूपवत्पात्रे पद्माकारविनिर्मिते ।
प्रतिपत्रं प्रदीप्तं च वर्त्या गव्यघृताक्तया ॥

अत्र गव्यघृत-तैलादीनां विकल्पो न तु समुच्चयः ।

न मिश्रीकृत्य दद्यात् तु स्नेहद्रव्यान् घृतादीकान् ।
दत्त्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत् ॥

इति कालिकापुराणोक्तेः ।

तूर्णयागे—पारावतभ्रमाकारं दीपं नेत्रादि दर्शयेत् ।

दक्षिणे सर्पिषा दीपं तिलतैलेन वामतः ॥
सितावर्त्तिर्दक्षिणतो रक्तावर्त्तिस्तु वामतः ।

कालिकापुराणे—वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन ।
सर्वसहा वसुमती सहते न त्विदं द्वयम् ॥
अकार्ये पादघातं च दीपतापं तथैव च ।
कुर्वंस्तु पृथिवीतापं यो दीपमुत्सृजेन् नरः ॥
स तापपापं नरकं प्राप्नोत्येव न संशयः ।

तन्त्रे—अङ्गुष्ठाग्रेण देवेशि धृत्वा दीपं निवेदयेत् ।
उत्तोलनं तथा कुर्याद् गायत्र्या मूलयोगतः ॥

अत्राऽञ्जनमप्युक्तं तन्त्रे—सौवीरं जाम्बलं तुत्थं मयूरश्रीकरं तथा ।
दर्विका मेघनीलश्च अञ्जनानि भवन्ति षट् ॥
स्वरूपन्तु सौवीरं जाम्बलं प्रस्तरं तथा ।
मयूरश्रीकरं रत्नं मेघनीलं तु तैजसम् ॥
घृष्ट्वा निगाह्य चैतानि शिलायां तैजसेऽथवा ।
प्रदद्यात् सर्वदेवेभ्यो देवीभ्यश्चापि पुत्रक ॥
घृततैलादियोगेन ताम्रादौ दीपवह्निना ।
यदञ्जनं जायते तु दर्विका परिकीर्त्तिता ॥
विधवा नाञ्जनं कुर्यान् महामायार्थमुत्तमम् ।
न मृत्पात्रे योजयेत् तु साधको नेत्ररञ्जनम् ॥

नैवेद्यमुक्तं स्वतन्त्रे—
कन्दुपक्वं स्नेहपक्वं घृतसंयुक्तपायसम् ।
मनःप्रियं च नैवेद्यं दद्याद् देव्यै पुनः पुनः ॥

मत्स्यसूक्ते—पायसं कृशरं दद्याच्छर्करागुड़संयुतम् ।
आज्यं दधिमधून्मिश्रं तस्मात् तानि प्रदापयेत् ॥
शालमत्स्यं च पाठीनं गोधिकामांसमुत्तमम् ।
अन्नं च मधुना युक्तं यत्नाद् दद्याच्च मन्त्रवित् ॥

शालमत्स्यो महाशाल इति प्रसिद्धः । मुण्डमालायाम्—
शालमत्स्यं च पाठीनं शकुलं गड़कं तथा ।
मद्गुरं चेल्लिशं दद्यान् मांसं माहिषमेव च ॥
पक्षिमांसं वरारोहे डिम्बं नानासमुद्भवम् ।

कृष्णछागं महामांसं गोधिकां हरिणीं तथा ।
जलजे मत्स्यमांसे च गण्डकीमांसमेव च ।
नानाव्यञ्जनदुग्धानि व्यञ्जनानि बहूनि च ॥

कुमारीतन्त्रे—अन्यानि च नैवेद्यानि साधकानां शृणुष्व मे ।
ताम्बूलं च सकर्पूरं नालिकेरं सशर्करम् ॥
पायसं सघृतं चैव आर्द्रकं सगुडं तथा ।
सतण्डुलं तिलं चैव दधि चैव सशर्करम् ॥
जम्बीरं पनसं चैव फलमाम्रातकं तथा ।
कदलीं तिन्तिड़ीं चैव श्रीफलं फलमुत्तमम् ॥
करञ्जं वकुलं चैव तालं खर्जूरमेव च ।
अन्यानि च सुगन्धीनि स्वादूनि च फलानि च ॥

रुद्रयामले—तैजसेषु च पात्रेषु सौवर्णे राजते तथा ।
ताम्रे वा प्रस्तरे वापि पद्मपत्रेऽथवा पुनः ॥
यज्ञदारुमये वापि नैवेद्यं कल्पयेद् बुधः ।
सर्वाभावे तु माहेशि स्वहस्तघटितं यदि ॥
यद् योग्यमर्घ्यपात्रे तु तन्निधाय निवेदयेत् ।

सारसंग्रहे—निधाय स्वर्णजे पात्रे साधारं तच्च मण्डले ।
निधाय चतुरस्रे च संस्कुर्याच्छास्त्रमार्गतः ॥
अस्त्रमन्त्रेण संप्रोक्ष्य चक्रमुद्राभिरक्षितम् ।
वायुबीजेन संशोध्य वह्निबीजेन तद् दहेत् ॥
स्पृशन् दक्षकराग्रेण सुधाबीजेन मन्त्रयेत् ।
अमृतीकृत्य तत्सर्वं मूलमन्त्रेण तत्पुनः ॥
स्पृशन् कराभ्यां विधिवदष्टधा चाभिमन्त्रयेत् ।
धेनुमुद्रां प्रदर्श्याऽथ गन्धपुष्पैः समर्चयेत् ॥

तन्त्रे—तत्त्वाख्यमुद्रया देवि नैवेद्यं विनिवेदयेत् ।
मूलेन दत्त्वा ताम्बूलं साधकस्तेन मुद्रया ॥

तेन मूलमन्त्रेण । मुद्रया तत्त्वमुद्रया । यामले—
सर्वोपकरणादीनि मूलान्ते च निवेदयेत् ।
अशक्तौ मनसा दद्यादेतत्कर्म न लोपयेत् ॥
चुल्लुकं विधिवद् दद्यात् पञ्चमुद्रां प्रदर्शयेत् ।

पुनश्च चुल्लुकं दद्याद् दत्त्वा ताम्बूलमुत्तमम् ॥
एला-लवङ्ग-कर्पूर-जातीफलादिसंयुतम् ।
तमालदलकर्पूर-पूगभागैस्तरङ्गितम् ॥

मालिनीतन्त्रे—नमः सर्वोपचारेषु प्रथमान्तेषु योजयेत् ।

नीलतन्त्रे—सर्वं मन्त्रमयं कृत्वा देवतायै निवेदयेत् ।

फेत्कारिण्यामपि—आवाह्य स्थापयित्वा तु ध्यात्वा वै स्थापयेत् ततः ।
श्रीमदेकजटे वज्रपुष्पं प्रतीच्छ चोच्चरेत् ।
मूलेनाग्निप्रियान्तेन सतारेण च साधकः ॥

तारं ॐकारः। तस्य चान्वय आदावेव सम्प्रदायसिद्धः। अयं च मन्त्रः सर्वासामपि तारादिदेवतानां पूजायामविकृत एव पठनीयः। सर्वा एव उपक्रम्य कथनात्। अनेन मन्त्रेण विशेषार्घजलेनोत्सृज्य सर्वेऽप्युपचारा यथाशास्त्रं प्रतिपादनीयाः। तदुक्तं स्वतन्त्रे—

अन्यतोयैर्यदुत्सृष्टमर्घपात्रस्थितेतरैः ।
न गृह्णाति महादेवी दत्तं विधिशतैरपि ॥

यामले—निवेदयेत् पुरोभागे गन्धपुष्पं च भूषणम् ।
दीपान् दक्षिणतो दद्यात् पुरतो वा न वामतः ॥
वामतस्तु तथा धूपमग्रतो वा न दक्षिणे ।
नैवेद्यं दक्षिणे वामे पुरतो न तु पृष्ठतः ॥

योगिनीतन्त्रे—गन्धपुष्पं तथा धूपो दीपो नैवेद्यमेव च ।
यस्य यद् दीयते वस्त्रमलङ्कारादिकाञ्चनम् ॥
तेषां दैवतमुच्चार्य कृत्वा प्रोक्षणपूजने ।
उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना निवेदयेत् ॥

गौतमीये—अमृतोपस्तरणमसि स्वाहेति जलमर्पयेत् ।

दीपिकायाम्—ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभाम् ।
प्रदर्शयन् दक्षिणेन प्राणादीनां च दर्शयेत् ॥
स्पृशेत् कनिष्ठोपकनिष्ठिके द्वे स्वाङ्गुष्ठमूर्ध्ना प्रथमेह मुद्रा ।
तथा परा तर्जनीमध्यमे स्यादनामिकामध्यमिके च मध्या ॥
अनामिकातर्जनीमध्यमाश्च तद्वच्चतुर्थी सकनिष्ठिकास्ताः ।
स्यात् पञ्चमी तद्वदिति प्रदिष्टाः प्राणादिमुद्रा निजमन्त्रयुक्ताः ॥

मन्त्रास्तु ॐ प्राणाय स्वाहेत्यादयः। तदुक्तं चन्द्रिकायाम्—

प्राणापानसमानोदानव्यानास्तारपूर्वकाः ।
चतुर्थ्यग्निवधूयुक्ताः प्राणमन्त्राः स्मृता अमी ॥

ततः पानार्थं पानीयं दत्त्वा देवतां तृप्तां विभाव्य अमृतापिधानमसि स्वाहेति प्रत्यपोशानं दद्यात् । तदुक्तं गौतमीये—

क्षणं विमृश्य मतिमान् दद्याद् गण्डूषकं ततः ।
अमृतापिधानमसि स्वाहेति मनुनाऽमुना ॥

दीपिकायाम्—

गण्डूषदन्तधवनाचमनास्यहस्तमृज्यानुलेपमुखवासकमाल्यभूषाम् ।
ताम्बूलमप्यभिसमर्प्य सुवाद्यनृत्यगीतैः सुतृप्तमभिपूजयतात् पुरेव ॥
गन्धादिभिः सपरिवारमथार्घमस्मै दत्त्वा विधाय कुसुमाञ्जलिमादरेण ।
स्तुत्वा प्रणम्य शिरसा चुलुकोदकेन स्वात्मानमर्पयतु तच्चरणाब्जमूले ॥

## अथोपचारमुद्रा

लक्षणसंग्रहे—आसने पद्ममुद्रा स्याद् हस्तद्वयमधोमुखम् ।
मुद्रैषा कुशलप्रश्ने तदेवोर्ध्वमुखं पुनः ॥
मुद्रा स्यात् स्वागते चार्घमुद्रा त्वञ्जलिरुच्यते ।
अनामाङ्गुष्ठयोर्योगात् सैवोक्ता पाद्यमुद्रिका ॥
उत्तानं दक्षहस्तं तु कृत्वा निम्नतलं सुधीः ।
कनिष्ठहीनाः संयुक्ताश्चतस्रोऽङ्गुल्य उन्नताः ॥
मुद्रैषाचमने प्रोक्ताऽधोमुखी सा त्वनामया ।
स्पृष्टाऽङ्गुष्ठा भवेन् मुद्रा मधुपर्के वरानने ॥
अधोमुखी दक्षहस्तकृता मुष्टिः कनिष्ठया ।
वियुक्ता स्नानमुद्रैषा गदिता परमेश्वरि ॥
उत्तानं दक्षिणं हस्तं कृत्वा तन्मध्यमां पुनः ।
अङ्गुष्ठेन स्पृशेदेषा मुद्रा वस्त्रस्य कीर्त्तिता ॥
एषैवाऽनामिकास्पर्शान् मुद्रा भूषणसंज्ञिका ।
कनिष्ठास्पर्शतो ह्येषा उपवीतस्य मुद्रिका ॥
ज्येष्ठाग्रेण कनिष्ठाग्रं स्पृशेद् गन्धस्य मुद्रिका ।

तन्त्रान्तरे—मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति ।
दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः ॥
अङ्गुष्ठतर्जनीभ्यां तु यन्त्रे पुष्पं निवेदयेत् ।

तथा—अधोमुखं करं कृत्वा तर्जन्यग्रे तु योजयेत् ।
अङ्गुष्ठाग्रं तु मुद्रेयं पुष्पाख्या परमेश्वरि ॥
अङ्गुष्ठाग्रेण तर्जन्याः स्पृशेदग्रं महेश्वरि ।
धूपमुद्रेयमाख्याता सर्वदेवप्रियंकरी ॥
ज्येष्ठाग्रेण स्पृशेदग्रं मध्यमायाः सुरार्चिते ।
दीपमुद्रेयमुदिता सर्वदेवप्रिया शुभा ॥
अनामाग्रं स्पृशेद् देवि ज्येष्ठाग्रेण तु देशिकः ।
नैवेद्यमुद्रा कथिता देवता तृप्तिकारिणी ॥

## अथावरणपूजा

सोमभुजगावल्याम्—ततश्च मूलमन्त्रेण त्रिवारं तर्पयेत् सुधीः ।
गृहीत्वाज्ञां महादेव्याः परिवारान् समर्चयेत् ॥
षडङ्गैः प्रथमः कल्पो गुरुभिस्तु द्वितीयकः ।
परिवारैस्तृतीयः स्याल्लोकपालैश्चतुर्थकः ॥
तदस्त्रैः पञ्चमः प्रोक्त इति सामान्यतः क्रमः ।

यामले—पाद्यादिना तथा पश्चात् पूजयेदङ्गदेवताः ।

मालिनीतन्त्रे—अथ सर्वज्ञता तृप्तिरनादिबोधसंज्ञिका ।
स्वतन्त्रताऽन्या नित्या स्यादलुप्तशक्तिरेव च ।
षडङ्गदेवता ह्येता नामतः परिकीर्त्तिताः ॥

तन्त्रे—षडङ्गमर्चयेद् देव्या देहेषु केसरेषु च ।

केसरेष्वर्चाक्रमो ज्ञानार्णवे—
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ।

सोमभुजगावल्याम्—इष्ट्वा हृदयमाग्नेय्यामैशान्यां च शिरो यजेत् ।
नैर्ऋत्यां च शिखा पूज्या वायव्यां कवचं यजेत् ॥
अभ्यर्च्य पुरतो नेत्रं दिक्षु चास्त्रमथार्चयेत् ।

तन्त्रे—वायव्यादीशपर्यन्तं गुरुपङ्क्तिं समर्चयेत् ।

गुरुपङ्क्तिः दिव्यौघ-सिद्धौघ मानवौघसमुदायः प्रागेवोक्तः स्वगुरुत्रितयं च ।

मालिनीतन्त्रे—गुरुपूजां विना वत्स यदि पूजां समाचरेत् ।
तद्दोषसमये वत्स कुलपूजां समाचरेत् ॥
विगुणं यत्र यद् वामे गुणं च कुलपूजनात् ।

वीरचूडामणौ—आवाह्य पूजयेत् तस्यामङ्गावरणैः सह ।

बिन्दुमध्ये महेशानि त्रिशक्तिं च प्रपूजयेत् ॥
रतिं प्रीतिं प्रियां कान्तिं पुष्पबाणधनुर्धरम् ।
मिथुनं पूजयेत् पश्चाद् गायत्रीं चतुराननाम् ॥
सावित्रीं चरमां ध्यायेद् पूजयेद् विष्णुदेवताम् ।
वागीश्वरीं समावाह्य रुद्रमैथुनमर्चयेत् ॥
पङ्क्तयाकारेण देवेशि गुरुमक्षोभ्यमर्चयेत् ।
कर्त्तृकां पूजयेत् पश्चात् चिताङ्गारं प्रपूजयेत् ॥
षट्कोणे च यजेद् देवि षडङ्गं न्यस्य तर्पयेत् ।
प्रणवं पूर्ववर्णं च तन्नामपदमेव च ।
वज्रपुष्पं प्रतीच्छोक्त्वा द्विठान्तमनुमुद्धरेत् ।
नामानि च प्रवक्ष्यामि स्थाने स्थाने यथाक्रमम् ॥
वीरतन्त्रे—ततोऽष्टयोगिनी बाह्ये संपूज्या दलमूलतः ।
महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च ॥
घोराश्च भ्रामरी चैव महारात्रिश्च सप्तमी ।
भैरवी चाष्टमी प्रोक्ता योगिनीस्ताः प्रपूजयेत् ।
यामले—चतुर्दिक्षु दले देव्याः पूर्वादिक्रमतोऽर्चयेत् ।
पूर्वे वैरोचनं नाम असिताभमथोत्तरे ॥
पश्चिमे पद्मनाभाख्यं दक्षिणे शङ्खपाण्डवम् ।
विदिक्षु पूजयेत् पश्चादग्निकोणादितः क्रमात् ॥
नामकां मामकां चैव पाण्डरां तारकां तथा ।
संबोधनयुतं नाम सर्वत्र साधको भवेत् ॥
विमलातन्त्रे—स्वनामाद्यक्षरं बीजं मन्त्रालाभे प्रकीर्त्तितम् ।
यामले—दलाग्रे च महेशानि ब्राह्म्यादि परिपूजयेत् ॥
पूजयेच्च चतुर्द्वारे पद्मान्तकादिकं क्रमात् ।
पद्मान्तकं यमान्तकं विघ्नान्तकमतः परम् ॥
नरकान्तकं च संपूज्य दिक्पालांश्च प्रपूजयेत् ।
मध्ये सूर्यं समभ्यर्च्य गुरुपंक्त्युत्तरे ततः ॥
इतरे पूजयेद् बुद्धं पुनर्देवीं प्रपूजयेत् ।
पुष्पाञ्जलित्रयं दद्याद् यथासंख्यं जपेद् बुधः ॥
रुद्रतन्त्रे—चतुरस्रे लोकपालान् तदस्त्राणि च तद्बहिः ।

त्रिकोणे मत्स्यसूक्ते तु विशेषः—

कामेश्वर्यादिकाः पूज्यास्त्रिकोणे वह्निमण्डले।
कामेश्वरी दिक्करवासिनी च चण्डनायिका ॥ इत्युक्तम्।
ततश्च मूलमन्त्रेण पुष्पाञ्जलित्रयं क्षिपेत्।
रक्तपुष्पाणि चादाय मस्तके कुल्लुकां जपेत् ॥

इत्युक्तम्। देवीमौलावक्षोभ्यमपि पूजयेत्। "मौलावक्षोभ्यमर्चयेदि"त्युक्तेः। इदं चावरणपूजायाः प्रागाचरन्ति।

## अथ पूजादौ दिङ्निरूपणम्

अत्र सर्वत्र दिङ्निरूपिका देवतैव प्रधानत्वात् तेन देवीपश्चाद् वामकोणादग्रवामकोणपर्यन्तं गुरुपंक्तिपूजा सिध्यति।

पूज्यपूजकयोर्मध्ये प्राची प्रकीर्त्यते बुधैः।
तद्दक्षिणं दक्षिणं स्यादुत्तरं चोत्तरं भवेत् ॥

इति मानसोल्लासवचनात्।

यद्दुरभिमुखा देवा देवाभिमुखतो दश।
प्राच्यादिहरितो ज्ञेया पूजाहोमादिकर्मणि ॥

इति सारसंग्रहवचनाच्च। एवं च "असिताभं तथोत्तर" इत्यादावपि देवीवामदलं प्रसिद्धदक्षिणदिगवस्थितमेवोच्यते। तेन वामावर्त्तेन पूजाक्रमः। सम्प्रदायस्त्वत्र—प्रसिद्धप्राच्यादिक्रमेणैव। ब्राह्म्यादिपूजनं तु देव्यग्रदलमारभ्य प्रादक्षिण्येनैव विशेषानभिधानात्।

अथावरणपूजाः स्युः पुरः प्राचीं प्रकल्पयेत्।
तदादिपरिवाराणां प्रादक्षिण्येन पूजनम् ॥

इति नृसिंहकल्पवचनाच्च। एवमग्रेऽपि बोध्यम्। इदन्त्ववधेयम्—देवतावाहनात् प्राग् आग्नेयादिकोणे धर्मादीनां पूर्वाद्यष्टकेशरेषु पीठशक्तीनां पूजनं सम्मुखप्राचीत्व-कल्पनानुसारेण बोध्यम्। पूज्यस्यानावाहितत्वेन तदानीं पूज्यपूजकयोरन्तरत्वाभावात्।

उत्तराशामुखो देवि यदा चक्रं समुद्धरेत्।
उत्तराशा तदा ज्ञेया पूर्वाशैव न संशयः ॥
ईशानकोणं देवेशि तदाग्नेयं न संशयः।
पश्चिमाभिमुखो मन्त्री यदा चक्रं समुद्धरेत् ॥

पश्चिमाशा तदा ज्ञेया पूर्वाशैव न संशयः ।
वायुकोणं तदाऽऽग्नेयमीशानं राक्षसं भवेत् ॥
दक्षिणाशामुखो मन्त्री यदा चक्रं समुद्धरेत् ।
पूर्वाशैव तदा रक्षो रक्षःकोणं तु वह्निमत् ॥

इति ज्ञानार्णववचनस्यान्यथोपपादयितुमशक्यत्वात् । पश्चिमाशाद्यभिमुखत्वं च काम्यपूजाविशेषपरम् । नित्यपूजायां—"प्रागाननोऽथ धनदिग्वदनोऽथ वे"त्यादिना दिग्द्वयस्यैव नियमनात् । केचित् तु इन्द्रादीन् साहजिकप्राच्यादिक्रमेण पूजयन्ति । तत्र प्रमाणं चिन्त्यम् ।

## अथावरणदेवताध्यानम्

शारदातिलके—इन्द्रकोणे लसद्दण्ड-कुण्डिकाक्षगुणाभयाम् ।
गायत्रीं पूजयेन् मन्त्री ब्रह्माणमपि तादृशम् ॥
रक्षःकोणे शङ्ख-चक्र-गदा-पङ्कज-धारिणीम् ।
सावित्रीं पीतवसनां यजेद् विष्णुं च तादृशम् ॥
वायुकोणे परश्वक्ष-मालाभयकरान्विताम् ।
यजेत् सरस्वतीमच्छां रुद्रं तादृशलक्षणम् ॥

अत्रेन्द्रकोण इत्यादिना देवताप्राच्यादीनामेव पूर्वादित्वाभिधानम् । षडङ्गदेवतानां तत्रैव ध्यानम् ।

तुषारस्फाटिकश्याम-नीलकृष्णारुणार्चिषः ।
वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ॥
ध्यातव्या विदुषा तेन क्रमेणैवाऽङ्गदेवताः ।

प्रधानतनव इति । वैकल्पिकं ध्यानान्तरमिति राघवभट्टाः । दलमूले महाकालादिध्यानं मूलदेवतावद् विशेषानभिधानात् । वैरोचनादिध्यानं तन्त्रान्तरे—

वैरोचनं द्विहस्तं च यष्टितोमरधारिणम् ।
पीतं वृषासनगतं त्रिनेत्रं भक्तवत्सलम् ॥
शङ्खं त्रिशिरसं देवमसिताभं हिरण्मयम् ।
पुस्तकाभीतिवरदं विमलं शशवाहनम् ॥

शङ्खं त्रिशिरसमिति । अन्यदसिताभवत् । पुस्तकेत्यादि । एकस्यैव पुस्तकस्य हस्ताभ्यां धारणाच्चतुर्भुजत्वं बोध्यम् । एवमग्रेऽपि ।

पद्मनाभं दन्तिवक्त्रं पुस्तकं वरदाभयम् ।
पाशं च विधृतं देवं त्रिनेत्रं वरदं शुभम् ॥

श्वेतां त्रिनेत्रां वरदां पुस्तकाभयधारिणीम् ।
मामकां वलयद्वेन संयुक्तेन विभाविताम् ॥
कृष्णां करालवदनां नामकां नवयौवनाम् ।
गोधिकायां समारूढां शिखिरूढां च तारकाम् ॥
पाण्डरां श्वेतबीजेन चतुर्बाहुसमन्विताम् ।
रक्तां लम्बोदरीं ध्यायेत् पञ्चप्रेतासनस्थिताम् ॥

हस्तध्यानं तु सर्वासां मामकावत् ।

पूर्वबीजं समुच्चार्य तारां श्यामां समर्चयेत् ।
पूर्वादिपद्मपत्रेषु पुनर्बीजेन शाङ्करि ॥
नमोऽन्तेन ध्रुवाद्येन प्रतिश्लोकेन चार्चयेत् ।

## अथ ब्राह्मयादीनां ध्यानम्

शारदायाम्—दण्डं कमण्डलुं पश्चादक्षसूत्रमथाऽभयम् ।
बिभ्रती कनकच्छाया ब्राह्मी कृष्णाजिनोज्ज्वला ॥
शूलं परश्वधं क्षुद्रदुन्दुभिं नृकरोटिकाम् ।
वहन्ती हिमसङ्काशा ध्येया माहेश्वरी शुभा ॥
अङ्कुशं दण्ड-खट्वाङ्गौ पाशं च दधती करैः ।
बन्धूकपुष्पसङ्काशा कौमारी वरदायिनी ॥
चक्रं घण्टां कपालं च शङ्खं च दधती करैः ।
तामालश्यामला ध्येया वैष्णवी विभ्रमोज्ज्वला ॥
मुषलं करवालं च खेटकं दधती हलम् ।
करैश्चतुर्भिर्वाराही ध्येया कालघनच्छविः ॥
अङ्कुशं तोमरं विद्युत् कुलिशं दधती करैः ।
इन्द्रनीलनिभेन्द्राणी ध्येया सर्वसमृद्धिदा ॥
शूलं कृपाणं नृशिरः कपालं दधती करैः ।
मुण्डस्रङ्मण्डिता ध्येया चामुण्डा रक्तविग्रहा ॥
अक्षस्रजं बीजपुरं कपालं पङ्कजं करैः ।
वहन्ती हेमसङ्काशा महालक्ष्मीः समीरिता ॥

केचित् तु—कालीप्रकरणोक्त-ब्राह्मी-नारायणीत्याद्यष्टकमेवात्र पूज्यं "यथा काली तथा तारे"त्युक्तेरिति वदन्ति । तासां च ध्यानं तत्रैव वक्ष्यते ।

## अथेन्द्रादिध्यानम्

तूर्णायागे—इत्थमावरणं सम्यगभ्यर्च्य मनुवित्तमः ।

अन्ते यजेल्लोकपालांस्तेषामस्त्राणि च क्रमात् ॥

इन्द्रं सुराधीपं पीतं वज्रहस्तं सवाहनम् ।

अग्निं तेजोऽधिपं रक्तं शक्तिहस्तं सुभूषणम् ॥

यमं प्रेताधिपं कृष्णं दण्डहस्तं समर्चयेत् ।

रक्षोऽधिपं निर्ऋतिं च खड्गहस्तं सुधूम्रकम् ॥

पाशहस्तं सुशुभ्राङ्गं वरुणं यादसांपतिम् ।

वायुं प्राणाधिपं धूम्रमङ्कुशाढ्यकरं यजेत् ॥

यक्षपतिं कुबेरं च शुक्लवर्णं गदाकरम् ।

विद्याधिपं तथेशानं स्वच्छं शूलकरं यजेत् ॥

नागाधिपं तथाऽनन्तं गौरं चक्रधरं यजेत् ।

लोकाधिपं विधातारं रक्तं पद्मकरं यजेत् ॥

ऐरावतं तथा मेषं महिषं मृतपूरुषम् ।

मकरं मृगम(श्वं)र्यौ च वृषं च रथ-हंसकौ ॥

इन्द्रादिलोकपालानां वाहनानि विदुर्बुधाः ।

वज्रं पीतं सितां शक्तिं दण्डं कृष्णं समर्चयेत् ॥

खड्गमाकाशसंकाशं पाशं विद्युन्निभं स्मरेत् ।

अङ्कुशं रक्तवर्णं च शुक्लवर्णां गदां यजेत् ॥

त्रिशूलं नीलवर्णं च यजेन् मन्त्री ततः परम् ।

रथाङ्गं करबिन्दाभं पद्मं रक्तं समर्चयेत् ॥

लोकपालायुधान्येवंक्रमेण परिपूजयेत् ।

अत्र यद्यपि हृदयादिषडङ्गानामीन्द्रादीनां च पूजने तन्त्रान्तरे मन्त्रान्तराण्युक्तानि तथापि तानि देवतान्तरावरणपूजापराणि । अत्र च—

वज्रपुष्पं प्रतीछेति हूं फट् स्वाहेति चान्ततः ।

अनेन मनुना सर्वान् परिवारान् समर्चयेत् ॥

इति वीरतन्त्रादिवचनात् वज्रपुष्पमित्यादिमन्त्रेणैव सकलपरिवाराणां पूजनम् । इन्द्रादिपूजोत्तरं लोकपालमुद्रा प्रदर्शनीया । तदुक्तं तन्त्रे—

पाणिमूले सुसंलग्ने शाखाः सर्वाः प्रसारिताः ।

लोकेशानामियं मुद्रा तेषामर्चासु दर्शयेत् ॥

तूर्णायागे—अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पयेत् तुभ्यं प्रथमावरणार्चनम् ॥
इति पुष्पाञ्जलिं दद्यात् प्रणमेदतिभक्तितः ।
प्रत्यावरणमेवं तु तत्तन्नाम्ना समर्पयेत् ॥

स्वतन्त्रे—ततः पुनर्मूलदेवीं मुद्रातर्पणपूजनैः ।
अर्चयित्वा जपं कृत्वा विसर्जयेत् ततः परम् ॥

मुद्रा योन्याख्या । पूजाप्रकारस्तूर्णायागे उक्तः—
पुनर्मूलं समुच्चार्य साङ्गायै सपरीति च ।
तारायै नाम देव्याश्च चतुर्थ्यन्तमुदीर्य च ॥
नम इत्यर्चयेद् गन्धपुष्पाद्यैः साधकस्त्रिधा ।

## अथ बलिदानम्

त्रिशक्तिरत्ने—वामभागे त्रिकोणे च वृत्तं भूपुरमेव च ।
विधाय रक्तमाल्याद्यैरर्चयित्वा यथाविधि ॥
वक्ष्यमाणेन मनुना बलिं देव्यै निवेदयेत् ।
ध्रुवं लज्जां समुच्चार्य ङेन्तामेकजटां वदेत् ॥
महायक्षाधिपायै स्यादुपनीतबलिं तथा ।
गृह्ण-गृह्णापय-द्वन्द्वं मम सर्वपदादथ ॥
शान्तिं कुरुयुगं ब्रूयात् परविद्यामतः परम् ।
आकृष्य-युगलादन्ते त्रुटछिन्धियुगं वदेत् ॥
व्रीडावह्निवधूप्रान्ता बलिमन्त्रोऽयमीरितः ।

बलिपात्रोदकेन विशेषार्घ्योदकेन वोत्स्रष्टव्यः । नरसिंहपुराणे—
आर्द्रामलकमानेन कुर्याद्धोमहविर्बलीन् ।

छागादिबलिविधिरग्रे वाच्यः । प्रथमं कुल्लुकं जप्त्वैव तारामन्त्राः प्रजप्तव्याः ।
तदुक्तं त्रिशक्तिरत्ने—अजप्त्वा कुल्लुकं मन्त्रमस्मृत्वा श्रीपतिं हरिम् ।
यो जपेत् तारिणीमन्त्रं नरके स निलीयते ॥
जपित्वा कुल्लुकं मन्त्रमष्टोत्तरशतं सुधीः ।
प्रजपेत् तारिणीं पश्चान् नान्यथा सिद्धिमाप्नुयात् ॥
धृत्वा तु कुल्लुकं हस्ते महादेवीं समर्चयेत् ।
अथवा मूर्ध्नि विन्यस्य पूजयेत् प्रजपेदपि ॥

ब्रह्मसंहितायाम्—अक्षोभ्यस्य मनुं त्यक्त्वा देवीं तारां जपेद् यदि ।

सिद्धिहानिर्भवेत् तस्य रौरवं नरकं व्रजेत् ॥

तथा—अक्षोभ्यस्य मनुं विप्र कवचं सारमुत्तमम् ।

अतिगुह्यं महाध्यानं सर्वध्यानेषु चोत्तमम् ॥

अग्रे मनुं प्रवक्ष्यामि ध्यानं चैव ततः परम् ।

कवचं च ततः पश्चात् कथयामि क्रमेण तु ॥

अनुत्तरं समुद्धृत्य पपञ्चमविभूषितम् ।

अक्षोभ्येति च स्वाहेति रमाद्यन्तं महामनुः ॥

अनुत्तरः अकारः । पपञ्चमो मकारः । तेन बिन्दुः ।

स्वयं ऋषिश्च संप्रोक्तो विराट् छन्द उदीरितः ।

अक्षोभ्यो देवता प्रोक्तस्त्रिमूर्त्तिर्नागरूपधृक् ।

विनियोगस्तु नियतं पुरुषार्थचतुष्टये ॥

अथ ध्यानं प्रवक्ष्यामि सर्वसौभाग्यदायकम् ।

सहस्रादित्यसङ्काशं नागरूपधरं शुभम् ।

विद्युत्कोटिसमं वक्त्रं वह्निभास्वरलोचनम् ।

सार्धत्रिबलयोपेतं जटाकोट्यग्रसंस्थितम् ॥

महालावण्यसंयुक्तं सुरासुरैर्नमस्कृतम् ।

सूर्यविद्युत्समाभासं महामणिशिखोपरि ॥

एतद्रूपं महाकायं देवैरपि सुपूजितम् ।

शिव उवाच—

अस्य कवचस्य ब्रह्मविष्णुरुद्रा ऋषयो विराट्छन्दोऽक्षोभ्यो देवता श्रीं बीजं स्वाहा शक्तिर्धर्मार्थकाममोक्षार्थं जपे विनियोगः ।

श्रीं बीजं शिरसे अव्यादादिबीजं च भालके ।

अकारः कण्ठं मे अव्यात् क्षोकारो हृदि रक्षतु ॥

भकारो नाभिं मे अव्याद् यकारो गुह्यदेशके ।

मन्त्रशक्तिश्च सर्वाङ्गे बीजं नेत्रद्वयेऽवतु ॥

सर्वभावैश्च अक्षोभ्यो बाहू द्वौ रक्षयेत् सदा ।

ब्रह्मा रक्षतु पादौ द्वौ विष्णू रक्षतु जानुनी ॥

मूलाधारं शिरो मेऽव्यात् स्वाधिष्ठाने वृषोऽवतु ।

मणिपुरे सदा अव्यात् शिवस्य गृहिणी च मे ॥

अनाहताम्बुजं मेऽव्यादिन्द्रादिदशदेवता ।

विशुद्धचक्रे सततं रक्षां करोतु मे रविः ॥
महेश्वरः सदा रक्षेदाज्ञाचक्रं सुशोभनम् ।
ब्रह्म शुक्रं च मे रक्षेन् नाभिं रक्षतु भैरवी ॥
दिव्यादिगुरुपंक्तौ च सर्वत्राक्षोभ्य उच्यते ।
एवं क्रमविधानेन कवचं च जपेच्छुचिः ॥
त्रिसन्ध्यं य पठेन् नित्यं श्रद्धाभक्तिसमन्वितः ।
सिद्ध्यहानिर्भवेत् तस्य नात्र कार्या विचारणा ॥

## अथ मालाविधिः

एतन्मन्त्रजपे तु वीरस्य रहस्यमाला मुख्या प्रशस्ता च । तथाहि त्रिशक्तिरत्ने—

रहस्यमालया जप्ता तारिणी सिद्धिदा भवेत् ।
अतस्तया प्रजप्तव्या मालया सिद्धिमिच्छता ॥
महाशङ्खमयी माला पञ्चाशन्मणिनिर्मिता ।
रहस्यमाला संप्रोक्ता गोपनीया प्रयत्नतः ॥
कर्णनेत्रान्तरालास्थि महाशङ्खः प्रकीर्त्तितः ।
तदभावे तु कस्यापि कर्त्तव्याऽवयवस्य वै ॥

महाशङ्खो नृशिरोऽस्थि । तच्चादग्धं विहितमिति सम्प्रदायविदः । यामले—

नरेभाश्वोष्ट्रमुण्डानां छिन्नानां रणसंकटे ।
मालां वै कारयेद् वृत्तां महाविद्यासु साधकः ॥
तदभावे स्फाटिकी स्यान् माला सर्वत्र सिद्धिदा ।

मुण्डमालायाम्—अङ्गुष्ठस्थामक्षमालां चालयेन् मध्यमाग्रतः ।
अशुचिर्न स्पृशेदेनां करभ्रष्टां न कारयेत् ।

त्रिशक्तिरत्ने—अथवा मातृकामय्या मालया प्रजपेद् बुधः ।
एकैकं वर्णमुच्चार्य वर्णनान्तरितं जपेत् ॥
सुधीरेव लकारान्तं तत आन्तं समानयेत् ।
मेरुरूपं क्षकारं हि साधको नैव लङ्घयेत् ॥

मुण्डमालायामपि—अनुलोमविलोमस्थक्लृप्तया वर्णमालया ।
आदिवर्णक्रमेणैव लान्तं च परमेश्वरि ॥
क्षकारं मेरुरूपं तु लङ्घयेन्न कदाचन ।
मेरुहीना च या माला मेरुलङ्घ्या च या भवेत् ॥
अशुद्धा तु भवेदत्र सा माला निष्फला भवेत् ।

चित्रिणी विशतन्त्वाभा ब्रह्मनाड़ी गता तु या ॥
तया संग्रथिता ध्येया सर्वकामफलप्रदा ।
अष्टोत्तरशतजपे त्वादौ क्लीबं समुच्चरेत् ॥
ऋ-ॠ-ऌ-ॡ-वर्णचतुष्टयं क्लीवं प्रचक्षते ।
वर्गाणामष्टकं वापि काम्यभेदक्रमेण तु ॥
अ-क-च-ट-त-प-य-शा इत्येवं चाष्टवर्गकम् ।

अष्टोत्तरशतजपे कर्त्तव्ये क्लीबचतुष्टयमादावुच्चार्य विलोमसमाप्तावपि तच्चतुष्टयं विलोमेन जपेदित्येकः कल्पः। अनुलोमविलोमाभ्यां पञ्चाशद् वर्णानुच्चार्य शेषेऽष्टवर्गाक्षराण्युच्चरेदिति अपरः कल्प इत्यर्थः। यामले—

सबिन्दुं वर्णमुच्चार्य पश्चान् मन्त्रं जपेत् सुधीः ।
क्षं मेरुं कल्पयित्वा तु जपेत् तन्नाऽभिलङ्घयेत् ॥

क्षं सकृदेव मेरुत्वेन शुद्धमुच्चरेत् न तु तदुत्तरं मन्त्रमुच्चरेदित्यर्थः। तथा कुलमूलावतारे सारसंग्रहे च—ब्रह्मनाड़ीगतामादिक्षान्तानर्णान् विभाव्य च ।

अर्णं बिन्दुयुतं कृत्वा श्रेष्ठं मन्त्रं जपेत् सुधीः ॥
अकारादिषु संयोज्य तथा कादिषु च क्रमात् ।
क्षार्णं मेरुमथो तत्र कल्पयेज् जगदीश्वरीम् ॥
तदा लिपिर्भवेदक्षमालार्धशतसंख्यया ।
अनया सर्वमन्त्राणां जपः सर्वार्थसाधकः ॥

तथा—अकारादिक्षकारान्तं पञ्चाशन्मणिसूत्रकम् ।
क्षकारं मेरुसंस्थाने लकारादिविलोमतः ॥
वर्गाष्टकविभेदेन शतमष्टोत्तरं भवेत् ।
एकैकान्तरितं मन्त्रं यथादेवं फलप्रदम् ॥
अनुलोमविलोमस्थैः क्लृप्तया वर्णमालया ।
प्रत्येकमन्त्रार्णयुता जप्ताः स्युः शीघ्रसिद्धिदाः ।
वैरिमन्त्रा अपि नृणामन्ये मन्त्राश्च किं पुनः ॥

तेनाऽन्यत्र मालापदप्रयोगो गौणः। तथा—

पञ्चविंशतिभिर्मोक्षस्त्रिंशद्भिर्धनसञ्चयः ।
सर्वार्थाः सप्तविंशत्या पञ्चदश्याऽऽभिचारिकम् ॥
पञ्चाशद्भिः कर्मसिद्धिः स्यात् तथा चतुरुत्तरैः ।
सप्तविंशतिभिश्चाक्षैः सर्वसाधारणो जपः ॥

मन्त्रतन्त्रप्रकाशे—अङ्गुलीजपसंख्याने जपमेकगुणं स्मृतम् ।
रेखास्वष्टगुणं विद्यादक्षैश्च शतसंगुणम् ॥
तत्राऽङ्गुलिजपं कुर्वन् साङ्गुष्ठाङ्गुलिभिर्जपेत् ।
अङ्गुष्ठेन विना कर्म कृतं तदफलं भवेत् ॥
अङ्गुलीपर्वभिर्मन्त्रं जपन् नित्यं प्रकल्पयेत् ।
तथा तन्त्रान्तरे—अनामिकाद्वयं पर्व कनिष्ठादिक्रमेण तु ।
तथा—अनामामध्यमापर्व मेरुं कृत्वा न लङ्घयेत् ॥
तर्जन्यग्रे मध्यमे च यो जपेदत्र साधकः ।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो धनम् ॥
तथा—आरभ्याऽनामिकामूलात् प्रादक्षिण्यक्रमेण तु ।
मध्यमामूलपर्यन्तं जपेदष्टसु पर्वसु ॥
अनामामध्यमं पर्व मेरुं कृत्वा न लङ्घयेत् ।
इदं च त्रिपुरसुन्दरीभिन्नशक्तेरष्टोत्तरशतसंख्याजपविषयम् । शतमन्त्रजपे तु—अनामामध्यमारभ्य तर्जनीमूलपर्यन्तं दशधा जपमात्रं बोध्यम् । तन्त्रान्तरे—
अनामामूलमारभ्य प्रादक्षिण्यक्रमेण तु ।
तर्जनीमूलपर्यन्तं जपेन् नवसु पर्वसु ॥
मध्यमात्रितयग्राह्यमनामामूलमेव च ।
अनामामध्यमं चैकं मेरुं कृत्वा न लङ्घयेत् ॥
इदं च द्वादशावृत्त्या अष्टोत्तरशतसंख्यजपपरम् । सौन्दर्या तु यामले—
अनामामध्यमायाश्च मूलाग्रं तु द्वयं द्वयम् ।
कनिष्ठायाश्च तर्जन्यास्त्रयं पर्व महेश्वरि ॥
अनामामध्यमायाश्च मेरुं स्याद् द्वितयं शुभम् ।
प्रदक्षिणक्रमाद् देवि जपेत् त्रिपुरसुन्दरीम् ॥
वैष्णवादौ तु सनत्कुमारसंहितायाम्—
अनामामध्यमारभ्य कनिष्ठादित एव च ।
तर्जनीमूलपर्यन्तं दशपर्वसु संजपेत् ॥
तथा—अङ्गुलीर्न वियुञ्जीत जपकाले कदाचन ।
अङ्गुलीनां वियोगेन छिद्रेषु स्रवते जपः ॥
नोल्लङ्घयेच्च गणनां किञ्चित् संकोचयेत् तलम् ।
नित्यं जपं करे कुर्यान् न तु काम्यं कदाचन ॥

काम्यमपि करे कुर्याद् यदि माला न विद्यते ।

न विद्यत इति । न विहिताऽस्तीत्यर्थः । अत एव कुलामृते—

शुद्धिरूपा यदा देवी मनःपीठार्चनं तदा ।
पूर्वमेव मया प्रोक्तं सहोमं ते विशेषतः ॥
वर्णमय्या मनोमय्या जपो मानस उच्यते ।
मालया देवदेवेशि मोक्षदः कामदस्तथा ॥
चितिरूपा यदा देवी कुलकुण्डलिनी परा ।
यन्त्रे पूजा तदा ज्ञेया होमकुण्डे विधीयते ॥
मण्यादि-गुटिकामय्या जपश्चैवाक्षमालया ।
उपांशुः स्यान् महादेवि शीघ्रसिद्धिप्रदायकः ॥
योनिरूपा यदा देवी पूजयेद् योनिमण्डले ।
होमस्तत्रैव देवेशि मैथुनेन विधानतः ॥
जपः कार्यो महेशानि तथैव करमालया ।

इत्युक्तम् । कुलमूलावतारे—

मणयः शङ्खसम्भूताः प्रोक्ता लक्ष्मीप्रदायकाः ।
मुक्तिप्रदाः स्फटिकजाः पद्माक्षाः पुष्टिवर्धनाः ॥
भुक्तिमुक्तिप्रदाः पुण्या रुद्राक्षाः सर्वसिद्धिदाः ।
पुत्रजीवभवाः पुत्रपशुधान्यर्द्धिसिद्धिदाः ॥
विद्रुमोत्थाश्च मणयो धनसौभाग्यवश्यदाः ।
मौक्तिका मुक्तिदाः प्रोक्तास्तथा सर्वसमृद्धिदाः ॥
पापापहाः कुशमयाः कामदाः स्वर्णरूप्यजाः ।

शारदातिलके—रुद्राक्षमालिका सूते जपेन स्वमनोरथान् ।

पद्माक्षैर्विहिता माला शत्रूणां नाशिनी मता ॥
कुशग्रन्थीमयी माला सर्वपापप्रणाशिनी ।
पुत्रजीवफलैः क्लृप्ता कुरुते पुत्रसम्पदम् ॥
निर्मिता रूप्यमणिभिर्जपमालेप्सितप्रदा ।
हिरण्मयैर्विरचिता माला कामान् प्रयच्छति ॥
प्रबालैर्विहिता माला प्रयच्छेत् पुष्कलं धनम् ।
सौभाग्यं स्फाटिकी माला मौक्तिकैर्विहिता श्रियम् ॥
निर्मिता शङ्खमणिभिः कुरुते कीर्त्तिमव्ययाम् ।

सर्वैरेभिर्विरचिता माला स्यात् मुक्तये नृणाम् ॥

एतेन—इन्द्राक्षैर्यदि जप्येत रुद्राक्षैः स्फाटिकैस्तथा ।

नान्यन्मध्ये प्रयोक्तव्यं पुत्रजीवादिकं च यत् ॥

यद्यन्यत् तु प्रयुञ्जीत मालायां जपकर्मणि ।

तस्य कामं च मोक्षं च न ददाति प्रियंकरी ॥

जन्मान्तरे जायते च सर्वो वेदान्तपारगः ।

मित्रलाभं ततो देवि चण्डालैः पापकर्मभिः ॥

इत्युत्तरतन्त्रवचनं समस्तव्यतिरिक्तकिञ्चित्प्रक्षेपपरमिति ज्ञेयम् । नारदः—

कुशग्रन्थ्या जपेद् विप्रः सुवर्णमणिभिर्नृपः ।

पुत्रजीवैर्जपेद् वैश्यः पद्माक्षैः सर्व एव च ॥

तन्त्रे—तथामलकसम्भूतैस्तुलसीकाष्ठनिर्मितैः ।

एभिश्च मालिकां कुर्यात् मतिमान् वैष्णवे मनौ ॥

गोपालस्य शुक्लपद्माक्षं प्रशस्तम् "समाहितमनाः शुक्लपद्मबीजाक्षमालये"ति गौतमवचनात् । नारदपञ्चरात्रे—

जपस्य गणनं प्राहुः पद्माक्षैर्भक्तिवर्धनैः ।

"यस्तु भगवतो भूत्ये"त्युपक्रम्य "रुद्राक्षैश्चोत्तमे"ति वराहवचनात् वैष्णवानामपि रुद्राक्षमाला प्रशस्ता । रुद्राक्षमालया दिवा शक्तिमन्त्रजपो निषिद्धः । तदुक्तं योगिनीतन्त्रे—रुद्राक्षैः शक्तिमन्त्रस्तु अह्नि यो जपति प्रिये ।

स दुर्गतिमवाप्नोति निष्फलस्तस्य तज्जपः ॥

इति भैरवीविद्यायाम् । वाराहीतन्त्रे—

सुवर्णमणिभिर्मालां स्फाटिकीं शङ्खनिर्मिताम् ।

प्रवालैरेव वा कुर्यात् पुत्रजीवं विवर्जयेत् ॥

पद्माक्षैश्चैव रुद्राक्षमिन्द्राक्षं च विशेषतः ।

## अथ मालासंस्कारकालः

योगिनीतन्त्रे—द्वादश्यां वैष्णवी माला कर्त्तव्या साधकोत्तमैः ।

मन्त्रज्ञैर्विष्णुमन्त्रेण दिव्यभागे प्रयत्नतः ।

दिव्यभागे पूर्वाह्णे । तथा—

शक्तीनामपि कर्त्तव्या भुक्त्वा रात्रौ यथाविधि ।

अष्टम्यां च नवम्यां च चतुर्दश्यां तथैव च ॥

त्रयोदश्यां तथा कुर्याच्छिवस्याऽपि सुरेश्वरि ।

## अथ मालासंस्कारः

योगिनीतन्त्रे—पट्टसूत्रकृता माला देव्याः प्रीतिकरी सदा ।
कार्पासैर्वैष्णवी माला पद्मसूत्रैरथापि वा ॥
ऊर्णाभिर्वल्कलेनाऽपि शैवी माला प्रशस्यते ।

कार्पाससूत्रे विशेष उक्त उमामहेश्वरसंवादे—
या जीववत्सका नारी सुन्दरी पतिवल्लभा ।
तया कर्त्तितसूत्रेण व्यूढा माला शुभावहा ॥
मरुसूत्रेण पट्टेन त्रसरेण विनिर्मिता ।
निर्मिता स्वर्णरजतैः स्वर्णेनापि शुभावहा ॥
कन्याकर्त्तितसूत्रेण ग्रथिता गुरुणा स्वयम् ।
मण्डलीकृतगोपुच्छरूपधृङ् मालिका शुभा ॥
हारिद्रं सर्वथा सूत्रं ग्रामकार्पाससम्भवम् ।
चैत्रकार्पासजं वाथ त्यजेद् ग्रन्थनकर्मणि ॥

योगिनीतन्त्रे—ततो द्विजेन्द्रपुण्यस्त्रीनिर्मितं ग्रन्थिवर्जितम् ।
त्रिगुणं त्रिगुणीकृत्य सूत्रं प्रक्षालयेत् ततः ॥

प्रक्षालयेत् पञ्चगव्येन । "पञ्चगव्यैश्च क्षालयेदि"ति वचनात् । तन्त्रे—
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चगव्यमिति प्रोक्तं महापातकनाशनम् ॥ इति ।

पञ्चगव्यपरिमाणं तु—गौतमीये—
पलमात्रं दुग्धभागं गोमूत्रं तावदिष्यते ।
घृतं च पलमात्रं स्याद् गोमयं तोलकद्वयम् ॥
दधि प्रसृतिमात्रं स्यात् पञ्चगव्यमिदं स्मृतम् ।
अथवा पञ्चगव्यानां समानो भाग उच्यते ॥
एकभुक्तिं विधायादौ साधको ग्रथयेत् स्वयम् ।
कृतनित्यक्रियः शुद्ध उक्तेष्वक्षेषु मन्त्रवित् ॥
यथाकामं यथालाभमक्षाण्यानीय यत्नतः ।
अन्योन्यसमरूपाणि नातिस्थूलकृशानि च ॥
कीटादिभिरदुष्टानि न जीर्णानि नवानि वै ।
गव्यैस्तु पञ्चभिस्तानि प्रक्षाल्य तु पृथक् पृथक् ॥

आदौ पूर्वदिने शक्तिव्यतिरिक्तपरमिति ज्ञेयम् ।

अश्वत्थपत्रैर्नवकैः पद्माकारेण कल्पिते ।
सूत्रे मणींश्च गन्धाद्भिः क्षालितांस्तत्र निःक्षिपेत् ॥
तारं शक्तिं मातृकाञ्च सूत्रे चैव मणिष्वथ ।
विन्यस्य पूजयेदाज्यैर्जुहुयाच्चैव शक्तितः ॥

तथा—मणिमेकैकमादाय सूत्रे तत्र तु योजयेत् ॥

तन्त्रान्तरे तु—एकैकं मातृकावर्णं सतारं प्रजपन् सुधीः ।
मणिमादाय सूत्रेण ग्रथयेन् मध्यमध्यतः ॥
ब्रह्मग्रन्थिं विधायेत्थं मेरुं च ग्रन्थिसंयुतम् ।
ग्रथयित्वा पुरो मालां ततः संस्कारमारभेत् ॥

गौतमीये यामले च—एवं विधाय मालां वै शोधयेत् परमेश्वरि ।
अश्वत्थपत्रनवकैः पद्माकारं तु कल्पयेत् ॥
तन्मध्ये स्थापयेन् मालां मातृकां मूलमुच्चरन् ।
क्षालयेत् पञ्चगव्येन सद्योजातेन सज्जलैः ॥

तन्त्रे—प्रत्येकं मन्त्रयेन् मन्त्री पञ्चमेन सकृत् सकृत् ।

गौतमीये—समुदायमालामधिकृत्य—
पञ्चमेनैव मन्त्रेण शतान् न्यूनेन मन्त्रयेत् । इत्युक्तम् ।
माले माले महामाले सर्वतत्त्वस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥
मायाबीजादिकं कृत्वा रक्तपुष्पैः समर्चयेत् ।
मन्त्रयेन् मूलमन्त्रेण क्रमेणोत्क्रमयोगतः ॥
तथैव मातृकावर्णैर्मन्त्रयेन् मन्त्रतत्त्ववित् ।

योगिनीतन्त्रे—होमकर्म ततः कुर्याद् देवताभावसिद्धये ।
अष्टोत्तरशतं हुत्वा सम्पाताज्यं विनिःक्षिपेत् ॥
होमकर्मण्यसक्तश्चेद् द्विगुणं जपमाचरेत् ।
त्वं माले सर्वलोकानां सर्वसिद्धिप्रदा मता ॥
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ।
इत्युक्त्वा परिपूज्याऽथ गोपयेद् यत्नतो गृही ॥

शैवागमे—गोपुच्छसदृशी कार्या एकाग्रीवा समेरुका ।

उत्तरतन्त्रे—एको मेरुस्तत्र देयः सर्वेभ्यः स्थूलसम्भवः ।
विन्यसेत् क्रमतस्तस्मात् सर्पाकारा च सा यतः ॥

ब्रह्मग्रन्थियुतं कुर्यात् प्रतिबीजं यथाविधि ।
अथवा ग्रन्थिरहितं दृढरज्जुसमन्वितम् ॥
त्रिरावृत्त्याथ मध्येन चार्धावृत्त्याऽन्तदेशतः ।
ग्रन्थिः प्रदक्षिणावर्त्तो ब्रह्मग्रन्थिरितीरितः ॥

रुद्राक्षे तु विशेषः—कालोत्तरे उक्तः—

स्कन्द उवाच—

देव देव महादेव सृष्टिस्थितिलयेश्वर ।
रुद्राक्षैर्जपमाला तु कथं कुर्यान् महेश्वर ॥
संस्कारश्च कथं नाथ कर्त्तव्यः कीदृशं फलम् ।

ईश्वर उवाच—

शृणु षण्मुख वक्ष्यामि रुद्राक्षैः क्रियते यथा ।
जपमाला विधानेन येन सा जपसिद्धिदा ॥
एकवक्त्रैर्द्विवक्त्रैश्च चतुर्वक्त्रैश्च पञ्चभिः ।
षड्वक्त्रैर्वाथ कर्त्तव्या मिथो मिश्रांस्तु वर्जयेत् ॥
मुखे मुखं तु कर्त्तव्यं पुच्छं पुच्छे तु योजयेत् ।
धात्रीफलप्रमाणेन श्रेष्ठमेतदुदाहृतम् ॥
वदराण्डप्रमाणेन न कार्यं मध्यमाधमे ।
नवत्रितन्तुना चैनद् ग्रथनीयं समं स्पृशन् ॥
अस्योर्ध्ववक्त्रं मेर्वाख्यं कर्त्तव्यं तन्न लङ्घयेत् ।
क्षालयेत् सद्योजातेन वामदेवेन घर्षयेत् ॥
धूपयेदथ घोरेण लेपयेत् तत्पुरुषेण तु ।
मन्त्रयेत् पञ्चमेनैव प्रत्येकं तु शतं शतम् ॥
मेरुं च पञ्चमेनैव तथा घोरेण मन्त्रयेत् ।
मुद्राष्टकं दर्शयित्वा प्रत्येकं पूजयेत् क्रमात् ॥
ग्रथितं पञ्चभिः पूज्यं पूर्ववच्च यथाविधि ।
रुद्राक्षाणामयं प्रोक्तः संस्कारः श्रुतिनोदितः ॥
इतरेषु च तन्त्रोक्तः कर्त्तव्यो गुहसाधकैः ।

क्षालयेत् पञ्चगव्येनेति शेषः ।

क्षालयेत् पञ्चगव्येन सद्योजातेन सज्जलैः ।

इति वचनात् । घर्षयेच्चन्दनागुरुगन्धाद्यैरिति । लेपयेच्चन्दनसौगन्धिककस्तूरी-

कुङ्कुमादिभिरिति। मुद्राष्टकमावाहन्यादिकम्। अनन्तरं पूजाभिधानात्। अन्यमण्यादिष्वप्ययं संस्कार इति वदन्ति। प्रकारान्तरमाह योगिनीतन्त्रे—

उक्तेष्वृक्षेष्वुक्तमन्त्रैर्ग्रथितां साधकोत्तमः।
मालां निधाय वै पात्रे क्वचिद् गन्धादिचर्चिताम्॥
भूतशुद्ध्यादिकां पूजां समाप्य तत्र पूजयेत्।
गणेशसूर्यविष्ण्वीश-दुर्गाश्चावाह्य पूजयेत्॥

तन्त्रमालायाम्—

पञ्चगव्येन तां सिक्त्वा ह्रौंमन्त्रेण च मन्त्रयेत्।
तस्मादुत्तोल्य तां मालां स्वर्णपात्रे निधाय च॥
पयो-दधि-घृत-क्षौद्र-शर्कराद्यैरनुक्रमात्।
ततो धूपान्तरैः कृत्वा पञ्चामृतविधिं बुधः॥
क्रमात् तत्रैव संस्थाप्य स्नापयेच्छीतलोदकैः।
ततश्चन्दनसौगन्धिकस्तूरीकुङ्कुमादिभिः॥
तामालिप्य जपेद् ह्सौर्मन्त्रमष्टोत्तरं शतम्।
तस्यां नवग्रहान् पङ्क्तिं दिक्पालांश्च प्रपूजयेत्॥
ततः सम्पूज्य च गुरुं गृह्णीयान् मालिकां शुभाम्।

भैरवीतन्त्रे—आदौ गणपतिं देवं सूर्यं विष्णुमुमापतिम्।
दुर्गां च पूजयेद् विद्वान् मालायां सुसमाहितः॥
पञ्चगव्ये क्षिपेन् मालां प्रासादेनाऽभिमन्त्रयेत्।
उत्तोल्य च ततो मालां स्थापयेद्धेमपात्रके॥
पञ्चामृतेन संस्थाप्य शीतलेन जलेन च।
चन्दनेन सुगन्धेन कस्तूरीकुङ्कुमादिभिः॥
अभिषेकं ततः कृत्वा मन्त्रेणाऽनेन मन्त्रवित्।
प्राणं जीवसमारूढमौकारस्वरभूषितम्॥
बिन्दुनादसमायुक्तं मन्त्रराजं प्रविन्यसेत्।
नवग्रहान् पूजयित्वा ततो दिक्पालपूजनम्।
तिलेन घृतयुक्तेन शक्तितो होमयेत् ततः।

प्रविन्यसेत् अष्टोत्तरशतकृत्वः। प्राणो हकारः। जीवः सकारः।

कुब्जिकातन्त्रे—शिल्पिनं पूजयेदादौ वस्त्रगन्धानुलेपनैः।
संहृष्टः कारयेन् मालां विशुद्धां वर्णरूपिणीम्॥

यथायोग्यं वेधवतीं मालां कुर्याद् विचक्षणः ।

वर्णरूपिणीं पञ्चाशद्बीजरूपात्मिकां पराम् ।

वर्णमानेन सा कार्या पञ्चगव्ये त्र्यहं क्षिपेत् ।
सूत्रं वापि चतुर्थेऽह्नि क्षालयेदत्र मन्त्रकैः ॥
समानवर्णसूत्रेण ग्रथयेत् हृदयाणुना ।
सुवर्णादिगुणैर्वापि ग्रथयेत् साधकोत्तमः ।
ब्रह्मग्रन्थिं ततो दद्यान् नागपाशमथापि वा ॥
कवचेन च ग्रथ्नीयान् मालां ध्यानपरायणः ।
सर्वशेषे ततो मेरुं सूत्रद्वयसमन्वितम् ॥
ग्रथयेत् तारयोगेन बध्नीयात् साधकोत्तमः ।
एवं निष्पाद्य देवेशि प्रतिष्ठां च समाचरेत् ॥
स्थण्डिले मण्डलं कृत्वा यथाभागविधिक्रमात् ।
पूजयित्वा यथान्यायमिष्टदेवमनुक्रमात् ॥
न्यायपूर्वं जपेन् मन्त्रमष्टोत्तरसहस्रकम् ।
जुहुयाच्च दशांशेन यस्य देवस्य यत् प्रियम् ॥
ततो मण्डलमध्ये तु तां मालां स्थापयेद् बुधः ।
अस्त्रमन्त्रं ततो न्यस्य देववत् परिचिन्तयेत् ॥
अभेदरूपमासाद्य मालां कुर्यात् तथात्मिकाम् ।
ततो बलिं यथान्यायं दद्यात्तैः साधकोत्तमः ॥
एवं प्रतिष्ठामापाद्य मालायामिष्टदेवताम् ।
आचार्यं पूजयेन् मन्त्री शिल्पिनं च यथाविधि ॥
नान्यमन्त्रं जपेत् तत्र यदीच्छेत् सिद्धिमात्मनः ।

अस्त्रादिर्जप्तव्यमन्त्रस्य ग्राह्यः । बलिं मालायाः । तैर्होमद्रव्यैः । तथोत्तरतन्त्रे—

दृढं सूत्रं नियुञ्जीत जपे त्रुट्यति नो यथा ॥
जीर्णे सूत्रे पुनः सूत्रं योजयित्वा शतं जपेत् ॥

शैवागमे—यदा संत्रुट्यते माला ग्रन्थयित्वा च पूर्ववत् ।
प्रतिष्ठितायां तस्यां तु मन्त्रं जप्यादनन्यधीः ॥

नारदीये—अक्षसूत्रं तु निपतेद् भूमौ चेद् कुर्वतो जपम् ।
उद्धारं तस्य कुर्वीत जापको हृदयेन तु ॥

हृदयेन नम इति मन्त्रेण । रुद्रयामले—

नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्न च पुष्पकैः।
न चन्दनैर्मृत्तिकया जपसंख्यां तु कारयेत्॥
लाक्षा-कुशीद-सिन्दूरं गोमयं च करीषकम्।
विलोड्य गुटिकां कृत्वा जपसंख्यां तु कारयेत्॥
नारदीये—अनामिकायां संवेश्य करयोरुभयोरपि।
जपं कुर्वन्न कुर्वीत संख्याग्रन्थिकबन्धनम्॥
कुरुते यः क्षरेदस्य न कृते तु शतं जपेत्।

## अथ सम्प्रदायसिद्धो रहस्यमालासंस्कारविधिः

ॐ ह्रीं श्रीं ह्रीं क्लीं हूं फट् स्वाहा इति मन्त्रेण सप्तधाभिमन्त्र्य चषके निक्षिपेत्। तत आवाहनादिमन्त्रादिभिर्भगवतीमावाह्य सपरिवारां षोड़शोपचारैरभ्यर्च्य मूलमावर्त्य तार्त्तीयं बीजमनुस्मरन् धेनुमुद्रयाऽमृतीकृत्य कवचेनाऽवगुण्ठ्य महामुद्रया तदाच्छादयन् देवीरूपां तां मालां ध्यायन् बिन्दुप्रक्षेपं कुर्यात्। तत्र मन्त्रः—ॐ ह्रीं स्वाहा ॐ हूं स्वाहा ॐ फट् स्वाहा ॐ स्त्रीं स्वाहा ॐ ह्रीं हूं स्वाहा ॐ फट् स्वाहा। अनेन शतधा बिन्दुप्रक्षेपं कुर्यात्। कस्तूरिकागुरुसुधाकरैर्धूपादिकं च दत्त्वा चषकादुत्तार्य एभिर्मन्त्रयेत्। तत्र मन्त्रः—ॐ ह्रीं श्रीं महावज्रिणि महाघोरकर्कशमहास्थिमण्डले प्रविश सर्वसिद्धिं प्रयच्छ। ॐ हूं ह्रीं ह्रीं स्वाहा महाकपालिनि महाघोररूपे स्वाहा। ॐ ह्रीं ह्रीं हूं फट् स्वाहा। दूर्वाक्षतैरभ्यर्च्य कन्दर्पबीजेनोद्दीपनं कृत्वा षोड़शोपचारैरभ्यर्च्य मातृकामन्त्रेण संदीप्य हूंकारेण वेष्टयित्वा बलिं दद्यात्। तद् यथा—ॐ ह्रीं ह्रीं हूं ॐ हूं हूं ॐ हूं फट् हूं ॐ ॐ हूं स्वाहा ॐ हूं महायोगिनि त्रिभुवनतारिणि महाशङ्खास्थिमालामध्ये निवासं कुरु सर्वसिद्धिं देहि देहि सुरामांसोपहारान् गृह्ण गृह्ण गृह्णापय गृह्णापय ह्रीं स्त्रीं हूं फट् स्वाहा। अनेन यथोदितद्रव्येण बलिं दत्त्वा देवीं विसर्ज्य निभृतस्थाने मालां धारयेदिति। मन्त्रतन्त्रप्रकाशे—

अष्टोत्तरसहस्रं तु कृत्वान्तर्यागमादरात्।
जपेत् प्रतिदिनं यत् तु नित्य एष जपः स्मृतः॥
उत्तरतन्त्रे—न जपेत् त्रिशतान् न्यूनं साधकस्तु कदाचन।
योगिनीतन्त्रे—अष्टोत्तरशतं वापि जपान्ते शिरसि क्षिपेत्।
त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम॥
शिवं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा।
शैवागमे—अष्टोत्तरसहस्रं तु तदर्धं त्रिशतं तु वा।

अष्टोत्तरशतं वापि जपेन् नित्यमतन्द्रितः ॥

जपश्च ध्यानपूर्वकं कर्त्तव्यः। तदुक्तं नीलतन्त्रे—

मन्त्रध्यानं प्रवक्ष्यामि जपात् सर्वज्ञदायकम्।
मन्त्रध्यानान् महेशानि सिध्यते ब्रह्महा यतः ॥
मूलचक्रे तु हृल्लेखां सूर्यकोटिसमप्रभाम्।
स्वाधिष्ठाने पीतवर्णं द्वितीयं परिभावयेत् ॥
नाभौ जीमूतवर्णाभं कूर्चबीजं महाप्रभम्।
मन्त्री चन्द्रप्रतीकाशं योगिभिर्दृष्टपूर्वकम् ॥
कूर्चबीजं हृदि ध्यायेत् कालाग्निसदृशप्रभम्।
अथवा पूर्णचन्द्राभं कूर्चं मूर्ध्नि सुधाप्रभम् ॥
तत्प्रभापटलैर्जिह्वां प्रदीप्तां च विभावयेत्।
मूलादिब्रह्मरन्ध्रान्तं सर्वां विद्यां विभावयेत्।
सूर्यकोटिप्रतीकाशां योगिभिर्दृष्टपूर्विकाम्।

हृल्लेखा मायाबीजम्। अन्यत्रापि—

स्थानस्था वरदा मन्त्रा ध्यानस्थाश्च फलप्रदाः।
ध्यानस्थानविनिर्मुक्ताः सुसिद्धा अपि वैरिणः ॥
प्रसङ्गेनैव तत्स्थानं कथयामि न संशयः।
सकलं निष्कलं सूक्ष्मं तथा सकलनिष्कलम् ॥
कलाभिन्नं कलातीतं षोढामन्त्रं शिवोऽब्रवीत्।
सकलं ब्रह्मरन्ध्रस्थं तदधो विद्धि निष्कलम् ॥
बिन्दुस्थितं कलाभिन्नं कलातीतं तदूर्ध्वतः।
कला कुण्डलिनी सैव नादशक्तिः शिवोदिता ॥
एतत्स्थानस्थिता मन्त्राः स्थानस्थाः परिकीर्त्तिताः।
मनसा मनवो ध्येयाः कुण्डलिन्यां समाहितैः ॥
ततस्तां भावयेद् बिन्दौ ध्यानस्थाः परिकीर्त्तिताः।

जपलक्षणमुक्तं पुरश्चरणचन्द्रिकायाम्—

जपः स्यादक्षरावृत्तिस्तस्य भेदान् ब्रवीम्यहम्।
जपश्च द्विविधः प्रोक्तो वाचिको मानसस्तथा ॥
आद्योऽप्युपांशुरुच्चैश्च द्विविधः परिकीर्त्तितः।
द्वितीयोऽथ द्विधा ज्ञेयो जिह्वाचित्तप्रभेदतः ॥

मन्त्रमुच्चारयेद् वाचा स उक्तो वाचिको जपः ।
शनैरुच्चारयेन् मन्त्रमीषदोष्ठौ प्रचालयेत् ॥
किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ।
जिह्वाजपः स विज्ञेयः केवलं जिह्वया तु यः ॥
धिया यदुच्चरेन् मन्त्रं स उक्तो मानसो जपः ।
उच्चैर्जपाद् विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ॥
जिह्वाजपः शतगुणः सहस्रो मानसो जपः ।
देवतां हृद्गतां कृत्वा हृदयं च स्थिरं निजम् ॥
शिवादींश्च गुरून् नत्वा जपेन् मन्त्रं समाहितः ।
शनैः शनैरविस्पष्टं न द्रुतमविलम्बितम् ॥

तथा—उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः ।
अप्रावृतकरोऽशुद्धः प्रलपन् न जपेन् मनुम् ॥
अप्रावृतौ करौ कृत्वा शिरसा प्रवृतोऽपि वा ।
चितां व्याकुलचित्तो वा क्रुद्धो भ्रान्तस्त्वरान्वितः ॥
निरासनः शयानो वा गच्छन्नुत्थित एव वा ।
रथ्यायामशिवस्थाने न जपेत् तिमिरावृते ॥
उपानद्गूढपादो वा यानशय्यागतोऽपि वा ।

न जपेदित्यनुषङ्गः ।

पतितानामन्त्यजानां दर्शने भाषणे श्रुते ।
क्षुतेऽधोवायुगमने जृम्भायां जपमुत्सृजेत् ॥
उत्थायाचम्य तत्प्रान्ते प्राणायामषडङ्गकम् ।
कृत्वाचम्य चरेच्छेषं यद्वा सूर्यादिदर्शनम् ॥

चरेदित्यनुषङ्गः । कालीतन्त्रे—

तेजोमयं जपफलं देव्या हस्ते समर्पयेत् ।
गुह्यातिगुह्यगोप्त्री त्वमिति मन्त्रेण मन्त्रवित् ॥

मन्त्रस्तु—गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे मातस्त्वत्प्रसादान् महेश्वरि ॥

इति तन्त्रान्तरसिद्धः । इमं मन्त्रमुक्त्वा सोमशम्भुः—

भोगश्लोकं पठित्वा च दक्षहस्तेन शम्भवे ।
मूलमन्त्रार्घ्यतोयेन वरहस्ते समर्पयेत् ॥

शम्भवे इत्युपलक्षणम्। या यत्र देवता सा तत्र बोध्या। वरहस्ते प्रधानहस्ते। तेन पुंदेवताया दक्षिणहस्ते स्त्रीदेवताया वामहस्ते समर्पयेदिति। "देवीनां वामहस्ते तु देवानां दक्षिणेऽर्पयेदि"ति यामलवचनात्। शैवागमे—

इत्थं जपं समर्प्याऽथ घण्टावादनपूर्वकम्।
स्तुवीत स्तुतिभिः सम्यक् साधको भक्तिसंयुतः॥

स्तवश्च ब्रह्मसंहितोक्तो ध्यानप्रकरणे प्रोक्तः। कवचं त्रैलोक्यविजयाख्यमग्रे वक्ष्यते। सहस्रनामस्तोत्रं तु रुद्रयामले—

कैलाशनगरे देवं महादेवं महेश्वरम्।
भवानी रहसि प्रीत्या पप्रच्छ वरदायकम्॥

देव्युवाच—कथमीशान सर्वज्ञ लभन्ते शक्तिमुत्तमाम्।
साधकाः सर्वदा येन तन्मे कथय सुप्रभो॥

ईश्वर उवाच—

विना पूजां विना ध्यानं विना जपं विना बलिम्।
लभन्ते येन कल्याणि तन्मे निगदितं शृणु॥
नाम्नां सहस्रं तारायाः कथयिष्याम्यशेषतः।
शृणु देवि सदा भक्त्या भक्तानां परमं हितम्॥
विना पूजोपचारेण विना जपेन यत् फलम्।
तत् फलं सकलं देवि कथयिष्यामि तच्छृणु॥

ॐ अस्याः श्रीतारादेव्या भक्तिकुलसर्वस्वनामस्तोत्रस्य श्रीतारादेवता सर्वकामार्थे जपे विनियोगः।

तारा रात्रिर्महारात्रिः कालरात्रिः कपालिनी।
कालिका कामदा माया महामाया महोत्सवा॥
महादानरता यज्ञा यज्ञोत्सवविभूषिता।
चन्द्रवक्त्रा चकोराक्षी चारुनेत्रा सुलोचना॥
त्रिनेत्रा पद्मपत्राक्षी कुरङ्गाक्षी मनोहरा।
ब्राह्मी नारायणी ज्योत्ना चारुकेशी सुलोचना॥
वाराही वारुणी विद्या महाविद्या महेश्वरी।
पिङ्गा कुञ्चितकेशी च महायज्ञस्वरूपिणी॥
गौरी चम्पकवर्णा च कृशाङ्गी कूलपूजिता।
सर्वानन्दस्वरूपा च सर्वसङ्कटतारिणी॥

नित्या नित्यमयी नन्दा भद्रा नीलसरस्वती ।
गायत्री सुचरित्रा च कौलव्रतपरायणा ॥
हिरण्यगर्भा भूगर्भा विश्वगर्भा यशस्विनी ।
हिमवत्तनया दिव्या दिव्याम्बरविभूषणा ॥
जगन्माता जगद्धात्री जगतामुपकारिणी ।
ऐन्द्री सौम्या तथा याम्या वारुणी वायवी तथा ॥
आग्नेयी नैर्ऋती चैव ऐशानी चण्डिकाऽम्बिका ।
सुमेरुतनया वन्द्या सर्वेषामुपकारिणी ॥
ललज्जिह्वा सरोजाक्षी मुण्डस्रजविभूषणा ।
सर्वानन्दमयी सर्वा सर्वानन्दस्वरूपिणी ॥
धृतिर्मेधा तथा लक्ष्मीः श्रद्धापन्नगशायिनी ।
रुक्मिणी जानकी दुर्गा सत्या सत्यवती रतिः ॥
कामाख्या मोक्षदानन्दा नारसिंही सरस्वती ।
महादेवरता चण्डी चण्डदोर्दण्डखण्डिनी ॥
दीर्घकेशी सुकेशी च पिङ्गकेशी महत्कचा ।
भवानी भवपत्नी च भवभीतिहरा शची ॥
पौरन्दरी तथा विष्णोर्जाया माहेश्वरी परा ।
सर्वेषां जननी नित्या चार्वङ्गी दैत्यनाशिनी ॥
घोररूपा महेशानि कामिनी वरवर्णिनी ।
महाविद्या महामाया महामेधा महोत्सवा ॥
विरूपा विश्वरूपा च मृडानी मृडवल्लभा ।
महापुण्यप्रदा भीमा मधुकैटभनाशिनी ॥
कोटिचन्द्रप्रतीकाशा शतसूर्यसमप्रभा ।
जह्नुकन्या मनोज्ञा च पार्वती हरवल्लभा ॥
कामरूपा महेशानी नित्योत्साहा मनस्विनी ।
वैकुण्ठनाथपत्नी च तथा शङ्करवल्लभा ॥
काश्यपी कमला कृष्णा कञ्जपत्रायतेक्षणा ।
माहेश्वरी वृषारूढा पूर्णचन्द्रनिभानना ॥
मान्या मानवती धन्या कन्या हिमगिरेस्तथा ।
अपर्णा पद्मपत्राक्षी नागयज्ञोपवीतिनी ॥

महाशङ्खधरा कान्ता कमनीया नगात्मजा ।
ब्रह्माणी वैष्णवी शम्भोर्जाया गङ्गा जलेश्वरी ॥
भागीरथी मनोबुद्धिनित्यानन्दमयी सदा ।
हरप्रिया गिरिसुता हरपत्नी तपस्विनी ॥
महाव्याधिहरा देवी शुम्भासुरनिषूदिनी ।
महापुण्यप्रदा भीमा मधुकैटभनाशिनी ॥
शङ्खिनी चक्रिणी धात्री हस्ते पुस्तकधारिणी ।
चामुण्डा चपला तुङ्गा भद्रा दैत्यनिकृन्तनी ॥
शान्तिर्निद्रा महानिद्रा गुह्यनिद्रा च रेणुका ।
कौमारी कुलजा कुन्ती कौलव्रतपरायणा ॥
नवदुर्गा सदाचारा द्रौपदी द्रुपदात्मजा ।
सृष्टिः सर्वाद्यकालीना निशुम्भप्राणनाशिनी ॥
पद्मिनी वसुधा पृथ्वी रोहिणी विन्ध्यवासिनी ।
शिवा शक्तिर्महाशक्तिः शाङ्करी शक्तिवल्लभा ॥
दैत्यप्राणहरा दात्री दया दामोदरप्रिया ।
क्षान्तिः क्षेमकरी बुद्धिर्बौद्धाचारपरायणा ॥
श्रीविद्या भैरवी भव्या भारती भयनाशिनी ।
तापसी तारिणी तीक्ष्णा तीक्ष्णदैत्यविनाशिनी ॥
दात्री दानपरा काली दुर्गा दैत्यविनाशिनी ।
पद्मा पद्मावती हृष्टा तुष्टा पुष्टा तथोर्वशी ॥
वज्रिणी वज्रहस्ता च तथा नारायणी शिवा ।
खण्डिनी खड्गहस्ता च कर्तृखर्परधारिणी ॥
देवाङ्गना देवमान्या देवकन्या पुलोमजा ।
सुखिनी सुखदात्री च सर्वसौख्यविवर्धिनी ॥
शीला शीलावती सूक्ष्मा सूक्ष्माकारा वरप्रदा ।
वरेण्या वरदा वाणी ज्ञानिनी ज्ञानदाऽमला ॥
उग्रकाली महाकाली भद्रकाली च दक्षिणा ।
भृगुवंशसमुद्भूता भार्गवी भृगुवल्लभा ॥
शूलिनी शूलहस्ता च मयूरवरवाहना ।
महामांसरता रक्ता रक्तखर्परधारिणी ॥

रक्ताम्बरधरा रामा रमणी सुरनायिका ।
परमानन्ददा ज्येष्ठा योगिनीगणसेविता ॥
अम्बा जाम्बवती सत्या सत्यभामा नगात्मजा ।
रौद्री रौद्रस्वना रौद्रा रौद्रदैत्यविनाशिनी ॥
कुमारी कौशिकी विद्या कालदैत्यविनाशिनी ।
शम्भुपत्नी शम्भुरता शम्भुजाया महोदरी ॥
शिवपत्नी शिवरता शिवजायाम्बिका तथा ।
हरपत्नी हररता हरजाया च शूलिनी ॥
मदनान्तककान्ता च मदनान्तकवल्लभा ।
गिरिजा गिरिकन्या च गिरिशस्य च वल्लभा ॥
भूतभव्या भवा पुष्टा पावनी परिपालिनी ।
अदृश्याऽव्यक्तरूपा च इष्टा स्वेष्टप्रवर्धिनी ॥
अच्युता प्रच्युता प्राणा प्राणदा वासवेश्वरी ।
अपांनिधिसमुद्भूता धारिणी च प्रतिष्ठिता ॥
उद्भवा क्षोभणा क्षेमा श्रीगर्भा परमेश्वरी ।
कराला पुष्टदेहा च कारिणी कञ्जलोचना ॥
शरण्या कमला प्रीता विमलानन्दवर्धिनी ।
कपर्दिनी कल्पनाभा सुमनानन्दवर्धिनी ॥
उदीर्णभूषणा भव्या सुरसेना सुरेश्वरी ।
श्रीमती शिशिरानन्दा शिशिराचलकन्यका ॥
सुरमान्या सुरश्रेष्ठा ज्येष्ठा प्राणेश्वरी स्थिरा ।
तमोघ्नी ध्वान्तसंहन्त्री प्रयतात्मा पवित्रता ॥
प्रद्योतिनी रथारूढा सर्वलोकप्रकाशिनी ।
मेधाविनी महावीर्या हंसी संसारतारिणी ॥
प्रणतप्राणिनामार्त्तिहारिणी दैत्यनाशिनी ।
डाकिनी शाकिनी शीला वरखट्वाङ्गधारिणी ॥
कौमुदी कुमुदा कुन्दा कौलिका कुलजात्मजा ।
गर्विता गुणसम्पन्ना नगजा खगवाहिनी ॥
चन्द्रानना महोग्रा च चारुमूर्धजशोभिता ।
मनोज्ञा माधवी मान्या माननीया महद्गुणा ॥

ज्येष्ठा मघा च पुष्या च धनिष्ठा पूर्वफाल्गुनी।
रक्तबीजादिहन्त्री च रक्तबीजविनाशिनी ॥
चण्डमुण्डारिहन्त्री च चण्डमुण्डविनाशिनी।
कर्त्री हर्त्री सुकर्त्री च विमलामलवाहिनी ॥
निर्मला भास्करी भीमा महिषासुरघातिनी।
कालिन्दी यमुना वृद्धा युवती बालकी तथा ॥
कौशल्या कौमुदी माद्री कन्धती चाप्यरुन्धती।
पुरारिगृहिणी पूर्णा पूर्णरूपा यशस्विनी ॥
सम्पूर्णचन्द्रवदना बालचन्द्रसमप्रभा।
रेवती रमणी चित्रा विचित्राम्बरभूषणा ॥
वीणा वीणावती विद्या यशोदा च यशस्विनी।
नवपुष्पसमुद्भूता नवपुष्पासवोत्सुका ॥
नवपुष्पस्रजा माला माल्यभूषणशोभिता।
नवपुष्पसमप्राणा नवपुष्पसमुत्सुका ॥
नवपुष्पात्मका पुष्पा पुष्पस्रजविभूषणा।
नवपुष्पगुणोपेता नवपुष्पोपशोभिता ॥
नवपुष्पप्रिया प्रीता प्रेममण्डलमध्यगा।
कुलशास्त्रप्रदीप्ता च कुलमार्गप्रवर्धिनी ॥
श्मशानभैरवी कालभैरवी भैरवीप्रिया।
आनन्दभैरवी ध्यानभैरवी पुरभैरवी ॥
महाभैरवपत्नी च भैरवी लोकभैरवी।
सुविद्या भैरवी नीतिर्भैरवी गुणभैरवी ॥
सम्मोहभैरवी पुष्टिभैरवी तुष्टिभैरवी।
सृष्टिस्थितिभैरवी च भैरवी स्थितिभैरवी ॥
पुण्डरीकाक्षगृहिणी पुण्डरीकाक्षवल्लभा।
आनन्दसुन्दरी वीरसुन्दरी स्थितिसुन्दरी ॥
आनन्दसुन्दरी कालसुन्दरी पुरसुन्दरी।
या माया सुन्दरी सौम्या सुन्दरी लोकसुन्दरी ॥
या विद्या सुन्दरी नीतिसुन्दरी गुणसुन्दरी।
मल्लिकाहाररसिका मल्लिकाहारशोभिता ॥

नव चम्पकवर्णाभा नागकेशरशोभिता ।
जवाकुसुमसङ्काशा जवाकुसुमशोभिता ॥
प्रिया प्रियङ्करी विष्णोर्दानवेन्द्रविनाशिनी ।
ज्ञानेश्वरी ज्ञानदात्री ज्ञानानन्दप्रदायिनी ॥
गुणगौरवसम्पन्ना गुणशीलसमन्विता ।
रूपयौवनसम्पन्ना रूपयौवनशोभिता ॥
गुणाश्रया गुणवती गुणगौरवसुन्दरी ।
लसत्तारापतिप्रख्या ताटङ्कद्वयशोभिता ॥
वृक्षमूलस्थिता देवी वृक्षशाखोपरिस्थिता ।
वृक्षमध्याग्रनिलय वृक्षमध्यानिवासिनी ॥
कुमुद्वती कुमुदिनी कुमुदा कुमुदाकरा ।
कुसुम्भरूपरुचिरा कुसुम्भारुणमस्तका ॥
स्वयम्भूपुष्पसङ्काशा स्वयम्भूपुष्पधारिणी ।
स्वयम्भूपुष्पसरसा मग्ना ध्यानवती सदा ॥
शुक्रप्रिया शुक्ररता शुक्रमज्जनतत्परा ।
पर्णाऽपर्णा सुपर्णा च निष्पन्ना पापनाशिनी ॥
मदिरा मोदसम्पन्ना मदिरा मोदधारिणी ।
सर्वाश्रया सर्वगुणानन्दकन्दलकारिणी ॥
नारीपुष्पसमप्राणा नारीपुष्पसमुत्सुका ।
नारी पुष्पोत्सवा नारी नारीपुष्परता मृगी ॥
चतुर्भुजा दशभुजा अष्टादशभुजा तथा ।
द्विभुजा षड्भुजाग्रारपङ्कजा परिसंस्थिता ॥
कौवेरी कौरवी कौर्व्या कुरुकुल्ला कपालिनी ।
विपरी कदली जङ्घा रम्भोरूरामवल्लभा ॥
निशाचरी निशामूर्त्तिर्निशाचन्द्रसमप्रभा ।
चान्द्री चन्द्रकला चन्द्रा चारुचन्द्रसमप्रभा ॥
स्रोतस्विनी स्रोतवती सर्वदुःखार्तिनाशिनी ।
सर्वाधारा सर्वमयी सर्वानन्दप्रवर्धिनी ॥
सर्वचक्रेश्वरी सर्वा सर्वमन्त्रमयी सदा ।
सहस्रनयनप्राणा सहस्रनयनप्रिया ॥

सहस्रशीर्षा सुसमा सदम्भा सर्वभक्षिका ।
षष्ठिका षट्सुचक्रस्था षड्वर्गफलदायिनी ॥
षड्विंशपद्ममध्यस्था षड्विंशद्दलमध्यगा ।
हकारवर्णनिलया हकाराक्षरभूषिता ॥
हारिणी हारवनिता हारहीरकशोभिता ।
ह्रींकारबीजसहिता ह्रींकाररूपशोभिता ॥
कन्दर्पस्य कला कुल्या कौलिनी कुलतर्पिता ।
केतकी कुसुमप्राणकेतकी कृतभूषणा ॥
केतकीकुसुमासक्ता केतकीपरिभूषिता ।
कर्पूरपूर्णवदना कलानाथसमप्रभा ॥
कला केलिप्रिया कीर्णकदम्बकुसुमोत्सुका ।
कादम्बिनी करिगतिः कुञ्जरेश्वरगामिनी ॥
खर्वा च खञ्जनद्वन्द्वलोचना खड्गभूषिता ।
खद्योत इव दुर्लक्ष्या खद्योत इव चञ्चला ॥
गया गदागुणप्रीता गीतवाद्यप्रिया गतिः ।
गणेश्वरी गणेज्या च गणपूज्या गणप्रदा ॥
गुणाढ्या गुणसम्पत्तिर्गुणदात्री गुणात्मिका ।
गुर्वी गुरुतरा गौरी गाणपत्यफलप्रदा ॥
घर्मांशुगृहिणी घर्मा घर्मसिन्धुनिवासिनी ।
घर्घरा घोरवदना घोरदैत्यविनाशिनी ॥
घोषा घोषवती घोष्या घोषपुत्री घनालया ।
चर्वरी चारुनयना चारुवक्त्रा चतुर्गुणा ॥
चतुर्वेदमयी चूर्ण-चन्द्रास्या चतुरानना ।
चलच्चकोरनयना चलत्खञ्जनलोचना ॥
चलदम्भोजवदना चलदम्भोजशोभिता ।
छात्री छत्रप्रिया छत्रा छत्रचामरशोभिता ॥
छिन्ना छर्दिच्छिन्नशिरा छिन्ननासा छलान्विता ।
छलाद्या छलसन्त्रस्था छलरूपा छलच्छिरा ॥
छकारवर्णनिलया छकाराद्या छलप्रिया ।
छद्मिनी छद्मनिरता छद्माछद्मनिवासिनी ॥

जगन्नाथप्रिया जीवा जगन्नाथरता जरा ।
जीर्णा जीमूतवनिता जीमूतैरुपशोभिता ॥
जामातृवरदा जृम्भा जमलार्जुनधारिणी ।
जरा जरान्विता जृम्भा जम्भारातिवरप्रदा ॥
जिता जयित्री जयदा जयदात्री जयप्रदा ।
झल्लरा झीत्कृतिर्झिल्ली झरी झर्झरिका तथा ॥
टाङ्कारकारिणी टीत्काकारिणी टङ्कधारिणी ।
ठक्कुराज्ञा डमरुकरा डात्कारी डमरुप्रिया ॥
ढक्कारवाद्यढक्कारी तुलसी तालभक्षिका ।
तुला तौलिनिका तीर्णा तारा तारिणीका तथा ॥
तन्त्रविज्ञा तन्त्ररता तन्त्रविद्या च तन्त्रदा ।
तान्त्रिका तन्त्रगोप्या च तन्त्रसारा च तन्त्रपा ॥
तन्त्रधात्री तन्त्रकारी तन्त्रनारीरतातुरा ।
तपःप्रभावा तन्त्रज्ञा तन्त्रसारफलप्रदा ॥
तपस्या तौलिनी तार्त्ती तार्त्तीया तुलसी तुषा ।
तुषारकरपूर्णा स्यात् तुषारकरमण्डिता ॥
तुहिनांशुसमाभासा तुहिनांशुसमप्रभा ।
तुषारकरतुल्याङ्गी तुषारकरसुन्दरी ॥
तुषारधामतुल्यास्या तुषारांशुसमानना ।
तुहिनाद्रिसुता तार्क्षा तालाङ्गी तालवर्जिता ॥
तारस्वरेण सहिता तारस्वरविभूषिता ।
थकारकूटनिलया थकाराक्षरमालिनी ॥
दयावती दीनरता दुःखदारिद्र्यनाशिनी ।
दौभार्ग्यदुःखदलिनी दौर्भाग्यापदनाशिनी ॥
दुहिता दीनबन्धुश्च दानवेन्द्रविमर्दिनी ।
दानदात्री दानपरा दानसम्मानतोषिता ॥
दाल्म्यादिसेविता दान्ता दामोदरपरायणा ।
दधीची वरदा दुष्टा दानवेन्दविनाशिनी ॥
दीर्घनेत्रा दीर्घकचा दीर्घनासा च दीर्घिका ।
दारिद्र्यदुःखशमनी दुष्टासुरनिषूदिनी ॥

दम्भिका दम्भहा दम्भा दनुजेन्द्रविनाशिनी ।
धनधान्यप्रदा धन्या धनेश्वरवरप्रदा ॥
धर्मिणी धर्मिका धर्म्या धर्माधर्मप्रवर्धिनी ।
धर्मेश्वरी धर्मदात्री धर्मानन्दप्रवर्धिनी ॥
धनाध्यक्षा धनप्रीता धनाढ्या धनतोषिता ।
धीरा धैर्यवती धृष्णा धवलाम्भोजसन्निभा ॥
धरिणी धारिणी धात्री धुरीणा धवलास्पदा ।
धार्मिका धर्मसहिता धर्मनिन्दकवर्जिता ॥
नवीना निरजा निम्ना निम्ननाभिर्नगेश्वरी ।
नूतनाम्भोजनयना नवीनाम्भोजसुन्दरी ॥
नागरी नागराजेज्या नागराजसुता नगा ।
नागराजपतिर्नग्ना नागराजविभूषिता ॥
नगेश्वरी नगारूढा नगराजकुलेश्वरी ।
नवीनेन्दुकलानन्दा नन्दीकेश्वरवल्लभा ॥
नीरजा नीरजाक्षी च नीरजद्वन्द्वलोचना ।
नीरसूता नीरभवा नीरनिर्मलदेहिनी ॥
नागयज्ञोपवीताढ्या नागयज्ञोपवीतिका ।
नागकेसरसन्तुष्टा नागकेसरमालिनी ॥
नवीनकेतकीकुन्दमन्दारस्रजभूषिता ।
नायिका नायकप्रीता नायकप्रेमतोषिता ॥
नायकप्रेमसहिता नायकप्रेमतोषिता ।
नायकानन्दनिलया नायकानन्दकारिणी ॥
नर्मकर्मरता निद्रा नर्मकर्मपरायणा ।
नर्मकर्मप्रिया नर्मा नर्मधर्मपरायणा ॥
नर्मप्रीता नर्मरता नर्मध्यानपरायणा ।
नर्मकर्मैकसहिता नर्मकर्मैकपालिका ॥
नरनारीगुणप्रीता नरनारीवरप्रदा ।
नारायणप्रिया निष्का निष्कवर्णा नकारहा ॥
पुष्पप्रिया पुष्परता पौष्पीपानपरायणा ।
पुष्पप्रीता च पुष्पेज्या पुष्पदामविभूषणा ॥

पुण्यदा पूर्णिमा पुण्या पुण्यकोटिफलप्रदा ।
पुराणागमवेद्या च पुराणागमगोपिता ॥
पुराणागमगोप्या च पुराणागमतोषिता ।
पुराणगोचरा पूर्वा पूर्णा प्रोढ़विनाशिनी ॥
प्रह्लादहृदयाह्लादगेहिनी पुण्यचारिणी ।
फाल्गुनी फाल्गुनप्रीता फाल्गुनप्रेमधारिणी ॥
फल्गुफलप्रदा चैव फणिराजविभूषिता ।
फणाकारा फणिप्रीता फणिहारविभूषिता ॥
फणीशकृतसर्वाङ्गभूषणा फणिवाहिनो ।
फणिप्रीता फणिरता फणिकङ्कणधारिणी ॥
फलदात्री फलासक्ता फलाभरणभूषिता ।
फकारकूटसर्वाङ्गी फाल्गुनानन्दवर्धिनी ॥
वासुदेवरता विज्ञा विज्ञविज्ञानकारिणी ।
वीणावती बलाकीर्णा बालपीयूषरोचिषा ॥
बाला वसुमती विद्या विद्याहारविभूषिता ।
विद्यावती वैद्यपदा प्रीता वैवस्वती बलिः ॥
वाणी विलासकरणी वराङ्गस्था वरानना ।
विष्णोर्वक्षस्थलस्था च वाग्वती बिन्ध्यगेहिनी ॥
निवारतरुसंस्था च नीवारकुसुमोत्सुका ।
भीतिहा भयदा भानोरंशुजालसमप्रभा ॥
भार्गवेज्या भृगोः पूज्या भारद्वाजनमस्कृता ।
भीतिहा भयसम्पन्ना भीमाकाराभ्रसुन्दरी ॥
मायाधरी मानरता मानसम्मानतत्परा ।
माधवानन्ददा माध्वी मदिरा मदिरेक्षणा ॥
महोत्साहगुणोपेता महती महदद्भुता ।
मदिरा मोदरमिता मदिरामज्जने रता ॥
यशोधरी यशोविद्या यशोदानन्दवर्धिनी ।
यशःकर्पूरधवला यशोदामविभूषणा ॥
यमराजस्वसा योगमार्गानन्दप्रवर्धिनी ।
यादवानन्दकरिणी यादवानन्दवर्धिनी ॥

यज्ञप्रीता यज्ञमयी यज्ञकर्मविभूषणा ।
रामप्रिया रामरता रामतोषणतत्परा ॥
राज्ञी राजकुलेज्या च राजराजेश्वरी रमा ।
रमणी रामणी रम्या रामानन्दप्रदायिनी ॥
रजनीकरपूर्णा स्याद्रक्तोत्पलविलोचना ।
लाङ्गली प्रेमसन्तुष्टा लाङ्गलीप्रणयप्रिया ॥
लाक्षारुणा च ललना लीला लीलावती लया ।
लङ्केश्वरगुणप्रीता लङ्केशवरदायिनी ॥
लवङ्गकुसुमप्रीता लवङ्गकुसुमस्रजा ।
बाला विवस्वद्गृहिणी विवस्वत्प्रेमधारिणी ॥
शवला शरला शल्या शरण्या श्रीः शरद्गुणा ।
षट्कोणचक्रमध्यस्था सम्पदा ह्रीविशोभिता ॥
क्षेमा अम्बा तथाज्ञा च इड़ा ईश्वरवल्लभा ।
उग्राख्या च तथा चोर्णा ऋकारा ऋस्वरोद्भवा ॥
लृकारवर्णकूटस्था लृकारस्वरभूषिता ।
एकारवर्णकूटस्था एकारस्वरभूषिता ॥
एष्या चैष्या तथा चोषा औकाराक्षररूपिणी ।
अंसा अकारवनिता सर्वागमसुगोपिता ॥
य इदं पठते स्तोत्रं प्रत्यहं भक्तिसंयुतः ।
दिवा रात्रौ तथा सन्ध्यासमये स महेश्वरः ॥
स्तवमात्रस्य पाठेन राजा किङ्करतामियात् ।
सर्वागमेषु पूज्यः स्यात् सर्वतन्त्रे स्वयं हरः ॥
शिवस्थाने च शय्यायां शून्यागारे चतुष्पथे ।
यः पठेच्छृणुयाद् वापि स योगी नात्र संशयः ॥
यानि नामानि सन्त्यस्मिन् प्रसङ्गान् मुरवैरिणः ।
ग्राह्यानि तानि कल्याणि नान्यानि तु कदाचन ॥
हरेर्नाम न गृह्णीयान्न स्पृशेत् तुलसीदलम् ।
नान्यचिन्ता प्रकर्त्तव्या नान्यनिन्दा कदाचन ॥
सिन्दूरकरवीराद्यैः पुष्पैर्लोहितकैः शुभाम् ।
योऽर्चयेद् भक्तिभावेन तस्याऽसाध्यं न किञ्चन ॥

वातस्तम्भं जलस्तम्भं गतिस्तम्भं विवस्वतः ।
वह्नेः शैत्यं करोत्येष स्तवस्यास्य च कीर्त्तनात् ॥
स्त्रियमाकर्षयेत् तूर्णमरीन् मर्दयति हठात् ।
मोहयेद् राजदाराश्च देवानपि वशं नयेत् ॥
यः पठेच्छृणुयाद् वापि एकचित्तेन सर्वदा ।
स दीर्घायुः सुखी वाग्मी वाणी तस्य वशङ्करी ॥
सर्वतीर्थाभिषेकेन गयाश्राद्धेन यत् फलम् ।
तत् फलं सकलं तस्य यः पठेदेकचित्ततः ॥
येषामाराधने श्रद्धा ये च साधितुमुद्यताः ।
तेषां कृतार्थं सर्वत्र गतिर्देवि पदालये ॥
ऋतुयुक्तलता मध्ये स्थित्वा दण्डेन ताड़येत् ।
जप्त्वा स्तुत्वा च भक्त्या च गच्छेद् वै तारिकापदम् ॥
अष्टम्यां च चतुर्दश्यां नवम्यां शनिवासरे ।
संक्रान्तौ मङ्गले रात्रावमावस्यायां योऽर्चयेत् ॥
वर्षं वाप्य तु देवेशि तस्याधीनाश्च सिद्धयः ।
मृतपुत्रा च या नारी मृतगर्भा च याऽङ्गना ॥
मृतपत्या च या नारी दौर्भाग्यपदपीड़िता ।
बन्ध्या च काकबन्ध्या च मृतपुत्रा च याऽङ्गना ॥
धनधान्यविहीना च रोगशोकाकुला च या ।
ताभिरेतन् महादेवि भूर्जपत्रे लिखापयेत् ॥
सव्ये भुजे च बध्नीयात् सर्वसौख्यवती भवेत् ।
एवं पुमानपि प्रायो दुःखेन परिपीड़ितः ॥
सभायां व्यसने घोरे विवादे शत्रुसङ्कटे ।
चतुरङ्गे तथा युद्धे सर्वत्रापदपीड़िते ॥
स्मरणादस्य कल्याणि संक्षयं यान्ति दूरतः ।
पूजनीया प्रयत्नेन शून्यागारे शिवालये ॥
विल्ववृक्षतले देवि सर्वदा कुलमण्डले ।
शर्करासवसंयुक्तैर्भक्तैर्दुग्धैः सतण्डुलैः ॥
अपूप-पिष्ट-संयुक्तैर्नैवेद्यैश्च यथोचितैः ।
निवेदितं च यद् द्रव्यं भोक्तव्यं चावधानतः ॥

न चेत् तद् भुज्यते मोहाद् भोक्तुं नृत्यन्ति देवताः ।
अनेनैव विधानेन योऽर्चयेत् परमेश्वरीम् ॥
स भूमिमण्डले देवि साक्षादीशो न संशयः ।
महाशङ्खेन कल्याणि सर्वं कार्यं जपादिकम् ॥
कुलसर्वस्वकस्यैव प्रभावो वर्णितो मया ।
न शक्यते समाख्यातुं वर्षकोटिशतैरपि ॥
किञ्चिन्मयापि चापल्यात् कथितं परमेश्वरि ।
जन्मान्तरसहस्रेण कथितुं नैव शक्यते ॥
कुलीनाय प्रदातव्यं ताराभक्तिपराय च ।
अन्यभक्ताय नो देयं वैष्णवाय विशेषतः ॥
कुलीनाय महेच्छाय भक्तिश्रद्धापराय च ।
महात्मने सदा देयं परीक्षितगुणाय च ॥
नाऽभक्ताय प्रदातव्यं पन्थान्तररताय च ।
न देयं देवदेवेशि गोप्यं सर्वागमे सदा ।
पठनीयं सदा देवि सर्वावस्थासु सर्वदा ॥
यः स्तोत्रं कुलनामकं प्रतिदिनं भक्त्या पठेन्मानवः
स स्याद् वित्तचयैर्धनेश्वरसमो विद्याभवैर्वाक्पतिः ।
सौन्दर्येण च मूर्त्तिमान् मनसिजः कीर्त्या च शीतद्युतिः
शक्त्याः शङ्कर एव शौर्यविभवैर्भूमिपतिर्नान्यथा ॥
इति श्रीहरगौरीसंवादे तारायाः कुलसर्वस्वं नाम स्तोत्रम् ।

## नित्यहोमः

अथ नित्यहोमं कुर्यात् । तदुक्तं ज्ञानार्णवे—

सङ्कल्प्य परमेशानि नित्यहोमविधिं चरेत् ।

सङ्कल्पस्तु—अमुकदेवताप्रीत्यै एतावदाहुतीरहं होमयेयमित्येवंरूपः ।

नीलतन्त्रे—नियहोमं प्रवक्ष्यामि सर्वार्थं येन बिन्दति ।
सपर्यां सम्यगापाद्य बलिं पूर्ववदाचरेत् ॥
ततो जपं तर्पणं च स्मरेत् साधकसत्तमः ।
बलिवैश्वादिकं चैव ब्राह्मणः समुपाचरेत् ॥
विधिवद् वह्निमानीय क्रव्यादांशं परित्यजेत् ।
ततश्च मन्त्रमुच्चार्य कुण्डे वा स्थण्डिलेऽपि वा ॥

भूमौ वा संस्तरेद्व वह्निं व्याहृतित्रितयेन तु।
आहुतित्रयमुत्क्षिप्य षड्ङ्गहवनं ततः॥
ततो देवीं समावाह्य मूलेन षोड़शाहुतिम्।
हुत्वा स्तुत्वा नमस्कृत्य विसृजेदिन्दुमण्डले॥

क्रव्यादांशमग्नेरेकमङ्गारं नैर्ऋत्यां "क्रव्यादेभ्यो नम" इत्युच्चार्य क्षिपेदिति सम्प्रदायः। सारसंग्रहे—

इत्थं तु संस्कृ(हु)ते वह्नौ देवमावाह्य मन्त्रवित्।
सम्पूज्य मूलमनुना पञ्चविंशतिमाहुतिम्॥
हुनेदाज्येन हविषा तिलैर्वा पायसैः शुभैः।
तण्डुलैस्तिलसंमिश्रैः केवलैर्वाथ पुष्पकैः॥
अङ्गावरणदेवानमेकैकामाहुतिं हुनेत्।
उद्वास्य देवं वह्निं च पूजास्थानं व्रजेत् ततः॥
उपविश्यासने मन्त्री दद्याद् भूतबलिं ततः।

एवं पञ्चविंशतिषोड़शाहुत्योर्विकल्पः। अग्नेस्तु संस्कारो नीलतन्त्रोक्त एव कर्तव्यो नाधिकः। "अग्न्याधानादिकं कर्म नित्यहोमे न विद्यत" इति वशिष्ठवचनात्।

## अथारात्रिकविधिः

ज्ञानार्णवे—तत आरात्रिकं कुर्यात् सर्वकामार्थसिद्धये।
सौवर्णे राजते कांस्ये लोकनेत्रमनोहरम्॥
कुङ्कुमेन लिखेत् पद्मं वसुपत्रं वरानने।
( चन्द्ररूपं चरुं कृत्वा तन्मध्ये मस्तके शिवे )॥
कर्णिकायां दीपमेकं वसुपत्रेषु दीपकान्।
यवगोधूमरचितान् शर्करादुग्धसंयुतान्॥
वलयाञ्चितशोभाभिः शोभितान् घृतपूरितान्।
अभिमन्त्र्य ततो मन्त्री रत्नेश्वर्यास्ततः परम्॥
मूलमन्त्रेण चाभ्यर्च्य ततश्चारात्रिकं चरेत्।
तत्पात्रं तु समुद्धृत्य मस्तकान्तं पुनः पुनः॥
नववारं महादेव्यास्तेन नीराजनं चरेत्।
नीराजने महादेव्याश्चक्रमुद्रां प्रदर्शयेत्॥

रत्नेश्वरीविद्यापि तत्रैवोक्ता—

श्रीबीजं च पराबीजं संलिखेन् मनुवित्तमः।

गसौ च मपलाः पश्चादिन्द्रस्थाः क्रमतो लिखेत् ॥
वामकर्णसमायुक्ता बिन्दु-नाद-समन्विताः ।
बीजपञ्चकमेतत् तु पञ्चरत्नानि सुन्दरि ॥
पूर्वबीजविलोमेन रत्नेशीयं नवाक्षरी ।

परा मायाबीजम् । इन्द्रो लकारः । वामकर्ण ऊकारः । पूर्वबीजं श्रीबीजं पराबीजञ्च । एवं श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं ल्लूं ह्रीं श्रीं इति रत्नेश्वरी सिध्यति । चक्रमुद्रा उक्ता लक्षणसंग्रहे—

विपर्यस्ते तले कृत्वा वामदक्षिणहस्तयोः ।
अङ्गुष्ठौ ग्रथयेच्चैव कनिष्ठानामिकान्तरे ।
चक्रमुद्रेयमुद्दिष्टा सर्वसिद्धिकरी सदा ॥

## अथ प्रदक्षिणम्

उत्तरतन्त्रे—पौराणिकैर्वैदिकैश्च मूलमन्त्रेण चैव हि ।
प्रदक्षिणं प्रणामं च कुर्याद् धर्मार्थसाधकम् ॥
यामले—त्रिकोणाकारा सर्वत्र नतिः शक्तेः समीरिता ।
( दक्षिणाद् वायवीं गत्वा दिशस्तस्माच्च शाम्भवीम् ।
ततश्च दक्षिणं गत्वा नमस्कारस्त्रिकोणवत् ॥ )
अर्धचन्द्रं महेशस्य पृष्ठतश्च समीरिता ॥
शिवप्रदक्षिणे मन्त्री अर्धचन्द्रक्रमेण तु ।
सव्यासव्यक्रमेणैव सोमसूत्रं न लङ्घयेत् ॥
प्रसार्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः ।
दर्शयेद् दक्षिणं पार्श्वं मनसाऽपि च दक्षिणम् ॥
त्रिधा च वेष्टयेत् सम्यग् देवतायाः प्रदक्षिणे ।
एकहस्तप्रणामश्च एकं वापि प्रदक्षिणम् ॥
अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुरा(कृतं)तनम् ।
तथा—एकं चण्ड्यां रवौ सप्त त्रीणि दद्याद् विनायके ।
चत्वारि केशवे दद्याच्छिवे चार्धं प्रदक्षिणम् ॥

## अथ नतिः

सा चाऽष्टाङ्गा पञ्चाङ्गा वा । तथाहि तन्त्रे—

साष्टाङ्गश्चाथ पञ्चाङ्गः पूजाकर्मसु सम्मतः ।
हस्ताभ्यां चरणाभ्यां च जानुभ्यां चक्षुषा तथा ॥

मूर्ध्ना दृष्ट्या तथा वाचा चित्तेनाऽष्टाङ्ग ईरितः।
हस्त-जानु-शिरो-वाक्य-धीभिः पञ्चाङ्ग ईरितः ॥

अत्र च नतेः प्रकारान्तरमप्युक्तं तन्त्रे—

सम्मुखं चतुरस्रं च वृत्तं गोमुखमेव च।
योनिमुद्रेति कथिता मुद्राः पञ्च नमस्कृताविति ॥

तत्र भूमिसंलग्नाञ्जलिः शिरःसंयुक्तः सम्मुखमुद्रा। भूमिसंलग्नोत्तानवामकरतलोपरि तिर्यक्स्थापितवामाग्राधोमुखदक्षिणकरसंयुक्ते शिरसि चतुरस्रमुद्रा। भूमिसंलग्नानुत्तानाङ्गुष्ठा मुष्टिद्वयसंलग्ने शिरसि वृत्तमुद्रा। केचित् तु—हस्तद्वयाङ्गुलीर्ग्रथयित्वा व्यत्यस्ताङ्गुष्ठद्वयनिवेशनेन वृत्तमुद्रेत्याहुः। भूमिसंलग्नविस्तारिताङ्गुलीक-संयुगाकारकरद्वयोपरि शिरःसंयोगे गोमुखमुद्रा। योनिमुद्रा प्रसिद्धेति साम्प्रदायिकाः। कुलार्णवे—

कृतार्चनादिकं सर्वं समन्त्रोदपुरःसरम्।
इतःपूर्वादिमनुना देवतायै समर्पयेत् ॥

मन्त्रोद्धारः सारसंग्रहे—

वदेदितःपदं पूर्वं प्राणबुद्धिं ततो वदेत्।
देहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्तिषु ॥
वदेत् सर्वास्ववस्थासु वाचेति पदमुच्चरेत्।
कर्मणा चैव हस्ताभ्यां पद्भ्यामुक्त्वोदरेण च ॥
वदेच्छिश्ना च यच्छब्दं स्मृतं यत्पदमुच्चरेत्।
उक्तं च यत् कृतं यच्च सर्वं ब्रह्मार्पणं भवतु ॥
स्वाहान्तश्चापि संप्रोक्तो ब्रह्मार्पणमनूत्तमम्।

समर्पणप्रकारस्तु शैवागमे—

इत्यर्घोदकमुत्सृज्य किञ्चिद् देवस्य दक्षिणे।
करे समर्पयेद् विद्वान् कृतमाराधनं प्रिये ॥

अत्र देवानां वामहस्ते समर्पणम्। "वामहस्ते समर्पयेदि"ति वीरचूडामणिवचनात्। ततो देवतां विसर्जयेत्। तदुक्तं हंसपरमेश्वरतन्त्रे—

संहारमुद्रां बद्ध्वाऽथ तेजोरूपां महेश्वरीम्।
विभाव्य पुष्पेणोद्धृत्य वहच्छ्वासाध्वना शिवे ॥
प्रवेश्य द्वादशान्तस्थ-सहस्रारसरोरुहे।
विश्रम्य मध्यनाड्यां तामानीय हृदयाम्बुजे ॥

संस्थाप्य सम्यक् सम्पूज्य स्वात्मानं तन्मयं स्मरेत् ।

संहारमुद्रा यथा—पृष्ठलग्नौ करौ कृत्वा अङ्गुलिभ्योऽन्यमध्यतः ।

परिवर्त्य ततः कुर्यात् तर्जन्यौ सरलाकृती ॥

विसर्जने निगदिता मुद्रा संहारसंज्ञिका ।

इति तन्त्रोक्ता । ततो निर्माल्यवासिनीं पूजयेत् । तदुक्तं कुलमूलावतारे—

ऐशान्यां मण्डलं कृत्वा द्वारपद्मविवर्जितम् ।

विसर्जनार्थं निर्माल्यधारिण्याः पूजनाय वै ॥

लेह्यचोष्यान्नपानादि-निर्माल्यस्रग्विलेपनम् ।

निर्माल्यभोजनं तुभ्यं ददामि श्रीशिवाज्ञया ॥

इति नैवेद्यशेषं तु दत्त्वा नत्वा विसर्जयेत् ।

निर्माल्यं मस्तके धार्यं मूलमन्त्रेण मन्त्रिणा ॥

प्राश्य पादोदकं देवीनैवेद्यं विभजेत् प्रिये ।

तद्भक्तेभ्यः स्वयं भुक्त्वा तन्मयो विहरेत् सुखम् ॥

इति महामहोपाध्याय-ठक्कुर-श्रीनरसिंहविरचिते

ताराभक्तिसुधार्णवे तारानित्यार्चनविधिः

पञ्चमस्तरङ्गः ॥ ५ ॥

---

देवालब्धमातृकान्तरात् संगृहीतोऽष्टचत्वारिंशदधिकशततमपत्रेऽमुद्रितांशोऽत्र मुद्र्यते—

ब्राह्मणस्य सदानिषेधः । क्षत्रियस्य संग्रामकाले विकलस्य संग्रामासम्भवात् । वैश्यस्य धनप्रयोगकाले अन्यथा विकलतया विंशतिदाने कर्त्तव्ये शतादिदानापत्तेः । "शूद्रैर्नैव कदाचन" । सर्वदैव पेयेत्यर्थः । अन्यथा—"सर्वाः शूद्रस्य संप्रोक्ता यत्र वा तद् भुविर्भवेत्" इति वचनेन विरोधापत्तेः । एवं "पूजनीया कलौ देवी केवलैरासवै" रित्यत्र "सर्ववर्णै"रित्यन्वेति । सर्ववर्णशब्दश्च ब्राह्मणेतरपर इत्यवधातव्यम् ।

अथ—क्षीरवृक्षसमुद्भूतं वार्क्षं वल्कलसम्भवम् ।

मधुपुष्पोद्भवं ज्ञेयमासवं तण्डुलोद्भवमिति ॥

भैरवतन्त्रेण क्षीरादिपदानामासवविशेषे परिभाषणात् ब्राह्मणस्यापि तत्राधिकारः प्रतीयत इति चेत् । अत्र प्रतिभाति—क्षीरादिना कथं मैरेयफलमित्यत्रेदं वचनम् । तेन क्षीरवृक्षसमुद्भूतं वार्क्षं मैरेयमित्यर्थः । एवमग्रेऽपि । अन्यथा क्षीरवृक्षपदादेवैपरीत्येन प्रयोगापत्तेः ।

"अनुवाद्यमनुक्त्वा तु न विधेयमुदीरयेत्" इति न्यायात् तण्डुलोद्भवमोदनः । तेन

शूद्रस्यापि ओदनस्थाने आसवमेव। तथाच तेन पृथगोदनं ब्राह्मणादिभिरासवं च न देयमित्यर्थः। लिखितवचनात्। "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते" इत्यादिस्मृतेश्चेति। न च शुक्रशापस्य ब्राह्मणविषयत्वेन सुरायां तदुद्धारविधानानुपपत्तिरिति वाच्यम्। शूद्रमात्रस्य तदधिकारे शास्त्रसिद्धे शुक्रशापोद्धारविधानस्यादृष्टार्थत्वात्। किं च "ऐन्द्र्या गार्हपत्यमुपतिष्ठत" इत्यादौ लिङ्गापेक्षया श्रुतेरिव शापमोचनविधानकल्प्यभैरवदानविधानापेक्षया "ब्राह्मणो मदिरां दद्यादि"त्यादिनिषेधविधेः श्रौतस्य बलवत्त्वं युक्तिसाम्यादिति। एवं च वास्तुयागादौ सुराप्राकारक(?)-मन्त्रस्यापि पाठोऽदृष्टार्थ एव। वज्रपुष्पाभावेऽपि "वज्रपुष्पं प्रतीच्छ स्वाहे"त्यादिमन्त्रवदिति। ब्राह्मणेतरवर्णानामासवालाभे विजयोपादानमप्युक्तं विजयाकल्पे—

संविदानन्दयोर्मध्ये संविदेव गरीयसी।
संवित्प्रयोगस्तेनेह पूजादौ साधकोत्तमैः।
कर्त्तव्या च महापूजा करणीया सुनन्दितैः॥

सा पुनश्चतुर्धा ब्राह्मणी क्षत्रिया वैश्या शूद्रा च। श्वेतरक्तपीतकृष्णविभेदतः।

संविदे ब्रह्मसंभूते ब्रह्मपुत्रि सदानघे।
भैरवाणां च दत्त्वा त्वं पवित्रा भव सर्वदा॥
ॐ ब्राह्मण्यै नमः स्वाहा ब्राह्मणीं शोधयेदिति।
सिद्धमौलिप्रिये देवि हीनबोधप्रबोधिते॥
राजप्रजावशङ्करी शत्रुकण्ठनिसूदिनि।
ॐ क्षत्रियायै नमः स्वाहा क्षत्रियां शोधयेत् ततः॥
अज्ञानेन्धनदीपाग्नि-ज्वालाग्ने ज्ञानरूपिणि।
आनन्दस्यागमं प्रीतिं सम्यग् ज्ञानं प्रयच्छ मे॥
ह्रीं वैश्यायै नमः स्वाहा वैश्यां च शोधयेत् ततः।
नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि।
त्रैलोक्यविजये मातर्ममाधिकफला भव॥
क्लीं शूद्रायै नमः स्वाहा शूद्रां च शोधयेत् ततः।

यद्वा एकेनैव मन्त्रेण सर्वाः शोधयेत्। तदुक्तं तत्रैव—

अमृते अमृतोद्भवेऽमृतवर्षिणिपदं ततः।
आकर्षयपदद्वन्द्वं सिद्धिं देहिपदं ततः॥
स्रव मेऽथ ततो ब्रूयात् ············।
·································॥

सप्तधा चार्पयेद् ब्रह्मरन्ध्रे मन्त्रं समुच्चरन् ।
गुरुपद्मे सहस्रारे तथा तत्त्वाख्यमुद्रया ॥
त्रिधैव तर्पयेद् भक्त्या साधकः सिद्धिमानसः ।
ऐं वदवद-पदं ब्रूयाद् वाग्वादिनिपदं ततः ॥
मम जिह्वाग्रे स्थिरीति भव सर्वपदं ततः ।
सत्त्ववशङ्करी स्वाहा मन्त्रेण जुहुयान्मुखे ॥

नन्वेषु वचनेष्वधिकारिणामश्रुतेः कथं ब्राह्मणेतरपरतोच्यत इति चेत्—

मादकं सकलं वस्तु वर्जयेत् चणकादिकम् ।
करञ्जं पातकी यस्मात् धर्मो वेदविदां वर ॥
ब्राह्मणस्तु सुरां दत्त्वा ब्राह्मण्यादेव हीयते ।
स्वगात्ररुधिरं दत्त्वा स्वात्महत्यामवाप्नुयादिति ॥

भैरवतन्त्रवचनाद् गृहाण । ततः प्राणायामादिकामात्मशुद्धिमारभेत । तदुक्तं कुलार्णवे—सस्नानभूतसंशुद्धि-प्राणायामादिभिः प्रिये ।
षडङ्गाद्यखिलन्यासैरात्मशुद्धिरितीरिता ॥

## अथ प्राणायामः

तत्रादौ प्राणायामः । सनत्कुमारीये—

सुखासने समाविश्य प्राणायामं विधाय वै ।
भूतशुद्धिं ततः कृत्वा न्यासं कुर्यादनन्तरम् ॥

कुम्भसम्भवः—

## षष्ठस्तरङ्गः

### अथ पात्रार्पणम्

अथ ब्राह्मणातिरिक्तवीरश्चेत् तदा विसर्जनानन्तरं तादृशदिव्यश्चेत् तदा ब्रह्मा-र्पणात् प्राक् प्रथमं गुरवे गुरुपात्रं सभक्त्याऽर्चयित्वा देयम्। तथाहि तन्त्रे—

ततः श्रीगुरुरूपाय साक्षात् परशिवात्मने।
कराभ्यां पात्रमुद्धृत्य सद्वितीयं निवेदयेत्॥

भावचूडामणावपि—त्रिपात्रपक्षे—

अर्घ्यभाण्डं त्रिधा कृत्वा गुरवे चैकभागकम्।
एकं कुलाय दत्त्वा वै चैकेन देवतर्पणम्॥

कुलाय शक्तये। तथा कुलार्णवेऽपि—

अनिवेद्य तु यः शक्तौ कुलद्रव्यं निषेवते।
निष्फला तस्य सा पूजा देवता न प्रसीदति॥

देवतर्पणं पानरूपमेव। तथाहि कुलार्णवे—

आत्ममूलत्रिकोणोद्यत्सूर्यकोटिसमप्रभे।
कुण्डल्याकृतिचिद्रूपे कुले द्रव्यं समन्त्रकम्॥

समयाचारेऽपि—कुण्डलीतर्पणार्थं च भोगपात्रं समाचरेत्।
अन्तःशक्तिमनुस्मृत्य तर्पयेद् देहदेवताम्॥

कौलिकेभ्यो वीरपात्रादपरशक्तिभ्यो योगिनीपात्रादमृतं शम्भवद्धि दत्त्वा स्वयं स्वीकुर्यादित्यधिकपात्रतापक्षे। कुलार्णवे—

निर्मन्त्रं न पिबेद् द्रव्यं प्रायश्चित्तं विधीयते॥

मनुस्तत्रैवोक्तः—इदं पवित्रममृतं पिबामि भवभेषजम्।
पशुपाशसमुच्छेदकारणं भैरवोदितम्॥
चित्स्वातन्त्र्यसारत्वात् तस्यानन्दमया(त्वतः)त्मनः।
तन्मयत्वाच्च भावानां भावाश्चान्तर्हिता रसे॥
स्वस्वातन्त्र्यविकाशाय सुरसस्तेन पीयते।
तस्मादिमां सुरां देवीं पूर्णोऽहं तां पिबाम्यहम्॥
मन्त्रेणाऽनेन देवेशि मूलमन्त्रेण मन्त्रवित्।
अनाकुलमनाः कुर्यादलिपानं शनैः शनैः॥
पानभेदफलोल्लासप्रमाणस्थितिलक्षणम्।

अविज्ञायाचरेद् यस्तु स भवेदापदांपदम् ॥

पानभेदस्तत्रैव—पानं च त्रिविधं प्रोक्तं दिव्यवीरपशुक्रमात् ।

दिव्यं देव्यग्रतः पानं वीरं मुद्रासने कृतम् ॥

स्वेच्छया पशुवत् पीतं पशुपानं तदुच्यते ।

फलं तु—मन्त्रसंस्कारसंशुद्धामृतपानेन पार्वति ।

जायते देवताभावो भवबन्धविमोचकः ॥

इत्यादि तत्रैवोक्तम् । प्रमाणमपि तत्रैव—

आनन्दं ब्रह्मणो रूपं तच्च मोक्षे व्यवस्थितम् ।

तस्याऽभिव्यञ्जकं मत्वा योगिभिस्तेन पीयते ॥ इत्यादि ।

उल्लासभेदस्तत्रैव—आरम्भस्तरुणश्चैव यौवनः प्रौढ एव च ।

तदन्तश्चोन्मनाश्चानवस्थाख्यश्चैव सप्तमः ॥

## अथैषां लक्षणम्

तत्त्वत्रयं स्यादारम्भः कथितः कुलनायिके ।

कथितस्तरुणोल्लासस्तरुणं सुखमम्बिके ॥

यौवनो मनसः सम्यगुल्लासः कथितः प्रिये ।

स्खलनं दृङ्मनोवाचां प्रौढ इत्यभिधीयते ॥

स्वाभीष्टचेष्टाचरणं प्रौढान्तः परिकीर्त्तितः ।

उन्मनाः पतनोत्थाने मूर्च्छना च मुहुर्मुहुः ॥

देहेन्द्रियाणामवशश्चानवस्था निगद्यते ।

तत्त्वत्रयस्य मन्त्रपूर्वकत्वमद्वितीयामृतचुलुकत्रयपानस्यारम्भत्वमूर्ध्वाम्नाय एव । अत्र च तत्त्वशुद्धेः प्रकारान्तरस्योक्तत्वात् । एवं चाम्नायान्तरे वारत्रयग्रहणमारम्भ इति प्रतिभाति । स्थितिर्मर्यादा । सा यथा—

निःशङ्को निर्मलो धीरो निर्लज्जो निष्कुतूहलः ।

निर्णीतवेदशास्त्रार्थो वरदां वारुणीं पिबेत् ॥

देवान् पितॄन् समभ्यर्च्य देवीशास्त्रोक्तवर्त्मना ।

गुरून् स्मरन् पिबन् मद्यं खादन् मांसं न दोषभाक् ॥

पितरोऽत्र गुरुपरमगुर्वादय एव । तथा—

सव्येनोद्धृत्य पात्रं तु मुद्रां कृत्वाऽपसव्यतः ।

यथाविधि द्वितीयेन गृह्णीयान् मन्त्रमुच्चरन् ॥

मुद्रां शुद्धिम् । द्वितीयेनेति सहयोगे तृतीया ।

चर्वणेन विना पानं केवलं विषभक्षणम् ।

चर्वणं भर्जितचणकादीनाम् ।

श्रीचक्रस्य कुलद्रव्यं यः पशुभ्यः प्रयच्छति ।
स्नेहाल्लोभाद् भयाद् वापि स भवेद् योगिनीपशुः ॥
यथाधिकारं तत्रापि कर्त्तव्यं पात्रमेलनम् ।
अदीक्षितैरनाचारैरतन्त्रज्ञैरदैवतैः ॥
दूषितैः समयभ्रष्टैर्न कुर्याद् द्रव्यसङ्गतिम् ।
अभिज्ञम्मन्यमानैश्च प्रपञ्चव्रतचारिभिः ॥
पशुभिः क्षुद्रकर्मस्थैर्न कुर्याद् द्रव्यसङ्गतिम् ।
स्वपात्रस्थितहेतुं च न दद्याद् भैरवाय च ॥
यदि दद्यान् महेशानि देवताशापमाप्नुयात् ।

भैरवाय साधकाय । तथा—

स्रोतोभेदेन वा कुर्यात् कौलिकः पात्रमेलनम् ।

कदाचिदतिविश्रम्भे स्रोतस आम्नायस्यैक्ये च सङ्करं कुर्यादित्यर्थः । तथा—

पूर्वदक्षिणयोरैक्यमुदक्पश्चिमयोरपि ।
तस्मिन् क्रमार्चनपरैर्वीरैः स्वस्वद्रव्यैरपि ॥
कामिनीभिश्च तत् कुर्यात् स्रोतसां च चतुष्टयम् ।

इत्यनेन ऊर्ध्वाम्नायस्य न केनाप्यनेनैक्यवदुपचार इति ध्वनितम् । तथा—

शक्त्युच्छिष्टं पिबेद् द्रव्यं वीरोच्छिष्टं च चर्वणम् ।
आत्मोच्छिष्टं न दातव्यं परकीयं न भक्षयेत् ॥

परकीयं परपुरुषोच्छिष्टम् । तत्रापि विशेषस्तत्रैव—

गुरुशक्तिसुतानां च गुरुज्येष्ठकनिष्ठयोः ।
स्वज्येष्ठस्यापि चोच्छिष्टं खादेन्नान्यस्य पार्वति ॥
उच्छिष्टं भक्षयेत् स्त्रीणां ताभ्यो नैव प्रदापयेत् ।
कनिष्ठानां स्वशिष्याणां दद्यात् स्वोच्छिष्टमम्बिके ॥
दद्यात् स्नेहेन योऽन्येभ्यः स भवेदापदांपदम् ।
आसवोच्छिष्टपात्रं तु यो गृह्णाति विमूढधीः ॥
स्नेहाल्लोभाद् भयाद् वापि देवताशापमाप्नुयात् ।

अत्र ज्येष्ठकनिष्ठता सतीर्थ्यानामुपदेशक्रमेणैव । तथाहि—रुद्रयामले—

बालोऽपि दीक्षितः पूर्वं ज्येष्ठः सुत कुलागमे ।

द्विजोऽपि दीक्षितः पश्चादन्त्यजः पूर्वदीक्षितात् ॥
द्विजः कनिष्ठः स ज्येष्ठ इति शास्त्रविनिश्चयः ।
यावन्न चलते दृष्टिर्यावन्न चलते मनः ॥
तावत् पानं प्रकुर्वीत पशुपानमतः परम् ।

तथाच यौवनोल्लासपर्यन्तमेव पानं कर्त्तव्यमिति भावः । इदं तु पूर्णाभिषिक्तरहितानाम् । अभिषिक्तानां तु सप्ताप्युल्लासा विहिताः । तथाहि तत्रैव—

पूर्णाभिषेकयुक्तानां पानं देवि निगद्यते ।
कराभ्यां पात्रमुद्धृत्य स्मरन् मूलं च पादुकाम् ॥
आगलान्तं पिबेन् मद्यं स मुक्तो नात्र संशयः ।
पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले ॥
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ।
आनन्दात् तृप्यते देवी मूर्च्छनाद् भैरवः स्वयम् ॥
वमनात् सर्वदेवास्तु तस्मात् त्रितयमाचरेत् ।

कुलामृते—ब्रह्मज्ञानी कुलाचारे सुरां पीत्वा स्खलन् मुहुः ॥
भूमौ पतति तस्याङ्गे गलन्ति यदि रेणवः ।
तावत् कालं रेणुसंख्यं ब्रह्मलोके महीयते ॥

तथा—पीत्वा पीत्वा जपित्वा च मुक्तः कोटिकुलैः सह ।
ब्रह्मलोके वसेद् देवि सत्यं सत्यं न संशयः ॥
तत्रैव व्याप्तिमाप्नोति न पुनः प्रपतेदिह ।
पीत्वा च पूजयित्वेशीमीशत्वं लभते ध्रुवम् ॥
तत्रैव लयमाप्नोति पुनर्नैव विवर्तते ।

इति । इदं तु कौलिकानामावश्यकम् । तदुक्तं हरगौरीसंवादे—

निवेदितं तु यद् देव्यै भोक्तव्यं चावधानतः ।
तन्न चेद् भुज्यते मोहाद् भोक्तुं नृत्यन्ति देवताः ॥

## अथ पञ्चमयागः

कुमारीतन्त्रे—ततस्तुत्वा नमस्कृत्य कुर्यात् सम्भोगमेलनम् ।
देवताग्रे तु सम्भोगो देवताप्रीणनं भवेत् ॥

तथा—नटी कापालिनी वेश्या रजकी नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ॥
मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः ।

एतासु काञ्चिदानीय ततस्तद्योनिमण्डले ॥
पूजयित्वा महादेवीं ततो मैथुनमाचरेत् ।
**देवीयामले**—अथ पूजाफलं वक्ष्ये उत्तरोत्तरतो वरम् ।
स्वशक्त्या अयुतं पुण्यं परशक्तिप्रपूजने ॥
ततो वेश्याऽधिका ज्ञेया रजकी च ततोऽधिका ।
रजक्याः क्षुरकी श्रेष्ठा क्षुरक्याश्चर्मकारिणी ॥
ततोऽधिकतरा प्रोक्ता हेतुनारी वरानने ।
ततोऽप्यन्त्यजसम्भूता चाण्डाली च ततोऽधिका ॥
ततो मातङ्गिनी श्रेष्ठा मातङ्ग्याः पुक्कशी तथा ।
पुक्कश्या अक्षता श्रेष्ठा ततोऽतिसूदती स्मृता ॥
सुन्दरी पुरतः प्रोक्ता प्रीतिमत्यनुरागिणी ।
तत्परा परमेशानि उन्मत्ता शुभलक्षणा ॥
समयाचारसम्पन्ना मन्त्रज्ञा भयवर्जिताः ।
विदग्धास्त्वप्रसूताश्च धैर्यस्वातन्त्र्यसंयुताः ॥
एवं गुणसमायुक्ताः पूजयेत् सर्वयोषितः ।
आत्मीया च परा चैव शक्तिमात्रं महेश्वरि ॥
मन्त्राधिदेवताबुद्ध्या पूज्याः सर्वोपचारकैः ।
विविधैः फलताम्बूलैर्वस्त्रालङ्कारहेमभिः ॥
सम्पूज्य विधिवद् भक्त्या बहुहेतुं प्रदापयेत् ।
सम्भोगवासनां धृत्वा यः कुर्याच्छक्तिपूजनम् ॥
स दारिद्र्यमवाप्नोति नारकी च भवेद् ध्रुवम् ।
**वीरचूडामणावपि**—आनीय युवतीं रम्यां कुलकर्मविशालिनीम् ।
षोडशाब्देन युवतीं पीनोन्नतपयोधराम् ॥
उन्मत्तां मत्तमातङ्गीं मदाघूर्णितलोचनाम् ।
मृगशावकनेत्रां च शारङ्गीं मृदुहासिनीम् ॥
क्रोधलोभभयदम्भमोहमायाविवर्जिताम् ।
स्वामिधर्मरतां सत्यवादिनीं च सदाशुचिम् ।
गणिका नटी चाण्डाली जीवनी जारजाऽथवा ॥
योगमुद्राधरा नार्यो चर्मकारी च चित्रिणी ॥
चतुर्वर्णसमायुक्ता उत्तमा पर्वतोद्भवा ।

वामभागे समालिख्य उत्तमं पद्मवर्त्तुलम् ॥
श्वेतरक्तसमायुक्तं नीलं सिन्दूरचर्चितम् ।
साधकः प्राङ्मुखो भूत्वा देवीं प्रत्यङ्मुखां यजेत् ॥
पीठशक्तिविधानेन नवशक्तिं प्रपूजयेत् ।
रतिः प्रीतिः प्रिया कान्तिः कामिनी काममालिनी ॥
कन्दर्पदलनी दुर्गा भाविनी नव शक्तयः ।
वियद्गङ्गं समुच्चार्य मनुबिन्दुकलान्वितम् ॥
महाप्रेतपदं पश्चाद् धृदयान्तमिमं मनुम् ।
मूलमन्त्रं समुच्चार्य सम्बुद्धया तारिणीपदम् ॥
पह्येहि च पदं पश्चात् पादुकाभ्यां पुनः पुनः ।
गृहीत्वा वामहस्तेन आसने चोपवेशयेत् ॥
रक्तचन्दनलिप्ताङ्गीं रक्तपुष्पविभूषिताम् ।
सर्वालङ्कारसंयुक्तां विवस्त्रां पूजयेत् प्रिये ॥
वारुणीमदमत्तां च हावभावसमावृताम् ।
यावदाकण्ठपर्यन्तं तावत् पानं प्रदापयेत् ॥
ध्यानं कुर्यान् महेशानि गह्वरे मकरानने ।
ताम्रचूड़ाशिखाकारं गजवक्त्रसमप्रभम् ॥
तत्रस्थां चिन्तयेद् देवीं विद्यां भुवनमोहिनीम् ।
तारं वै हृदयान्ते च पश्चान् मदनमन्दिरम् ॥
चतुर्थ्यन्ते यजेद् देवि भगे पुष्पं विनिःक्षिपेत् ।
प्रक्षाल्य कुलद्रव्येण गन्धपुष्पैः समर्चयेत् ॥
धूपदीपादिकं दत्त्वा पश्चादावरणं यजेत् ।
इच्छा ज्ञाना क्रिया पश्चाद् वामा ज्येष्ठा च रौद्रिका ॥
रतिः प्रीतिस्तथा कामं पुष्पबाणधनुर्धरम् ।
वसन्तं पूजयेत् पश्चात् पत्राङ्कुरसमन्वितम् ॥
चिकुरं पूजयेद् देवि अलिस्यन्दसमन्वितम् ।
विरञ्चिं पूजयेन्नाभौ हृदये च हरं हरिम् ॥
स्तने वक्त्रे महेशानि त्रिमूर्त्तिं पूजयेत् ततः ।
कामेशी चैव वज्रेशी परा तु भगमालिनी ॥
भ्रुवोर्मूले महेशानि पञ्चबाणान् प्रपूजयेत् ।

द्रामाद्यां द्राविणीं मूर्ध्नि द्रीमाद्यां क्षोभिणीं पदे ॥
क्लीं वशीकरिणीं वक्त्रे गुह्ये ब्लूं बीजपूर्विकाम् ।
आकर्षिणीं हृदि पुनः सर्वान्तर्भृगुसंयुताम् ॥
सम्मोहिनीं क्रमादेवं बाणपूजेयमीरिता ।
कर्णयोः पूजयेच्चक्रे भानुं चन्द्रं क्रमेण च ॥
रसनायां वह्निं सम्पूज्य नेत्रे नक्षत्रमालिनीम् ।
प्राणं सम्पूजयेद् घ्राणे आज्ञायां त्रिपथगामिनीम् ॥
अक्षोभ्यं पूजयेन् मूर्ध्नि गन्धपुष्पोपचारकैः ।
पुष्पमालां गले दद्यादथ शक्त्या जपेद् बुधः ॥

ज्ञानार्णवे तु—मञ्चकं गजदन्तस्य हेमरौप्यादिनिर्मितम् ।
विशुद्धक्षौमरचितां तुलिकां तत्र योजयेत् ॥
पुष्पांश्चाकीर्य मध्ये तु कर्पूरस्य रजस्तथा ।
मण्डूकादींस्तत्र देवि उपर्युपरि शैलजे ॥
मण्डूकं पूजयेदादौ रुद्रं कालाग्निसन्निभम् ।
आधारशक्तिं कूर्मं च तथानन्तं वराहकम् ॥
पृथिवीं च तथा कन्दं नालं पद्मं दलं तथा ।
केशरालिं च सम्पूज्य कर्णिकां पूजयेत् ततः ॥
मञ्चकं च समभ्यर्च्य तत्र पादचतुष्टये ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च क्रमाद् यजेत् ॥
अपूर्वां पूजयेदेतांस्तत्पादानां समीपके ।
आत्मान्तरात्मपरमज्ञानात्मानः प्रपूजयेत् ॥
मञ्चकाङ्गेषु सम्पूज्य गुणत्रयमथार्चयेत् ।
दूतीं सुलक्षणां रम्यां सर्वलक्षणलक्षिताम् ॥
नानालङ्कारसुभगां स्ववशां शारदामिव ।
पूजयेत् परमेशानि पञ्चकामशरस्तथा ॥
वटुकादींश्चतुर्दिक्षु पूजयेत् सिद्धिहेतवे ।
मातृकां विन्यसेत् तस्या देहे कामशरान्विताम् ॥
त्रिकोणं विन्यसेन् मूर्ध्नि तत्र पूजां यजेत् क्रमात् ।
त्रिकोणमध्ये बालाख्यां कामेशीं परिपूजयेत् ॥
गणेशं च कुलाध्यक्षं तथा लक्ष्मीं सरस्वतीम् ।

त्रिकोणेषु च सम्पूज्य वसन्तं मदनं प्रिये ॥
स्तनयोः पूजयेत् पश्चान् मुखे तस्याः कलाधरम् ।
वाग्भवं कामराजं च स्त्रीबीजं कामराजकम् ॥
हसक्लेमात्मकं दत्त्वा आधारशक्तिमुच्चरेत् ।
श्रीपादुकां ततो दत्त्वा पूजयामि वदेत् ततः ॥
अनेन मनुना तस्या ललाटे सुमनोहरम् ।
त्रिकोणं तत्र संलिख्य सिन्दूराद्यैर्विशेषतः ॥
वटुकं योगिनीं चैव क्षेत्रपालं गणेश्वरम् ।
लक्ष्मीं सरस्वतीं चैव पूजयेत् तत्र सुन्दरि ॥
कामबीजं समुच्चार्य कामराजं ततः परम् ।
श्रीपादुकां ततो दत्त्वा पूजयामि वदेत् ततः ॥
दक्षपादतले देवि पूजयेन् मनुनाऽमुना ।
वं वसन्तं समुच्चार्य नादहीना रमा ततः ॥
पादुकां पूजयामीति तस्या वामकरे न्यसेत् ।
शक्तिबीजं समुच्चार्य सोमपादपदं ततः ॥
श्रीपादुकां ततो दत्त्वा पूजयामि स्तनद्वये ।
आरोहक्रमतः कामकलान्यासं चरेत् सुधीः ॥
श्रद्धा प्रीती रतिश्चैव धृतिः कान्तिर्मनोहरा ।
मनोरमा मनोरामा मदनोन्मादिनीति च ॥
मोहिनी दीपिनी चैव शोषिणी च वशङ्करी ।
रञ्जनी सुभगा देवी षोडशी प्रियदर्शना ॥
अकारादिस्वरैरर्च्याः कलाः कुसुमधन्वनः ।
पूषाऽर्यमा सुमनसा(?) रतिः प्रीतिस्तथा धृतिः ॥
ऋद्धिः सौम्या मरीचिश्च दशमी चांशुमालिनी ।
अङ्गिरा शशिनी चैव छाया सम्पूर्णमण्डला ॥
पुष्टिश्चैवामृता चेति कलाः सोमस्य षोडश ।
अकारादिस्वरयुताः पूजनीया मनीषिभिः ॥
दक्षे पादादिमूर्धान्तं वामे मूर्धादि सुन्दरि ।
पादान्तं पूजयेत् सर्वाः कला वै कामसोमयोः ॥
तन्त्रान्तरे—पृष्ठवंशात् समारभ्य शिरोऽन्तं कामचापकम् ।

विन्यस्य विधिवन् मन्त्री पूजयेत् तत् तु मूर्धनि ॥
धर्मात्मकं समुच्चार्य कामचापपदं ततः ।
पादश्रीपादुकां दत्त्वा पूजयामीति पूजयेत् ॥
मूर्ध्नि पादे मुखे गुह्ये हृदये च यथाक्रमात् ।
पञ्चबाणैः पञ्चबाणान् यथास्थानेषु पूजयेत् ॥
द्रां द्रावणपदं दत्त्वा बाणपादपदं ततः ।
श्रीपादुकां वदेत् पश्चात् पूजयामीति पूजयेत् ॥
ह्रीमात्मकं समुच्चार्य उन्मादबाणमुच्चरेत् ।
पादश्रीपादुकां दत्त्वा पूजयामीति पूजयेत् ॥
कामबीजपदं दत्त्वा मोहबाणपदं ततः ।
पादश्रीपादुकां दत्त्वा पूजयामीति पूजयेत् ॥
ब्लामात्मकं समुच्चार्य सन्दीपनपदं ततः ।
बाणपादपदं दत्त्वा श्रीपादुकां ततो वदेत् ॥
पूजयामीति सम्पूज्य शोषबाणं समुच्चरेत् ।
शोषणं च समालिख्य बाणपादपदं ततः ॥
श्रीपादुकां ततो दत्त्वा पूजयामीति पूजयेत् ।
ललाटमण्डले पश्चात् त्रिकोणं पूजयेत् ततः ॥
वाग्भवं शुभपादं च श्रीपादुकां ततो वदेत् ।
पूजयामि ततो दत्त्वा दक्षरेखासु पूजयेत् ॥
ह्रीमात्मकं समुच्चार्य भगपादपदं ततः ।
श्रीपादुकां ततो दत्त्वा पूजयमीति पश्चिमे ॥
कामबीजं समुच्चार्य भगसर्पिःपदं ततः ।
श्रीपादश्रीपदं दत्त्वा पादुकां च ततो वदेत् ॥
पूजयामीति चोचार्य पूजयेद्‍ वामपार्श्वके ।
ह्सौरात्मकमालिख्य भगावहपदं ततः ॥
पादश्रीपादुकां दत्त्वा पूजयेन् मध्यदेशतः ।
श्रीउड्डीशीपदं दत्त्वा देवीमुड्डीश्वरीं ततः ॥
नाथदेवपदं दत्त्वा श्रीरक्ताम्बां ततो वदेत् ।
श्रीचर्यानाथमालिख्य पादश्रीपादुकां ततः ॥
पूजयामीत्युड्डीयाने पूजयेद्‍ हृदि सुव्रते ।

श्रीपदं च समालिख्य जालन्धरपदं ततः ॥
महापीठे समालिख्य नादहीना रमा ततः ।
जालेश्वरी-पदं दत्त्वा देवी जाली समालिखेत् ॥
नाथदेवपदं दत्त्वा श्रीजालाम्बापदं ततः ।
श्रीषष्ठीशपदं दत्त्वा नाथ देवपदं ततः ॥
पादश्रीपादुकां दत्त्वा पूजयामीति पूजयेत् ।
अनेन मनुना देवि पूजयेन् नाभिमण्डले ॥
श्रीपदं च ततो दत्त्वा पूर्णेश्वरीं वदेत् ततः ।
देवीश्रीपादश्रीपूर्ण-नाथदेवपदं तथा ॥
श्रीचामुण्डापदमाभाष्य देवीश्रीपदमालिखेत् ।
उड्डीशनाथमालिख्य देवपादपदं ततः ॥
श्रीपादुकां ततो दत्त्वा कामेश्वरीं पदं ततः ।
देवीश्रीपदमाभाष्य कामेश्वरानन्दनाथ च ॥
श्रीमहापदमाभाष्य तुष्टाम्बाश्रीपदं ततः ।
मित्रीशनाथमाभाष्य पादश्रीपादुकां ततः ॥
पूजयामि ततो दत्त्वा पूजयेत् कामशासने ।
गुह्यपीठस्य वामे तु गुरुपङ्क्तिं यजेत् सुधीः ॥
अनङ्गकुसुमाद्येन हृत्सरोजे यजेत् पुनः ।
वाग्भवं ब्लौं समुच्चार्य क्लीमात्मकं वदेत् ततः ॥
ब्लौं ब्लुं ब्लुः समुच्चार्य मन्त्रेणानेन साधकः ।
योनिमुद्रां प्रदर्श्याथ योनौ क्षोभं विचिन्तयेत् ॥
वाग्भवं कामराजं च स्त्रीबीजं तदनन्तरम् ।
क्षोभणी नाम विद्येयं स्तनयोः क्षोभमाचरेत् ॥
योनिमुद्रां प्रदर्श्याथ शनैरेव हि साधकः ।
वाग्भवं स्फ्रं समुच्चार्य ब्लें ब्लौं ब्लूं च ततो वदेत् ॥
क्लीमात्मकं समुच्चार्य ह्रीमात्मकं समुच्चरेत् ।
क्षमात्मकं ततो दत्त्वा तस्याः क्षोभं विचिन्तयेत् ॥
द्राविणी नाम विद्येयं चिन्तयेद् योनिमध्यतः ।
ततः परानन्दमयो भूत्वा निर्भरमानसः ॥
चिन्तयेन्निजविद्याया बीजं मूर्ध्नि सरोजके ।

ततस्तस्या योनिमध्ये मूलमन्त्रञ्च साधकः ॥
पुष्पाञ्जलित्रयं दत्त्वा ततः क्षोभं विचिन्तयेत् ।
ज्ञानार्णवे—दूतीदेहकृतान् न्यासान् स्वदेहेऽपि विचिन्तयेत् ।
वीरचूडामणौ—अथ न्यासं प्रवक्ष्यामि शिवात्मानं विभावयेत् ।
शिवात्मानमिति शिवमात्मानमित्यर्थः । तथा—
पञ्चवक्त्रे महादेवं कलायुक्तं न्यसेत् क्रमात् ।
ईशानः सर्वविद्यानां शशिनी प्रथमा कला ॥
ईश्वरः सर्वविद्यानामङ्गदा तदनन्तरम् ।
ब्रह्माधिपतिः शब्दान्ते ब्रह्मणोऽधिपतिः पुनः ॥
ब्रह्मेष्टदा शिवो मेऽस्तु मरीचिसंपुटं न्यसेत् ।
सदाशिवों समुच्चार्य अंशुमालिन्यथापरा ॥
तत्पुरुषाय विद्महे कलाशान्तिरितीरिता ।
महादेवाय धीमहि कलाविद्या तथैव च ॥
तन्नो रुद्रपदं पश्चात् प्रतिष्ठा कथिता कला ।
प्रचोदयात् समुच्चार्य निवृत्तिः स्यात् ततः परम् ॥
पूर्वपश्चिमयाम्येषु उत्तरेष्वथ तु क्रमात् ।
हृदये विन्यसेद् देवि अघोरेभ्यस्तमःकलाम् ॥
अथ घोरेभ्यो मोहान्ते ग्रीवायां विन्यसेत् ततः ।
घोरान्ते स्यात् क्रिया पश्चात् दक्षिणांशे प्रविन्यसेत् ॥
निद्रां घोरतरेभ्यो वै वामांसे विन्यसेत् ततः ।
सर्वतः सर्वमुच्चार्य व्याधिं नाभौ प्रविन्यसेत् ॥
सर्वेभ्यस्तत् कलां मृत्युं कुक्षौ देशे प्रविन्यसेत् ।
नमस्तेऽस्तु क्षुधां पश्चात् कलां पृष्ठे न्यसेत् क्रमात् ॥
रुद्ररूपेभ्य इत्यन्ते तृषां तारनमोऽन्तकाः ।
वामदेवाय नमोऽन्ते रजा स्याद् गुह्यदेशके ॥
मुष्के सव्ये प्रविन्यस्य रक्षां ज्येष्ठाय वै नमः ।
रुद्राय नमो रतिं पश्चाद् वाममुष्के कलामिमाम् ॥
कालाय नम इत्यन्ते पालिनी ऊरुदक्षिणे ।
कलकामा च देवेशि वामे विकरणाय च ॥
नमःपदं समुच्चार्य संयमनीं दक्षजानुनि ।

बलक्रिया समादिष्टा वामे विकरणाय च ॥
नमोऽन्ते वृद्धिमुच्चार्य दक्षिणे स्फिचि विन्यसेत् ।
बलप्रमथनाय नमो रात्रिं वामे प्रविन्यसेत् ॥
सर्वभूतदमनाय नमोन्ते ब्राह्मणीं कलाम् ।
कटिदेशे प्रविन्यस्य नमोन्ते मोहिनीं कलाम् ॥
दक्षिणे पार्श्वके न्यस्य उन्मनाय मनोज्वराम् ।
पादयोस्तननासासु मूर्ध्नि बाहुयुगे न्यसेत् ॥
सद्योजातोद्भवाः सम्यगष्टौ मन्त्री कलाः क्रमात् ।
सद्योजातं प्रपद्यामि सिद्धिः स्यात् प्रथमा कला ॥
सद्योजाताय वै भूयो नमः स्याद् वृद्धिरीरिता ।
भवे द्युतिस्तृतीया स्यादभवे तदनन्तरम् ॥
लक्ष्मीश्चतुर्थी कथिता ततो नातिभवेपदम् ।
मेधाख्या पञ्चमी प्रोक्ता कला भूयो भवस्व माम् ॥
प्रज्ञा समीरिता षष्ठी भवान्ते स्यात् प्रभा कला ।
उद्भवाय नमः पश्चात् स्वधा स्यादष्टमी कला ॥
प्रणवाद्याश्चतुर्थ्यन्ता नमोन्ताश्च प्रविन्यसेत् ।
एवं न्यासविधिं कृत्वा स्वयं शैवं विभावयेत् ॥
पञ्चाक्षरं पुरस्कृत्य रुद्रध्यानपरायणः ।
सामरस्यमयं कृत्वा रक्षार्थं कवचं पठेत् ॥
बद्ध्वा तु क्षोभिणीं मुद्रां यन्त्रमध्ये विनिःक्षिपेत् ।
भगं कुण्डं स्रुवो लिङ्गमाज्यं चैव तु वीर्यकम् ॥
सर्वतत्त्वं समुत्सार्य सहस्रं जपमाचरेत् ।

ज्ञानार्णवे तु—धूपादिकं समर्प्याऽथ स्वलिङ्गे तदनन्तरम् ।
तारं च भुवनेशानि महात्रिपुरसुन्दरी ॥
नमः शिवाय विद्येयं दशार्णा परिकीर्त्तिता ।
अनया विद्यया देवि स्वलिङ्गे पूजयेच्छिवे ॥

महात्रिपुरसुन्दरी त्रिपुटात्मिका विद्या ।

यजेत् तत्पुरुषाघोर-सद्योवामेशसंज्ञकान् ।
निवृत्तिं च प्रतिष्ठां च विद्यां शान्तिं तथैव ॥
शान्त्यतीतां च सम्पूज्य षडङ्गावरणं यजेत् ।

समग्रविद्यामुच्चार्य नन्दिकेशं प्रपूजयेत् ॥
मध्ये वृषणयोर्देवि गन्धपुष्पाक्षतादिभिः ।
निवेद्य पुष्पधूपादि विजितेन्द्रियमानसः ॥
सर्वसंक्षोभणाः मुद्राः बद्ध्वा योनिं प्रचालयेत् ।
क्षोभिण्या चाथवा देवि गजतुण्डाख्ययाऽथवा ॥
उच्चरन् भगमालाख्यां द्राविणीबीजमुच्चरन् ।
अक्षुब्धः सन् वरारोहे यावद्रेतः प्रवर्त्तते ॥

भगमालामन्त्रस्तु तत्रैव—

वाग्भवं भगशब्दान्ते भगे भगिनि चालयेत् ।
भगोदरि भगान्ते तु भगमाले भगावहे ॥
भगगुह्ये भगप्रान्ते योनिप्रान्ते भगान्तके ।
निपातिनि च सर्वान्ते ततो भगवशङ्करि ॥
भगरूपे ततो लेख्यं नीरजायतलोचने ।
नित्यक्लीन्ने भगप्रान्ते स्वरूपे सर्वमालिखेत् ॥
भगानिमेह्यानयान्ते वरदेऽथ समालिखेत् ।
रेते सुरेते भग च क्लिन्ने क्लिन्नद्रवे ततः ॥
क्लेदय द्रावय चाथ सर्वसत्त्वान् भगेश्वरि ।
अमोघे भगविच्चे च क्षुभ क्षोभय सर्वं च ॥
सत्त्वान् भगेश्वरि ब्रूयाद् वाग्भवं ब्लूं जमादिकम् ।
में ब्लूं मों ब्लूं च हें ब्लूं च हें क्लिन्ने च ततः परम् ॥
सर्वाणि च भगान्यन्ते मे वशं चानयेति च ।
स्त्रीबीजं च हरप्रान्ते ब्लें मायात्मकमक्षरम् ॥
भुवनेशीं समालिख्य विद्येयं भगमालिनी ।

वीरतन्त्रे—धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा ।
सुषुम्णा वर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥
स्वाहान्तोऽयं महामन्त्र आरम्भे परिकीर्त्तितः ।
ततो जपेत् प्रियां गच्छन् स्त्रियं त्रिभुवनेश्वरीम् ॥

कुलामृते—स्वाहान्तो होममन्त्रोऽयं प्रतिघाताहुतिप्रिये ।
पूर्णाहुतिं रतान्ते च जुहुयान् मनुनाऽमुना ॥
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ।

धर्माधर्मौ कलास्नेहं पूर्णवह्नौ जुहोम्यहम् ॥
स्वाहान्तोऽयं भवेन् मन्त्रो घोरपातकमुक्तिदः ।
वीरतन्त्रे—स्वाहान्तोऽयं महामन्त्रः शुक्रत्यागे प्रकीर्त्तितः ।

यदि च अदीक्षिता शक्तिर्भवति तदा प्राक् तच्छुद्धिमपि कुर्यात् । तदुक्तं कुलतन्त्रे—अभिषेकाद् भवेच्छुद्धिर्मन्त्रस्योच्चारणाच्छुतौ ।
रतिकाले महेशानि दीक्षाकाले च कन्यकाः ॥

शुध्यन्तीति शेषः ।

सुरया रेतसा वापि जलेन मनुनाऽमुना ।
यामलेऽपि—सुदीक्षिता च या शक्तिः सैव शुद्धा भवेत् सदा ।
अदीक्षिता तु या शक्तिर्मायां तस्यै निवेदयेत् ॥

मातङ्गीतन्त्रेऽप्युक्तम्—

दीक्षामात्रेण शुध्यन्ति स्त्रियः सर्वत्र कर्मणि ।

कुलामृतदीपिकायाम्—

अदीक्षितकुलासङ्गात् सिद्धिहानिः प्रजायते ।
तथा—आदौ बालां समुच्चार्य त्रिपुरायै समुच्चरेत् ।
नमःशब्दं समुच्चार्य इमां शक्तिं ततो वदेत् ॥
पवित्रीकुरुशब्दान्ते मम शक्तिं कुरु प्रिये ।
वह्निजायां समुच्चार्य शुद्धिमन्त्रः प्रकीर्त्तितः ॥
अनेन मनुना देवि अभिषिक्ताः स्त्रियः सदा ।
रममाणोऽत्र सन्नित्यं सर्वसिद्धिमवाप्नुयात् ॥
तथा—पीत्वालिङ्गय कुलाचारे प्रमदां यौवनान्विताम् ।
कोटिजन्मार्जितं पापं तत्क्षणादेव नाशयेत् ॥

एते च दूतीसंस्कारा अर्घस्थापनात् प्राक् कुण्डगोलोद्भवार्थम् । अनाचरणपक्षे तदर्थम् । तत्राचरणपक्षे तु "धर्माधर्महविर्दीप्त" इत्यादिमन्त्राभ्यां निधुवनान्तम् । इयांस्तु विशेषः—यत्र निधुवनान्तमेव कर्म तत्र तु अर्घप्रक्षेपार्थं देवतातर्पणार्थं च निधुवनान्ते द्रव्यग्रहणमपि । तदुक्तं ज्ञानार्णवे—

संस्कारो मन्त्ररूपस्तु वचनं स्तवनं भवेत् ।
आलिङ्गनं तु कस्तूरीकर्पूरघुसृणादिकम् ॥
मथनं तर्पणं विद्धि वीर्यपातो विसर्जनम् ।
एवं द्रव्येण संशोध्य शिवशक्तिमयं प्रिये ॥

बीजामृतं परं ब्रह्मरूपं विक्षिप्य सुन्दरि ।
अर्घ्यपात्रामृते मुक्तो निर्विकल्पः सदानघः ॥
श्रीविद्याक्रममभ्यर्च्य परं ब्रह्ममयो भवेत् ।
कौले—आलिङ्गनं चुम्बनं च स्तनयोर्मर्दनं शनैः ॥
दर्शनं स्पर्शनं योनेर्विकारो लिङ्गघर्षणम् ।
प्रवेशश्चालनं शक्तेर्नवपुष्पैश्च पूजनम् ॥
ब्रह्मयामले—न दद्याच्चुम्बनं यस्तु दरिद्रो जायते ध्रुवम् ।
आलिङ्गनं विना देवि कुष्ठी भवति पार्वति ॥
विना दन्तक्षतैर्देवि लोके भवति निन्दितः ।
तथा—आलिङ्गने हरेद्रोगान् धनधान्यादि चुम्बने ॥
नखदन्तक्षताद्यैश्च तदा मोक्षः प्रजायते ।
सायुज्यं सङ्गमेन स्यात् सत्यमेव न संशयः ॥
रौद्रे—तदङ्गस्पर्शनात् सौख्यं संयोगामृतलक्षणम् ।
महाकामकलां ध्यायेत् संयोगामृतरूपिणीम् ॥
संयोगाज्जायते सौख्यं परमानन्दलक्षणम् ।
कुलद्रव्यामृतं यत्नाद् गृह्णीयाद् दुर्लभं नरः ॥

कुण्डगोलग्रहणप्रकारस्तु कुलामृते—

भावयेत् कामभावेन आत्मतत्त्वं न चोत्सृजेत् ।
शुद्धमन्त्रौषधेनैव योनेस्तु मथनं चरेत् ॥
मथ्यमाने च तस्या हि जायते तत्त्वमुत्तमम् ।
गृह्णीयात् तत्प्रयत्नेन द्रव्यं कुण्डोद्भवं शुभम् ॥
ब्रह्मयामले—तेनामृतेन दिव्येन त्रिपुरां तर्पयेत् सदा ।
सान्निध्यात् तत्क्षणाद् वापि प्रीता सिद्धिं प्रयच्छति ॥
समस्तदेवतानां च तर्पणं च सदाऽमृतैः ।
गुरूणां साधकानां च सर्वेषां तर्पणं चरेत् ॥
तेनामृतेन द्रव्येन सर्वे तुष्टा भवन्ति च ।
यत् कामं कुरुते मन्त्री तत्क्षणादेव सिध्यति ॥
कुलामृतं समादाय तत्रार्घं निक्षिपेद् बुधः ।
ततः सोमकलाः पूज्याः साधकैर्निर्मलाशयैः ॥
कौले—मधुभाण्डसहस्रैस्तु मांसभारशतैरपि ।

नैव तुष्टा भवेद् देवि भगलिङ्गामृताद्दृते ॥

देवीयामले—दूतीयागविधिं वक्ष्ये कौलधर्मोत्तमोत्तमम् ।
तस्यानुष्ठानमात्रेण स्वयं ब्रह्मत्वमाप्नुयात् ॥

तथा—दूतीयागे कृते मन्त्री सर्वज्ञो जायते ध्रुवम् ।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥
यैः कृतं यजनं दूत्यास्तैरिष्टाः क्रतवोऽखिलाः ।
सर्वतीर्थमयः प्रोक्तः सर्वदेवमयो भवेत् ॥
पुरश्चर्यादिसफलं कृतं तेन न संशयः ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥
आसमुद्रा च धरणी दत्ता तेन सदक्षिणा ।
मेरुमन्दरतुल्यानि सुवर्णान्यर्पितानि वै ॥
गोकोटिदानात् यत् पुण्यं तत् पुण्यं जायते प्रिये ।
तस्मात् सर्वप्रयत्नेन दूतीयागं समाचरेत् ॥
पूजासम्पूर्णदं भद्रे सर्वारिष्टप्रशामकम् ।
योनिपूजां विना पूजा कृता चाप्यकृता भवेत् ॥
आयुरारोग्यविभवानमितान् लभते नरः ।
अनेनैव विधानेन विषार्त्तो निर्विषो भवेत् ॥
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
मातङ्गीशक्तिमभ्यर्च्य तया साकं समर्चयेत् ॥
मातङ्गी मन्मथोपेता सर्वकामार्थसिद्धये ।
शक्त्या साकं सदा पूज्या मातङ्गी मन्त्रदेवता ॥
सा देवी शक्तिहीना तु न ददाति मनोरथम् ।

ब्रह्मयामले— नारद उवाच—
सर्वज्ञ जगतां नाथ शाक्तं चेच्छ्रुतिचोदितम् ।
मातङ्गीपूजनं तत्र कथं मुक्तिप्रदायकम् ॥
अर्चने प्रथिता वेश्या वेश्या सा तु रजस्वला ।
रजस्वला च मातङ्गी सा दूती सर्वमङ्गला ॥
इति प्रोक्तं त्वया पूर्वमिदानीं तद्विपर्ययः ।
तव वाक्यमनुब्रह्मन्नेतद् वद पितामह ॥

ब्रह्मोवाच—मा कुरुष्वात्र सन्देहं वेदोक्तं शाक्तमुत्तमम् ।

अस्ति सर्वज्ञकल्पोऽसौ मतङ्गो मुनिसत्तमः ॥
वर्षाणामयुतं वत्स तप उग्रं चचार ह ।
तेन प्रीता महादेवी देवानां हितकारिणी ॥
वरं वृणीष्व भगवन् दास्यामि तव वाञ्छितम् ।
तच्छ्रुत्वा द्विजवर्यस्तां ययाचे धर्मसाधनम् ॥
हे देवि जगतां मातः प्रीता चेद् यदि साम्प्रतम् ।
अपत्यतां समासाद्य मत्कुलालम्बनं कुरु ॥
इत्यभ्यर्च्य मुनिश्रेष्ठो जनयामास तां सुताम् ।
श्यामलां चारुवदनां चीनांशुकसमन्विताम् ॥
सारिकां ज्ञानसम्पन्नां जपमालां कराम्बुजैः ।
धारयन्तीं विशालाक्षीं शङ्खताटङ्कशोभिनीम् ॥
सा बभूव महादेवी मतङ्गकुलनन्दिनी ।
मातङ्गीति तदा देवी विख्याता वरदायिनी ॥
तां विलोक्य तदा शम्भुर्दूतीं चक्रे सुलक्षणाम् ।
त्रिपुरं जेतुकामेन योनिपूजा तदा कृता ॥
प्रत्यालीढा स्थिता देवी पूजां स्वीकृत्य निश्चला ।
तदा दृष्टरजोभूतां तां वव्रे शङ्करः प्रियाम् ॥
तदा प्रभृति सञ्जातो दूतीयागो मनोहरः ।
प्रणयेन तदा शम्भुस्तया सार्धं रतो भवेत् ॥
प्रणवान्तर्गतं मन्त्रं मातङ्ग्याख्यं विनिर्गतम् ।
सर्वसौभाग्यजननं मालामन्त्रमभूत् तदा ॥
रमा चापि पदं दिव्यमनिन्द्यं लोकरञ्जनम् ।
मातङ्गीमन्त्रमत्यर्थं मन्मथप्रतिपादकम् ॥
आद्यन्तशून्या सा देवी तस्मात् ख्याता तदन्त्यजा ।
मातङ्गी अन्त्यवर्णस्था तदा सा अन्त्यजाऽभवत् ॥
अन्त्यजानां द्विजानां च चक्रे ऐक्यं प्रशस्यते ।
सा देवी सर्ववर्णानां वरं दत्त्वा निरुत्तरम् ॥
कृत्वा सङ्केतसमयं चक्रे मातङ्गमुत्तमम् ।
न दोषः सर्ववर्णानामिति दत्त्वा वरं तदा ॥
न दोषस्तत्र विज्ञेयः सर्वं ते श्रुतिचोदितम् ।

देवीमुद्दिश्य मोक्षार्थं कृतं यद् दोषवर्जितम् ॥
एतच्छास्त्रमिदं दिव्यं न वाच्यं श्रुतिचोदितम् ।
अन्तर्यागमिदं ज्ञेयं बहिर्यागं च वैदिकम् ॥
मन्त्रतन्त्रसमायुक्तं तद्द्वयं ब्रह्मबोधकम् ।
चक्रसङ्केतसमयं सर्वं तुभ्यं प्रकाशितम् ॥
गोपनीयं प्रयत्नेन न वाच्यं पशुसन्निधौ ।
त्यज शङ्कां महाभाग सत्यमेतन्मयोदितम् ॥
मातङ्गीपूजनं श्रेष्ठं दूतीयागे मनोहरम् ।

दूतीयागादौ च विप्राणां नाधिकारः । तदुक्तं बृहच्छ्रीक्रमसंहितायाम्—

वामागमोऽपि विप्रस्तु मद्यं मांसं न भक्षयेत् ।
स्वकीयां परकीयां वा नाकृष्य ब्रह्मणो यजेत् ॥ इति ।

अगस्त्यसंहितायामपि गौरीं प्रति शिववाक्यम्—

आवाभ्यां पिशितं रक्तं सुखं वापि सुरेश्वरि ।
वर्णाश्रमोचितं धर्ममविचार्याऽर्पयन्ति ये ॥
भूतप्रेतपिशाचास्ते भवन्ति ब्रह्मराक्षसाः ।

रक्तमार्त्तवम् । इदमपि ब्राह्मणपरमेव अन्यथा तद्विधायकवचनानां निर्विषयत्वापत्तेः । ब्राह्मणेतराणामपि योगिनामेव दूतीयागेऽधिकारः । तदुक्तं सिद्धिंनाथसंहितायाम्—अद्वैतज्ञाननिष्ठो यो योऽसौ संसारपारगः ।

स एव यजने दूत्या नाऽधिकारी परो भवेदिति ॥

## आगमप्रामाण्यविचारः

ननु कूर्मपुराण-गोदावरीखण्ड-सूतसंहितादौ गौतमसप्तब्राह्मणव्यामोहाय तत्प्रेरितशिवप्रणीतान्येतानि तन्त्राणीति प्रतिपादनात् कथमागमानां प्रामाण्यम्? अथ नृसिंह-राम-गोपालतापिन्यादि-प्रत्यक्षश्रुतिमूलकत्वेन तेषां प्रामाण्यमिति चेत् । न । प्रत्यक्षश्रुतिमूलकानां तथात्वेऽपि तदमूलकानामप्रमाणत्वादिति चेन्मैवम् । फलसंवादेनाऽयुर्वेदादिप्रामाण्येन सकलवेदप्रामाण्यवदप्रत्यक्षश्रुतिमूलकानामपि प्रत्यक्षश्रुतिमूलकवत् प्रामाण्योपपत्तेः । भारतादौ पञ्चरात्रपाशुपतादीनां प्रशंसाप्रतिपादनात् ।

"अभावे वेदमन्त्राणां पञ्चरात्रोदितो विधिः" । इति वराहपुराणवचनाच्च ।

एवं च—न च वेदादृते किञ्चिच्छास्त्रं धर्माभिधायकम् ।
योऽन्यत्र रमते सोऽसौ न सम्भाष्यो द्विजातिभिः ॥
यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च ।

श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥
कापालं पञ्चरात्रं च यामलं वाममार्हतम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ।
मया सृष्टानि शास्त्राणि मोहायैषां प्रवर्त्तते ॥

इति कूर्मपुराणवचनानि वेदस्तुतिमात्रपराणि न त्वागमाप्रामाण्यबोधकानि । वस्तुतः "कापालं पञ्चरात्रं चे"त्यादिकूर्मपुराणवचनेन वेदामूलकत्वबोधनात् ईश्वरप्रणीतत्वेन वेदवत् स्वातन्त्र्येणैवागमानां प्रामाण्यम् । ईश्वरेण वेदस्य प्रणयनाच्च । प्रासादश्रीकरादिमन्त्रे वैदिकमन्त्राणामङ्गत्वप्रतिपादनमिति नागमानां वेदोपजीवकतेति रहस्यम् ।

ननु श्रुतिस्मृतिलोकविरुद्धानां वागमानामप्रामाण्यं वज्रलेपायितमिति चेत् । न । तद्विरोधस्यैवाभावात् । सौत्रामणिवाजपेयादौ सुराग्रहणस्य महाव्रते— "धर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते" इत्यादिवचनात् सकलवेदस्याप्यप्रामाण्यप्रसङ्गात् । अर्थवादानां स्वार्थे प्रामाण्याभावात् । भारतादिविरोधाच्च । अन्यथा—"एवं त्रयीशब्दानथर्यवः कारयन्त्येतस्मिन्नहनि प्रभूतमन्नं दद्याद् राजपुत्रेण चर्माव्याधयन्त्याघ्नन्ति भूमिदुन्दुभिं पत्न्यश्वकाण्डवीणाभूतानां(?) च मैथुनं ब्रह्मचारिपुंश्चल्योः सम्प्रवादः" इत्याश्वलायनभाष्ये ब्रह्मचारिपुंश्चलीसमागमस्य छान्दोग्योपनिषदादौ वामदेव्युपासने परकलत्रग्रहणस्यापि प्रतिपादनात् । तथाहि छान्दोग्योपनिषदि—"उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रीं सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ॥१॥ स य एतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात् प्रजायते सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न काञ्चन परिहरेत् तद्व्रतम्" ॥२॥ तथा—"योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवती"ति । बृहदारण्यकेऽपि—"स ह प्रजापतिरीक्षां चक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियं ससृजे तां सृष्ट्वाऽध उपास्त तस्मात् स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत् तेनैनामभ्यसृजत् ॥ तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासां स्त्रीणां सुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासं चरत्यास्य स्त्रियः सुकृतं वृञ्जते ॥ एतद्ध

स्म वै तद्विद्वानुद्दालक आरुणिराहैतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान् कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात् प्रयन्ति य इदमविद्वांसोऽधोपहासं चरन्ती"ति। एवं गोमेधाश्वमेधनरमेधादिवन्नरादिवरैप्यविरोधः। कूर्मपुराणादीनां च तात्पर्याभिव्यक्तिरहितानां प्रतीयमान-विरुद्धार्थकानेकतन्त्र-प्रणयन-प्रयुक्तब्राह्मणप्रतारणसम्पादितगोतमकर्त्तव्यताकानि तन्त्राणीतेतत्परत्वम्। तदुक्तं लिङ्गपुराणे—

शिवेन देवदेवेन भक्तानां हितकाम्यया।
वेदात् षडङ्गानुद्धृत्य योगशास्त्राच्च सर्वतः॥
तपश्च विपुलं तप्त्वा देवदानवदुश्चरम्।
अब्दैर्दशादिसंयुक्तं गूढमप्राज्ञनिन्दितम्॥
वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित् समम्।
शिवेन कथितं शास्त्रं धर्मकामार्थमुक्तये॥
शतकोटिप्रमाणेन तत्र पूजा कथं विभो। इति।

गूढमिति अनभिव्यक्ततात्पर्यकमित्यर्थः। अप्राज्ञनिन्दितमिति तात्पर्यानभिज्ञनिन्दितमित्यर्थः। तात्पर्यं क्वचित् तन्त्रे व्यक्तीकृतं क्वचिन्न। अत एवोक्तं—"वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित् समम्"इति। तेन—"ब्राह्मणो मदिरां दत्त्वा ब्राह्मण्यादेव हीयत" इति। श्रीक्रमे—"वामागमोऽपि विप्रस्तु मद्यं मांसं न भक्षयेत्। स्वकीयां परकीयां वा नाकृष्य ब्राह्मणो यजेत्"॥ इति। श्रीक्रमसंहितायाम्—"सिंहं व्याघ्रं नरं दत्त्वा रौरवं नरकं व्रजेत्"। इति तन्त्रान्तरे व्यक्तीकृतमन्यत्रापि बोध्यम्। एतेन स्मृतिलोकविरुद्धावपि प्रत्युक्तौ। वीरसाधनादिकं च न केनापि विरुद्धम्। अत एव काशीखण्डे—"महाश्मशानेषु निशा भूयस्यप्यतिवाहिता"। इति मदनवाक्यम्। "एष एव श्मशानेषु देवो वसति निर्दहन्। यजन्ते तं जनास्तत्र वीरस्थाननिषेविनः"॥ इति महाभारतवचनं च तत्र निष्प्रत्यूहं प्रमाणमाकलयामः।

न च—"स्वागमैः कल्पितैस्तैस्तैर्जनान् मद्विमुखान् कुरु। मां च गोपय येन स्यात् सृष्टिरेवोत्तरोत्तरा"॥ इति पद्मपुराणवचनं तदप्रामाण्यबोधकमिति वाच्यम्। तस्य वैष्णवधर्मस्तावकत्वात्। मां च गोपयेत्युत्तरवाक्येन स्वागमैरित्यस्यानभिव्यक्ततात्पर्यकागमैरित्यर्थाच्च। अत एव—"हरेर्नाम न गृह्णीयात् न स्पृशेत् तुलसीदलम्"। इत्यादि वाक्यं तादृशमहाभिप्रायानुरूपं प्राग् व्याकरवमिति संक्षेपः।

इति महामहोपाध्याय-ठक्कुर-श्रीनरसिंह-विरचिते
ताराभक्तिसुधार्णवे षष्ठस्तरङ्गः॥ ६॥

## सप्तमस्तरङ्गः

### अथ नैमित्तिकम्

स्वतन्त्रे—नित्यं नैमित्तिकं काम्यं सापेक्षं पूर्वपूर्वतः ।
अन्यथा तु भवेद् व्यर्थं कुर्यादावश्यकं ततः ॥

नीलतन्त्रे—नित्याचाररतो मन्त्री कुर्यान्नैमित्तिकार्चनम् ।
नैमित्तिकार्चने सिद्धः कुर्यात् काम्यमखण्डितम् ॥

कुलार्णवे—कृष्णाष्टमी चतुर्दशी चामावास्या च पूर्णिमा ।
संक्रान्तिः पञ्चपर्वाणि तेषु पुण्यदिनेषु च ॥
पीठोपगमने देवि वीरस्वजनदर्शनात् ।
देशिकागमने पुण्यतीर्थे दैवतदर्शने ॥
यथाबलं यथाश्राद्धं यथादेशं यथोचितम् ।
यथाजलं यथाद्रव्यं यथा पूजां समाचरेत् ॥
न कुर्यात् कौलिको मोहाद् देवताशापमाप्नुयात् ।

कुलचूडामणौ—देवतातिथिनक्षत्र-वारयोगेषु चेश्वरि ।
सोमसूर्योपरागेषु मन्वादिषु युगादिषु ॥

पूजा कार्येति शेषः । अत्र देवतातिथ्यादयः कुलाख्या एव । ते च वक्ष्यन्ते ।

यामले—आत्मनो जन्मदिवसे तथा निजगुरोरपि ।
विद्यायाः प्राप्तिदिवसे नाथव्याप्तिदिने तथा ॥
दर्शे युगादावयने विषुवे संक्रमे तथा ।
पूजां च महतीं कुर्याद् देवतातोषहेतवे ॥

तन्त्रराजे गुरोस्तु जन्मदिवसे विद्याप्राप्तिदिनेषु च ।
स्वजन्मदिवसे नाथव्याप्तिवासर एव च ॥
अक्षरत्रयसम्पातदिने पूर्णादिने तथा ।

पूजा कार्येति शेषः । नाथव्याप्तिर्गुरुमरणम् । अक्षरत्रयसम्पातः युगाक्षर-दिनाक्षरोदयाक्षराणामैक्यम् । तत्तु सुन्दरीमधिकृत्यैवोक्तम् । अतस्तत्रैव निमित्तम् ।

कुलचूड़ामणौ—कुलवारे कुलाष्टम्यां चतुर्दश्यां विशेषतः ।
योगिनीपूजनं तत्र प्रधानं कुलपूजनम् ॥
यथा विष्णुतिथौ विष्णुः पूजितो वाञ्छितप्रदः ।

तथा कुलतिथौ दुर्गा पूजिता वाञ्छितप्रदा ॥

कुलतिथाविति वारनक्षत्रयोरुपलक्षणम्। कुलवाराद्यो यामले उक्ताः—

रविश्चन्द्रो गुरुः सौरिश्चत्वारस्त्वकुला मताः।
भौमशुक्रौ कुलाख्यौ तु बुधवारः कुलाकुलः ॥
द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम्।
विषमाश्चाकुलाः प्रोक्ताः शेषाश्च तिथयः कुलाः ॥
वारुणार्द्राभिजिन्मूलं कुलाकुलमुदाहृतम्।
कुलानि समधिष्ण्यानि तच्छेशाण्यकुलानि तु ॥

त्रिकुले तु पूजावश्यकी।

कुलवारे कुलर्क्षे च कुललग्ने कुलक्षणे।
योगिनीनां सदा पूजा मनसापि न हीयते ॥

इति कुलचूडामणिवचनात्—

तथा—कुलवृक्षे यजेद् देवीं कुलवृक्षान् नमेत् सदा।
न स्वप्यात् कुलवृक्षाधो नारोहेत कदाचन ॥
न चैतांश्छेदयेन् मन्त्री न पादैस्तान् स्पृशेदपि।
तत्पत्रेषु न भोक्तव्यं प्राणैः कण्ठगतैरपि ॥
सहकारः कर्णिकारः केसरस्तिलकस्तथा।
कदम्बः सिन्धुवारश्च कङ्केलिश्चम्पकाह्वयः ॥
श्लेष्मातकः कुरुवको निम्बश्चलदलस्तथा।
यज्ञाङ्गो जटिलो विल्वः कुलवृक्षा मता अमी ॥
एषु सन्निहिता नित्यं योगिन्यः सर्वकामदाः।
सर्वपीठेषु पीठं तत् कामरूपं फलप्रदम् ॥
सकृदप्यर्चिता यत्र देवी वाञ्छितसिद्धिदा।
तस्माच्छतगुणं पुण्यं कामाख्यायोनिमण्डलम् ॥
द्विविधं तत् समाख्यातं व्यक्तमव्यक्तमेव च।
व्यक्तादव्यक्तमनघं महापुण्यफलप्रदम् ॥
लभ्यते यदि भाग्येन कुलज्ञेन मनीषिणा।
तदा तत्र यजेद् देवीमनेकैरुपचारकैः ॥
दृश्यतेऽपि यदा भाग्यात् तदार्चा मनसाचरेत्।
पर्वते विपिनोद्देशे निर्जने मण्डपे तथा ॥

चतुष्पथे श्मशाने वा गच्छन् साधकसत्तमः ।
ध्यात्वा देवीं मनुं जप्त्वा नत्वा स्थाने व्रजेत् ततः ॥
पशुशक्तिं पक्षिशक्तिं गृध्रं वीक्ष्य नमेच्छिवाम् ।
कृशोदरि महाचण्डे मुक्तकेशि बलिप्रिये ॥
कुलाचारप्रसन्नास्ये नमस्ते शङ्करप्रिये ।
श्मशाने च शवं वीक्ष्य मन्त्रपूर्वकमानमेत् ॥
प्रदक्षिणमनुव्रज्य लभते सिद्धिमुत्तमाम् ।
घोरदंष्ट्रे कठोराक्षि किटिशब्दप्रणादिनि ॥
घोरे घोरकरास्फाले नमस्ते चितिवासिनि ।
रक्तं वस्त्रं तथा पुष्पं विलोक्य त्रिपुरां नमेत् ॥
बन्धूकपुष्पसङ्काशे त्रिपुरे भयनाशिनि ।
भाग्योदयसमुत्पन्ने नमस्ते वरवर्णिनि ॥
राजानं राजपुत्रं वा हस्त्यश्वस्यन्दनान्यपि ।
अस्त्राणि वीरपुरुषं महिषं कुलनायकम् ॥
कृष्णवर्णं तथा पुष्पं दृष्ट्वा दुर्गां नमेद् बुधः ।
जय देवि जगद्धात्रि त्रिपुरार्चितदेवते(?) ॥
भक्तेभ्यो वरदे देवि महिषघ्नि नमोऽस्तु ते ।
प्रथमं च द्वितीयं च क्रीडालोलां कुमारिकाम् ॥
युवतीनां समूहं च युवतीमेकवृक्षकम् ।
निरीक्ष्य मन्त्रवन्मूलं प्रजपेद् भैरवं नमेत् ॥
नमामि वरदे देवि मुण्डमालाविभूषिते ।
रक्तमालासमाकीर्णे वरदे त्वां नमाम्यहम् ॥
प्रणमेत् सर्वसिद्ध्यर्थं दृष्ट्वैतानि विचक्षणः ।
अन्यथा न भवेत् तस्य मन्त्रसिद्धिः कदाचन ॥

मत्स्यसूक्ते—अष्टम्यां पूजनं देव्या सर्वकामफलप्रदम् ।
रम्भापुष्पं बीजपूरं सुगन्धिपरिमिश्रितम् ॥
मिश्रीकृत्य बलिं दद्यादष्टम्यां च विशेषतः ।
कुलं क्षीरं तथा दद्याद् दधिशर्करयाऽन्वितम् ॥
दानमक्षय्यसिद्ध्यर्थं दद्याद् देव्यैः प्रयत्नतः ।

उदयाकरे—षष्ठी भाद्रपदे मासि कृष्णाश्विनचतुर्दशी ।

कार्त्तिके नवमी शुक्ला मार्गे कृष्णा तु पञ्चमी ॥
पौषे तु पूर्णिमा देवि माघे सितचतुर्थिका ।
फाल्गुनैकादशी कृष्णा चैत्रे कृष्णा त्रयोदशी ॥
वैशाखे च तृतीया स्याज् ज्यैष्ठे दशहरा स्मृता ।
आषाढ़े द्वादशी कृष्णा अमावास्या च श्रावणे ।
एतानि देवीपर्वाणि क्षपार्धे साधयेद् बुधः ॥
अर्चां कृत्वा यथान्यायमश्वमेधफलं लभेत् ।

अत्र च यत्र विशेषो न श्रूयते तत्र शुक्लैव ग्राह्येति तान्त्रिकाः । यामले—

वैशाखे मासि शुक्लायां तिथौ प्रतिपदि ध्रुवम् ।
ब्राह्मे मुहूर्त्ते चोत्थाय कृतनित्यक्रियः सुधीः ॥
अर्धोदिते दिनमणौ पूजयेदिष्टदेवताम् ।
अर्घ्यं निवेद्य तच्छेषं शक्त्या सह पिबेत् स्वयम् ॥
प्रजपेत् प्रयतो मन्त्री अष्टोत्तरसहस्रकम् ।
एवम्भूतदिनं यावत् कृत्वा दर्शदिने पुनः ॥
समयाचारचतुराः शक्तीरभ्यवहारयेत् ।
पूजयेद् विधिना मन्त्री लभते वाञ्छितं फलम् ॥
मध्याह्ने वाथ सायाह्ने पूजयेदुक्तमार्गतः ।
त्रिसन्ध्यं वा जपेन् मन्त्री वाञ्छितां सिद्धिमाप्नुयात् ॥
माघे मासि सिते पक्षे साधकः प्रतिपत्तिथौ ।
सायं सन्ध्यामुपास्याऽथ दिवाहारविवर्जितः ॥
उदिते पूर्ववच्चन्द्रे यजेद् देवीमनन्यधीः ।
चन्द्रास्तमयपर्यन्तं मूलमन्त्रं जपेत् सुधीः ॥
एवं प्रतिदिनं कुर्याच्चतुर्दश्यन्तिकं सुधीः ।
पौर्णमास्यां यथापूर्वं पूर्त्तिं कुर्याद् विचक्षणः ॥
एवमेवासिते पक्षे विदधीत विशालधीः ।
मुच्यते सर्वपापेभ्यः स्वेष्टां सिद्धिमवाप्नुयात् ॥
ऊर्जे शुक्लप्रतिपदि ततो व्रतपरायणः ।
मण्डले सर्वतोभद्रे चाम्बुना पूर्णमुत्तमम् ॥
संस्थाप्य कलशं तत्र कांस्यपात्रं निधापयेत् ।
ज्वालयेदत्र दीपं तु स्थूलवर्तिकमुत्तमम् ॥

ध्यात्वा दीपे महादेवीमर्चयेदुपचारकैः ।
साग्रं सहस्रं मतिमान् प्रजपेत् कुलमन्त्रकम् ॥
एवम्भूतदिनं यावत् कृत्वा दर्शदिने ततः ।
पूर्ववत् तनुयाच्छेषं काङ्क्षितां सिद्धिमाप्नुयात् ॥
भृगुवारे विशालाक्षीं सुन्दरीं यौवनोद्धुराम् ।
आहूय कुसुमोल्लासिकुलां सर्वाङ्गसुन्दरीम् ॥
अभ्यर्च्य स्नापयेन् मन्त्री अभ्यङ्गविधिना च ताम् ।
कौसुम्भचारुवसनां नानाभरणभूषिताम् ।
उपवेश्यासने दिव्ये देवताभावसंयुतः ॥
तस्या देहे न्यसन् न्यासांस्तस्यामावाह्य देवताम् ।
निर्विकारमना मन्त्री जपेदग्रे सहस्रकम् ॥
जपं समर्पयेत् तस्यै देवीमुद्वास्य साधकः ।
भोगैर्नानाविधै रम्यैस्तया सह निशां नयेत् ॥
एवं यो भृगुवारे वै कुर्यात् पूजनमादृतः ।
सर्वसिद्धिमवाप्नोति नात्र कार्या विचारणा ॥

कुलार्णवे—श्रीचक्रं कौलिको मोहाद् विशेषदिवसेषु यः ।
न करोति समर्थः सन् स भवेद् योगिनीपशुः ॥

एवं च क्वचित् फलश्रवणमपि न नैमित्तिकत्वबाधकम् । "इन्द्रो कोटी रविर्दशे"ति फलश्रवणेऽपि ग्रहोपरागस्नानस्यान्यत्रापि नैमित्तिकत्वव्यवस्थापनात् अकरणे प्रत्यवायस्मरणस्याविशिष्टत्वात् । नीलतन्त्रे—

अष्टम्यां च चतुर्दश्यां पूजयेच्च प्रयत्नतः ।
यद् यत् प्रार्थयते मन्त्री तत्तदाप्नोति नित्यशः ॥
लभते मञ्जुलां वाणीं तथाष्टम्यां सदा यजेत् ।
अष्टम्यां पूजनं देव्याः सर्वकामफलप्रदम् ॥
रम्भापुष्पं बीजपूरं सुगन्धिपरिमिश्रितम् ।
मिश्रीकृत्य बलिं दद्यादष्टम्यां च विशेषतः ॥
द्विजन्मनाऽर्जितं पापं तत्क्षणादेव नाशयेत् ।

तथा—तारिणी यत्र पीठे तु शिवारूपाऽवतिष्ठति ।
तत्र यत्नेन गन्तव्यं पुण्यसंख्या न विद्यते ॥
लक्षद्वयं जपेन् मन्त्री तारिणी यत्र तिष्ठति ।

निस्पृहस्थिरचित्तेन सिद्धिर्भवति तत्क्षणात् ॥
समाहृतां मृत्तिकां च अक्षतं च तथैव च ।
मधुना पायसं चैव क्षीरमाज्यं च शर्कराम् ॥
बलिं दद्याच्च गोधां वै आसवं च प्रशस्यते ।
रम्भापुष्पं शालमत्स्यं जुहुयान् मन्त्रवित्तमः ॥
सर्वां सिद्धिमनुक्रम्य चान्ते मोक्षमवाप्नुयात् ।
साक्षतं बिल्वपत्रं च जुहुयाच्च सहस्रकम् ॥
लभते मञ्जुलां वाणीं महाष्टम्यां च साधकः ।
त्रिशक्तिरत्ने—चैत्रप्रभृतिमासानां पौर्णमास्यां महाशिवाम् ।
अर्चयेद् वक्ष्यमाणेन विधिना साधकोत्तमः ॥
चैत्रे दमनकैः पूज्या कृत्वा नित्यार्चनं शिवे ।
वसन्तसम्भवैः पुष्पैश्चन्दनागुरुमिश्रितैः ॥
वैशाखे हेमकमलैरथवा रक्तचन्दनैः ।
उपचारैर्हिमैः सर्वैर्यजेच्छङ्करवल्लभाम् ॥
ज्यैष्ठे मासि यजेद् देवीं पनसैः कदलीफलैः ।
सहकारफलै रम्यैः सर्वकामार्थसिद्धये ॥
आषाढ़े मासि सम्पूज्या चन्दनैः कुसुमान्वितैः ।
एलालवङ्गकक्कोलै रम्यैर्वापि महाशिवाम् ॥
श्रावणे मासि सम्पूज्या पवित्रैः परमेश्वरीम् ।
पवित्रारोपणं नाम तथा दमनकोत्सवम् ॥
जानीयात् साधकश्रेष्ठो मत्कृते तन्त्रशेखरे ।
मासि भाद्रपदे पूज्या केतकैः शङ्करप्रियाम् ॥
आश्विने मासि दर्शादि यजेत् पूर्णान्तिकं सुधीः ।
प्रत्यहं जुहुयान् मन्त्री दिनवृद्धया शतं शतम् ।
महान्तमुत्सवं कुर्यात् सर्वसिद्धिमवाप्नुयात् ॥
साधकः कार्त्तिके मासि कुङ्कुमेन समर्चयेत् ।
प्रदीपान् जुहुयाद् वह्नौ निशीथिन्यां घृतप्लुतान् ॥
घृतप्रदीपान् देव्यग्रे विद्यया षोड़शार्पयेत् ।
एकैकमर्पयेद् विद्वान् परिवारगणाय च ॥
अथवैकं तु संस्थाप्य मध्ये तमभितो नव ।

देव्यै समर्पयेन् मन्त्री मूलोच्चारणपूर्वकम् ॥
मार्गशीर्षे जपन् मन्त्रं माषापूपैर्मनोहरैः ।
नारिकेलाम्बुसंमिश्रं कर्पूरं विनिवेदयेत् ॥
पौषे गुडैः शर्कराभिः पूजयित्वा महेश्वरीम् ।
साधकः स्वेष्टसम्पत्त्यै गव्यं दुग्धं निवेदयेत् ॥
माघेऽभ्यर्च्य तिलैर्देवीमपूपान् दुग्धमर्पयेत् ।
फाल्गुने पूजयेद् देवीं सौवर्णैर्वाथ राजतैः ॥
कमलैश्चूतपुष्पैश्च तथा नानोपचारकैः ।

पवित्रं ग्रन्थियुतपट्टादिसूत्रम् । तद्विधिश्च वक्ष्यते । यत्र मासि तिथिविशेषो नोक्तस्तत्रार्चनादिकं पौर्णमास्यामेव प्रक्रमात् । प्रतिसंवत्सरं दमनोत्सव आवश्यकः ।

ज्ञानार्णवे—दमनेन च यो मन्त्री वर्षमध्ये न पूजयेत् ।
तस्य सांवत्सरी पूजा दमनाय भविष्यति ॥ इति ।

तथा—दमनारोपणं वक्ष्ये साधकानां हिताय वै ।
संवत्सरकृता पूजा पूर्णाय न भवेत् प्रिये ॥

महाकालसंहितायाम्—

दमनारोपणाख्यैका पवित्रारोपणी परा ।
प्रतिसंवत्सरं चैते यो न कुर्वीत साधकः ॥
तस्य वर्षकृता पूजा व्यर्था भवति भामिनि ।
कृतामपि विलुम्पन्ति भूतप्रेतादयो गणाः ॥
प्रतिसंवत्सरं तस्मात् कुर्यात् यत्नेन साधकः ।
दमनारोपणं कर्म पवित्रारोपणं तथा ॥

पूजाकालो दक्षिणामूर्त्तिसंहितायाम्—

चैत्रादयस्त्रयो मासाः पक्षौ सितसितेतरौ ।
एतेषां पूर्वपूर्वस्तु कालः सर्वोत्तमोत्तमः ॥

महाकालसंहितायाम्—

कालस्तदीयो मुख्यस्तु शुक्लपक्षो मधोर्मतः ।
मध्यमो माधवो ज्येष्ठः शुचिस्त्वधम उच्यते ॥
चातुर्मास्ये प्रविष्टे तु यः कुर्याद् दामनं विधिम् ।
न तस्य दुर्मतेः सिद्धिर्विपरीतं च जायते ।
भूताः प्रेताः प्रनृत्यन्ति क्षुधार्त्तपीडितोदराः ॥

अस्माकं भाग्ययोगेन चेत् कश्चित् साधकोऽधमः ।
सुप्ते जनार्दने कुर्याद् दमनारोपणं विधिम् ॥
तदा वयं विलुम्पामो भक्षयामोऽर्चनं च तत् ।
अतो वसन्ते शिशिरे ग्रीष्मे कुर्यादमुं विधिम् ।
नैव वर्षासु शरदि हेमन्तर्त्तौ न च प्रिये ॥
तस्मादृतुत्रये पूर्वोदिते दमनकार्चनम् ।
न परर्त्तुत्रये कार्यं देवीप्रीतिं विधित्सता ॥

तथा—आद्योत्तरफल्गुनी भं तिथिश्चापि त्रयोदशी ।
शुक्लपक्षश्चैत्रमासो योगो वृद्धिस्तथैव च ॥

तथा—इयं तिथिरनङ्गाख्या तव नाम्ना भविष्यति ।
त्वामस्यां येऽर्चयिष्यन्ति गन्धपुष्पादिविस्तरैः ॥
नैवेद्यधूपदीपाद्यैर्गीतवाद्यादिनर्त्तनैः ।
सुश्लीलवचनाक्षेपैर्मादकद्रव्यभोजनैः ॥
योनिलिङ्गादिशब्दानां प्रलापैर्हास्यकारकैः ।
तत्तदाकारवचनैर्महोत्सवसमन्वितैः ॥
त्वं वरानीप्सितान् दद्यास्तेषां मद्वचनं स्मर ।
तत्परेऽहनि विस्तार्या मत्पूजा मकरध्वजा ॥

दक्षिणामूर्त्तिसंहितायाम्—
अष्टम्यां वा चतुर्दश्यां पौर्णमास्यामथापि वा ।
पूर्वरात्रौ प्रकुर्वीत सद्यो वाप्यधिवासनम् ॥

महाकालसंहितायाम्—
अधिवासनकर्माङ्गभूतं सङ्कल्पमाचरेत् ।
राशितिथ्यादिकं प्रोच्य वर्त्तमानतया स्थितम् ॥
वार्षिकार्चा समाप्त्यर्थं श्वःकर्त्तव्यस्य कर्मणः ।

दमनारोपणस्याङ्गभूतमधिवासनं करिष्य इति सङ्कल्प्य पञ्चायतनमर्चयेत् ।

दक्षिणामूर्त्तिसंहितायाम्—आमन्त्र्य दमनं चादौ चतुःकल्पलतादिभिः । चतुःकल्पलतामन्त्रस्तु—ॐ ह्रीं हं खें चछे क्षस्त्रीं हूं क्षें ह्रीं फट् ॐ ह्रीं ऐं ह्रीं ॐ सरस्वत्यै नमः ह्रीं श्रीं क्लीं द्रां द्रीं क्लीं ब्लूं सः ।

कामनेत्रसमुद्भूत रतिनेत्रजलाप्लुत ।
ऋषिगन्धर्वसिद्धानां विमोहक नमोऽस्तु ते ॥

शिवकार्ये समुच्छिद्य नेतव्योऽसि शिवाज्ञया।
इत्यामन्त्र्य शिवं कामं तत्र सम्पूजयेत् सुधीः॥

अन्यदेवोपासकेनापि मन्त्रे शिवपदस्थाने ऊहो न कर्त्तव्यः शक्तितन्त्र एवाभिधानात्। शिवमित्युपलक्षणम्। स्वेष्टदेवतां पूजयेदिति केचित्।

## अथाधिवासनकृत्यम्

मन्त्रमुक्तावल्याम्—पूर्वेद्युः संयतो भूत्वा मन्त्री वादित्रनिस्वनैः।
गच्छेद् दमनकारामं यत्राशोकः प्रतिष्ठितः॥
तत्रोपविश्य मन्त्रेण पूजयित्वासने शुभे।
नत्वा गुरुं गणेशानं स्वेष्टदेवं च मन्त्रवित्॥
स्वात्मानं सकलीकृत्य कलशं स्थापयेद् बुधः।
वर्धनीं चैव संस्थाप्य विधिना मन्त्रवित्तमः॥
दत्त्वा बलिं तु भूतेभ्यस्तानि निःसार्य मन्त्रवित्।
अशोकं तत्र सम्पूज्य तदभावे विधाय तत्॥
मण्डले चन्दनेनाथ फलपुष्पोपशोभितम्।
कालं तत्रैव सम्पूज्य तदभावे विधाय तत्॥
मण्डले चन्दनेनाथ फलपुष्पोपशोभितम्।
कालं तत्रैव सम्पूज्य वसन्तं च यथाविधि॥
अघोरविद्यया पश्चाद् दमनं प्रोक्ष्य वारिणा।
अस्त्रमन्त्रेण संरक्ष्य कवचेनाऽवगुण्ठयेत्॥
त्रिशूलमुद्रां बद्ध्वाऽथ भ्रामयेद् दमनोपरि।
नृत्यगीतादिभिः सम्यक् कुर्याज् जागरणं निशि॥

वर्धनी करकं क्षुद्रजलपात्रमिति यावत्। तत्स्थापनं कुम्भनैरन्तर्येण "कुम्भलग्नं न्यसेदि"त्यभिधानात्। भूतबलिदानं ह्रीं त्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहेत्यनेन कर्त्तव्यम्। तदपसारणमन्त्रस्तत्रैव—

पाषण्डकारिणो भूता भूमौ ये चान्तरिक्षगाः।
भुवि लोके स्थिता ये च ते नश्यन्तु शिवाज्ञया॥

रक्षाऽभिषेकरूपैव वर्धनीजलेन। अघोरे घोरे ह्रीं घोरघोरतरे श्रीं सर्वतः सर्वसर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यो ह्रीं श्रीं इति अघोरमन्त्रः। त्रिशूलमुद्रा शिवरहस्ये उक्ता—अङ्गुष्ठेन कनिष्ठाग्रं बद्ध्वा शिष्टाङ्गुलित्रयम्।

प्रसारयेत् त्रिशूलाख्यमुद्रेयं परिकीर्त्तिता ॥

अथ दमनमुत्पाटयेत्। तथाहि दक्षिणामूर्त्तिसंहितायाम्—

स्वयमुत्पाट्य दमनं समूलं पल्लवैर्युतम्।
आनीतमथवान्येन मूल्यादानीतमीश्वरि ॥
वामतः स्थापयेद् देवि सर्वतोभद्रकाम्बुजे।
वस्वारे दामनं पात्रं स्थापयेत् पूजयेत् ततः ॥
प्रणवं भुवनेशानि रतये नम इत्यपि।
रतिमन्त्रो महेशानि काममन्त्रस्तथोच्यते ॥
प्रणवं कामबीजं च कामाय नम इत्यपि।
मन्त्रेण पूजयेत् तत्र मदनं कर्णिकागतम् ॥
ततस्तत्पद्मपूर्वादि-पत्रेषु प्रतिपूजयेत्।
अष्टाशाष्वष्टकैर्मन्त्रैरष्टद्रव्ययुतैः क्रमात् ॥
कामो भस्मशरीरश्च अनङ्गो मन्मथस्तथा।
वसन्तसखनामा च स्मर इक्षुधनुर्धरः ॥
पुष्पबाणश्च ताराद्या ङेहृदन्ताः प्रकीर्त्तिताः।
कर्पूरं रोचनायुग्मं कस्तूरी च ततः प्रिये ॥
अगुरुं कुङ्कुमं चैव धात्री चन्दनमेव च।
सुगन्धिपुष्पयुक्तानि अष्टद्रव्याणि पार्वति ॥
सम्पूज्य मदनं सम्यग् गन्धपुष्पाक्षतादिभिः।
जपेदनङ्गगायत्रीं यथाशक्त्या प्रसन्नधीः ॥
कामदेवाय इत्युक्त्वा विद्महे च वदेत् ततः।
पुष्पवाणाय इत्युक्त्वा धीमहि तु पदं ततः ॥
भवेदनङ्गगायत्री तन्नोऽनङ्गः प्रचोदयात्।
नमोऽस्तु पुष्पवाणाय जगदानन्दकारिणे ॥
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय च।
अनेन मनुना देवि नमस्कुर्यादनन्तरम् ॥
अथ विज्ञापनं देव्यै कुर्याद् दमनपाणियुक्।
आमन्त्रितासि देवेशि सद्यः काले मया शिवे ॥
कर्त्तव्यं च यथालाभं पूर्णं पर्व तवाज्ञया।
विज्ञापनाख्यमन्त्रेण त्रिपुरां परितोषयेत् ॥

ततः सम्पूजयेद् देवीं गन्धपुष्पाक्षतादिभिः ।
नैवेद्यं विधिवद् दत्त्वा श्रीविद्यां प्रार्थयेत् ततः ॥
षोड़शार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे देवि कामान् कामेश्वरेश्वरि ॥
अनेन प्रार्थयेद् देवीं पश्चाद् दमनमीश्वरि ।
वामावगुण्ठितं कुर्यादस्त्रेणापि सुरक्षितम् ।
ततो जागरणं कुर्यात् सद्यश्चेज् जागरो नहि ॥

दमनस्यान्यानयनपक्षेऽपि उत्पाटनं पूर्वमेव कार्यम् । दमनस्थलीमित्यादिपदस्य दमनावस्थितिस्थानमात्रवाचित्वात् यदि तु दमनारामं सविधस्थं स्यात् तदा यथोक्तस्थान एवोत्पाटनमिति विशेषः । चत्वारेऽष्टदलेऽम्बुज इत्यन्वयः । पूजयेत् रतिकामोऽग्रिमग्रन्थानुरोधात् । रोचनायुग्मं गोरोचना वंशरोचना च । त्रिपुरां श्रीविद्यामित्युभयमपि उपलक्षणम् । सर्वत्रैतत्कर्मणो विहितत्वेनाकांक्षातौल्यात् । षोड़शार्ण इत्यादिमन्त्रे श्रीविद्याभिन्नदेवीपूजने षोड़शार्णे इति पदस्थाने सर्वरूपे इति योज्यम् ।

## अथ पूजादिनकृत्यम्

महाकालसंहितायाम्—

ततः प्रभाते उत्थाय कृत्वा नित्यक्रियां स्वकाम् ।
कृतार्चासंभृतिः पूजामण्डपं समुपाविशेत् ॥
मूर्त्तियन्त्रालयादीनि कुर्यादुज्ज्वलितानि हि ।
सङ्कल्पं पुरतः कुर्यात् तदनन्तरमीश्वरि ॥
दमनारोपकर्माहं करिष्य इति चोल्लिखेत् ।

दक्षिणामूर्त्तिसंहितायाम्—

अथ प्रातः समुत्थाय कुर्याद् वै नित्यपूजनम् ।
ततो नैमित्तिकं कुर्याद् दमनं च सुपूजयेत् ॥

नैमित्तिकं वक्ष्यमाणं मुख्यमिष्टदेवतापूजनरूपम् । यद्यप्यत्र तदुत्तरं दमनपूजा श्रूयते तथापि दमनस्य स्वतोऽदेवत्वात् तत्पूजनस्य मुख्यपूजनोपयुक्तदमनसंस्कार-त्वेनोपादेयत्वात् प्रथममेव तदाचरणं युक्तम् । अस्य क्रमतात्पर्यकत्वात् । अत एव च ज्ञानार्णवे तथैवोक्तम् । तथाहि—

दमनं नवधा कुर्यात् पूजयेत् तदनन्तरम् ।
आनन्देश्वरबीजेन ततो भिन्नेन सुन्दरि ॥

आनन्देश्वरीबीजेन नवधा बिन्दुना सह ।
नवप्रकारसंभिन्नं दमनं पूजयेत् क्रमात् ॥
तेनैव महतीं पूजां मध्ये तत्पुष्पमिश्रिताम् ।
मनोहरां च विधिवत् कृत्वा नैवेद्यमुत्तमम् ॥
सकर्पूरं च ताम्बूलं दत्त्वा संप्रार्थयेत् ततः ।
समस्तचक्रचक्रेशि सर्वविद्याशरीरिणी ॥
वेदमातर्ममैतत् तु भवत्विष्टं तवाज्ञया ।
ततः स्वगुरुमभ्यर्च्य पुष्पभूताम्बरादिभिः ॥
दत्त्वा दमनकं तस्मै प्रणिपत्य प्रसाद्य च ।
जलकेलिं ततः कुर्यात् साकं समयिभिः सुखम् ॥
अन्ते दानं प्रकुर्वीत रसैः षड्भिः समन्वितम् ।
एवं यः कुरुते विद्वान् दमनारोपणं क्रमात् ॥
तस्य सांवत्सरी पूजा श्रीविद्याधिष्ठिता भवेत् ।

आनन्देश्वरानन्देश्वरीमन्त्रयोः पूर्वोक्तयोश्चरमस्वरपृथग्भावेन नवाक्षरत्वम् । अत्र सर्वाक्षरेष्वनुस्वारयोगो विशेषः । पूजा च प्रथमं भैरवमन्त्राक्षरैस्तथा भैरवीमन्त्राक्षरैर्नमोन्तकैः कार्येति सम्प्रदायः । प्रथमं च मध्ये ततः प्रागादिप्रादक्षिण्येन कामपूजायां तथादर्शनात् । मध्यं पूर्वलिखिताष्टदलकमलस्य । तत्पुष्पमिश्रितां दमनपुष्पमिश्रिताम् । पूजा चेष्टदेवताया उत्तरवाक्ये प्रार्थनस्य तद्गतत्वेनैव श्रुतत्वात् । इयमेव पूजा प्रधाना । महाकालसंहितायाम्—

शक्तिपूजा च कर्त्तव्या दमनारोपणोत्तरम् ।
कृते पुरस्तात् सकलं विफलं जायते प्रिये ॥
शक्त्यर्चनेऽकृते चापि निष्फलं जायते तथा ।
अतः कार्या शक्तिपूजा दमनारोपणोत्तरम् ॥

तथा—समर्च्य दमनं चैत्रे तेन चाभ्यर्च्य कालिकाम् ।
सप्तजन्मकृतैः पापैर्मुच्यते नात्र संशयः ॥
चैत्रशुक्लत्रयोदश्यामधिवासनपूर्वकम् ।
आरोप्य दमनं दुर्गां विधिनाऽनेन पूजयेत् ॥
मयोक्तेन वरारोहे तथा पुण्यफलं शृणु ।
अश्वमेधसहस्रस्य राजसूयशतस्य च ॥
तत्फलं समवाप्याऽसौ देववद् दिवि मोदते ।

तथा—एवं यः कुरुते पूजां दमनारोपणाभिधाम् ।
भवन्ति नापदस्तस्य कदाचिदपि सुन्दरि ॥
सिध्यन्ति तस्य मन्त्राश्च नारीणां वल्लभो भवेत् ।
सर्वसम्पद्युतः श्रीमान् मोदते दिवि देववत् ॥

इति दमनारोपणविधिः

## अथ पवित्रारोपणम्

तच्च प्रतिवर्षमावश्यकम् । दक्षिणामूर्त्तिसंहितायामीश्वरवाक्यम्—

अथ वक्ष्ये महेशानि पवित्रारोपणं महत् ।
यस्मिन् कृते कृतं सर्वमन्यथा शून्यमुच्यते ॥
गते संवत्सरे यस्तु न करोति पवित्रकम् ।
एकीकृत्य फलं तस्य नीयते दुर्गणैर्बलात् ॥

कालोऽप्युक्तस्तत्रैव—

आषाढ उत्तमो मासः श्रावणो मध्यमः प्रिये ।
हीनो भाद्रपदो मासः पक्षौ सितसितेतरौ ॥
प्रशस्तः शुक्लपक्षस्तु तदभावे सितेतरः ।
चतुर्दश्यष्टमीपूर्णमासीतिथिषु वै यजेत् ॥

महाकालसंहितायामपि—

कालो ग्रीष्मः शरद् वर्षा एष मुख्यतमः प्रिये ।
केचिद् वसन्तमिच्छन्ति कालं माध्यमिकं बुधाः ॥
नैव हेमन्तशिशिरौ प्रशस्येते कदाचन ।

तथा—तच्च कार्पासजं ज्ञेयं शाणं वा पट्टजं तथा ।

तथा—कृतं नवगुणं सूत्रं नवगुणमुदीर्यते ।
...... तद्धि वर्णानामंसे तिष्ठति सुन्दरि ॥
तदेव सूत्रं देवानां कण्ठे बहुगुणीकृतम् ।
पवित्रमिति नाम्नैव कथ्यते निगमादिषु ॥

तथा—आम्नायभेदाद् भिद्यन्ते सूत्रवर्णाः सुरेश्वरि ।
पूर्वार्द्धयोः सितं सूत्रं रक्तसूत्रं तथोत्तरे ॥
पश्चिमेऽप्यथ पीतं हि अधोदक्षिणयोर्मतम् ।
न नीलाक्तं भवेत् सूत्रं षडाम्नायेषु कर्हिचित् ॥
आम्नायेष्वथ सर्वषु प्रशस्तं सितमेव वा ।

कुमारीकर्त्तितं सूत्रमतिप्राशस्त्यकारकम् ॥
पतिमत्या कृतं मध्यमधमं विधवाकृतम् ।
विप्रक्षत्रार्यजातीनां पत्नीभी रचितं शुचि ॥
आवर्जितं यच्छूद्राभिस्तदशुच्येव कथ्यते ।
विशेषतो ह्यमीषां हि विहितं पतिहीनया ॥
वैश्यया कर्त्तितं सूत्रं मेध्यमित्यपरे जगुः ।
रजक्या वाथ यान्त्रिक्या काषायपट्याऽथवा ॥
गोप्या वाप्यथ मुण्डिन्या मालिन्या यद्व विनिर्मितम् ।
तत्सूत्रजपवित्रेण साधको नरकं व्रजेत् ।
तस्मात् सूत्रविनिर्माणे यत्नः कार्यो विशेषतः ॥
मध्यमस्त्रीगृही(?) यस्तु पुंवारः श्रेष्ठ उच्यते ।
षण्टाहोऽधमकल्पः(?) स्यात् तिथी रिक्ताविवर्जिता ।
सापि भूततिथौ ग्राह्या चतुर्थी भौम एव च ।
रवौ तु सप्तमी वर्ज्या रिक्ता वर्ज्या गुरावपि ॥
तिथिस्त्याज्या न कापीह भौमेन सहिता यदि ।
पुष्यनक्षत्रस्य योगेन फलाधिक्यं हि जन्यते ॥
तानि त्वजीवदिनकृद् विष्णवो निर्ऋतिस्तथा ।
कष्वप्येतेषु पूर्वेद्युः परेद्युरपि वा पुनः ॥

दक्षिणामूर्त्तिसंहितायाम्—

पट्टसूत्रं विशिष्टं तु कार्पासजनितं तथा ।
त्रिगुणं त्रिगुणीकृत्य प्रक्षाल्याऽमलवारिणा ॥
पश्चिमास्योद्गतैर्मन्त्रैर्दाक्षिण्यैः शोधयेत् ततः ।
मन्त्रैरथ पवित्राणि मनोरम्याणि कारयेत् ॥
अष्टोत्तरशतं श्रेष्ठं तदर्धं मध्यमं प्रिये ।
तदर्धं च कनिष्ठं स्याद् यथाशक्ति च कारयेत् ॥
उत्तरास्योदितैर्मन्त्रैर्दश ग्रन्थीस्तु कारयेत् ।
विचित्रया चित्रयेत् ताः कुङ्कुमादिभिरद्रिजे ॥

पवित्रदानदिवसात् पूर्वेद्युरधिवासनम्—

सद्योऽधिवासनं वापि कुर्यात् तु परमेश्वरि ।
रात्रौ समयिभिः सार्धं नित्यपूजाद्यनन्तरम् ॥

ऊर्ध्वसिंहासनैर्मन्त्रैः सूत्रपातं तु वामतः।
स्थापयित्वाऽस्त्रवर्माभ्यां कृत्वा रक्षावगुण्ठने॥
दन्तकाष्ठं तथा गन्धं भस्मचन्दनमृत्तिकाः।
सिद्धार्थांश्च तथा धात्रीफलं वकुलसम्भवम्॥
पूर्वादिदिक्षु क्रमतः पवित्रसूत्रभाजनात्।
अश्वत्थपत्रपात्रेषु प्रक्षिपेत् सिद्धिहेतवे॥
कुमारसोम-स्वाहेश-ब्रह्म-नाग-शिखिध्वजाः।
सूर्यः सदाशिवः शर्वो देवता स्युर्नवामराः॥
सूत्रेषु पूजयेद् ब्रह्मविष्णूीशांश्च त्रिसूत्रके।
क्रिया च पौरुषी वीरा गायत्री चापराजिता॥
विजया च जया देवी मुक्तिदा च सदाशिवा।
मनोन्मनी च नवमी दशमी सर्वतोमुखी॥
ग्रन्थिस्थदेवताः पूज्या उपचारैः समर्चयेत्।
नित्याः षोडश देवेशि श्रीविद्यां च स्मरेत् प्रिये॥

पश्चिमास्योद्गतैरित्यादि श्रीविद्यापरम्। अत्र तु मूलमन्त्रेण तूष्णीमेव वा क्षालनं कुर्यात्। कुमारः सनत्कुमारः। शिखिध्वजो गुहः। षोडशनित्यापूजनमपि श्रीविद्यापरमेव। महाकालसंहितायाम्—

यावत्यो देवताः सन्ति नित्ये नैमित्तिकेऽपि च।
याश्चावृत्तिपरीवाराः पञ्चायतनसंयुताः॥
अपेक्षितं हि सर्वेषां पवित्रमत्र कर्मणि।

तथा—कृताञ्जलिः पद्यमेनं मन्त्ररूपमुदीरयेत्॥

त्वं सूचनाद् वेदमखक्रियाणां प्राप्तोऽसि कर्पासजसूत्रसंज्ञाम्।
त्वया विनिर्माय बहूपवीतं दास्येऽमरेभ्यो भवसूत्रपूतम्॥

दक्षिणामूर्त्तिसंहितायाम्—

अधिवास इति प्रोक्तः पश्चादाराधनं भवेत्।
नित्यार्चनानन्तरं तु नैमित्तिकमिदं भवेत्॥

महाकालसंहितायाम्—

अथ नैमित्तिकसममारभेतार्चनं बुधः।

तथा—नैवेद्यधूपदीपानां कर्त्तव्या भूयसी स्थितिः॥

आकारणीया यत्नेन स्वस्ववर्ग्यास्तु देशिकैः।

कुसुमैस्तोरणं कार्यं बहिरन्तर्गृहस्य च ॥

दक्षिणामूर्त्तिसंहितायाम्—

समयिभ्यश्च चित्राणि कनकाभ्यश्च भोजनम् ।
स्वगुरुं पूजयेद् भक्त्या वस्त्रालङ्कारगोधनैः ॥
यथाविधि नमस्कृत्य देवीरूपेण चिन्तयेत् ।
आरोपयेत् पवित्रं तु वित्तशाठ्यविवर्जितः ॥
गुरुः सम्पूज्यते यत्र तत् कर्म सफलं भवेत् ।
स चेन्न पूज्यते यत्र क्रिया सा निष्फला भवेत् ॥
गुरोरभावे तत्पुत्रं तदभावे तदङ्गनाम् ।
भार्याभावेऽर्चयेदन्यं गुरुगोत्रसमुद्भवम् ॥
कृत्वा पूर्णाहुतिं पश्चादग्नौ दद्यात् पवित्रकम् ।
श्रीचक्रमध्यसिद्धायै पूजयेत् तन्निवेदयेत् ॥

महाकालसंहितायाम्—

यस्य यस्य तु देवस्य यो योऽर्चावसरो भवेत् ।
तस्य तस्य तु देवस्य तस्मिंस्तस्मिन् वरानने ॥
पवित्रं तस्य दातव्यं तन्मन्त्रोच्चारपूर्वकम् ।

तथा—छागाश्चावश्यकत्वेन दातव्या बलिकर्मणि ॥

तन्त्रे—दिवा नित्यार्चनं कुर्याद्रात्रौ नैमित्तिकं भवेत् ।

इति पवित्रारोपणविधिः

## अथ पीठार्चनम्

कुलचूडामणौ—पर्वते विपिने चैव निर्जने शून्यमण्डपे ।
चतुष्पथे कलामध्ये यदि दैवाद् गतिर्भवेत् ॥
कुलं ध्यात्वा मनुं जप्त्वा नत्वा गच्छेद् यथासुखम् ।

कलामध्ये प्रमदामध्ये । कुलमिष्टदेवताम् ।

पुरश्चरणकाले तु यदि स्यात् पीठदर्शनम् ।
तदा तत्र पीठपूजा मनसाऽपि न हीयते ॥
देवीकूटे महाभागामोड्डियाने च भैरव ।
योगनिद्रां कामरूपे महिषासुरमर्दिनीम् ॥
कात्यायनीं कामभूमौ कामाख्यां कामदायिनीम् ।

जालन्धरे च पूर्णेशीं पूर्णशैले च चण्डिकाम् ॥
कामरूपां तु चौहारे पूज्या दिक्करवाहिनीम् ।
अथवा कामरूपस्य दर्शनं यदि भाग्यतः ॥
तदा भगादिदेवीनां पूजा तत्र विधीयते ।
तथा—प्रथमं साधकश्रेष्ठो देवीकूटस्य मस्तके ।
विलिख्य यन्त्रं पूर्वोक्तं पूजयेत् कुलवर्त्मना ॥
पीठादिदेवीं प्रथमे पूजयेद् गन्धपुष्पकैः ।
महाभागां ततो मूलदेवीमावरणैः सह ॥
लक्षैकं तत्र जप्त्वा तु उड्डियानं ततो विशेत् ।
तत्पीठे योगनिद्राख्यां पूजयित्वा ततो यजेत् ॥
निजेष्टदेवतामन्त्रं जपेल्लक्षं समाहितः ।
कामरूपं ततो गत्वा ततः कात्यायनीं यजेत् ॥
जप्त्वा लक्षं ततो नाभौ कामाख्यां प्रथमं यजेत् ।
ततो जालन्धरे गत्वा पूर्णेशीं प्रथमं यजेत् ॥
तत्रापि लक्षसंख्यातं मन्त्रं जप्त्वा समाहितः ।
ततः पूर्णगिरौ गत्वा यजेच्चण्डीं ततो जपेत् ॥
कामरूपान्तरे वत्स कामाख्यां प्रथमं यजेत् ।
तत्प्रान्ते च महादेवि यजेद् दिक्करवाहिनीम् ॥
एवं पीठेश्वरीमिष्ट्वा पूजयित्वेष्टदेवताम् ।
सप्तपीठे सप्तलक्षं जपेद्रात्रौ समाहितः ॥
पीठानां परमं पीठं कामरूपं महाफलम् ।
तत्र या क्रियते पूजा सकृद् वापि महेश्वर ॥
विहाय सर्वपीठानि तस्य देहे वसाम्यहम् ।
तस्माच्छतगुणं प्रोक्तं कामाख्यायोनिमण्डलम् ॥

## अथ कुमारीपूजा

महाकालसंहितायाम्—

न तथा तुष्यति शिवा बलिहोमस्तुतीरणैः ।
कुमारीपूजनेनाऽत्र यथा सद्यः प्रसीदति ॥
न केवलं पूजयेत् तां भोजयेच्चापि यत्नतः ।
व्यक्तता चाप्यकरणात् पूजायाः परिकीर्त्तिता ।

करणात् साङ्गताऽपि स्यादन्यस्मिन्नकृतेऽपि हि ॥

तथा—कौलानां निशि पूजोक्ता स्मार्तानामपराह्निकी ।
नित्या तु शारदार्चायां काम्या नैमित्तिकीतरा ॥

## कुमारीलक्षणम्

सुस्नातां पीतरक्तादि-नानारागोज्ज्वलांशुकाम् ।
सर्वालङ्कारचित्राङ्गीमज्ञातानङ्गचेष्टिताम् ॥
अजातपुंमनःसङ्गां सप्ताष्टनववार्षिकीम् ।
अनीचजातिं गौराङ्गीं पितृमातृमतीमपि ॥
अदन्तुरामवाग्दन्तामधिकोनाङ्गवर्जिताम् ।
अदीर्घकेशीमुद्दीप्तां सुस्मितास्यामलोभिनीम् ॥

## निन्दितकुमारीलक्षणम्

श्यामां दीर्घदतीमोतुनयनां पिङ्गमूर्द्धजाम् ।
तनुमूनगतिं कुब्जां कुब्जां खञ्जां च खर्विकाम् ॥
भ्रूकेशाल्पत्वसहितां तथा चैव गलद्व्रणाम् ।
जातस्तनरजोऽनङ्गां प्रयत्नेन विवर्जयेत् ॥
एतद्भिन्ना कुमारी तु वरणीयाऽर्चनक्रमे ।

यामले—यः कुमारीं यजेन्मन्त्री सर्वपर्वसु सर्वदा ।
तेनार्चिता महादेवी सत्यं सत्यं न संशयः ॥
सन्ध्यैकवर्षा संप्रोक्ता द्विवर्षा च सरस्वती ।
त्रिधामूर्त्तिस्त्रिवर्षा च चतुरब्दा च कालिका ॥
सुभगा पञ्चवर्षेयमुमा षड्वार्षिकी भवेत् ।
मालिनी सप्तवर्षा च अष्टमी कुब्जिका मता ॥
नवाब्दा कालसङ्कर्षा दशवर्षाऽपराजिता ।
एकादशाब्दा रुद्राणी द्वादशाब्दा च भैरवी ॥
तत्परा स्यान्महालक्ष्मीस्तत्परा कुलनायिका ।
क्षेत्रज्ञा तत्परा प्रोक्ता षोड़शाब्दा च चण्डिका ॥
एवं क्रमेण विज्ञेया विना पुष्पं कुमारीका ।

महाकालसंहितायाम्—

गीतवादित्रनिर्घोषैरानन्दादरपूर्वकम् ।
नीत्वा पूजागृहद्वारि कुमारीस्ता अयुग्मिकाः ॥

पञ्च वा सप्त वा वापि नवैकादश वा पुनः ।
मुख्यैका तासु कर्त्तव्या या स्यात् सर्वाङ्गसुन्दरी ॥
बह्वीनामप्यभावे हि भवेदेका कुमारिका ।
काम्ये नैमित्तिके चैका बह्व्यः शारदपूजने ॥
श्रेणीभूता उत्थिताश्च नम्रीभूताननना अपि ।
स्थापयित्वा क्रमेणैता मुख्यामादौ नियोज्य च ॥
देवीबुद्धिं विधायाऽस्यां साधको विगतत्वरः ।
गृहीतमदिरामत्तः कल्पितार्चनसम्भृतिः ॥
प्राणायामं विधायादौ ततो भूतापसारणम् ।
गुरुं गणपतिं नत्वा वामदक्षिणयोस्ततः ॥
मध्ये कुमारीं च तथा मूलदेवीस्वरूपिणीम् ।
छोटिकाभिस्तथा तालत्रितयैर्बन्धनं दिशाम् ॥
तथा—कुमार्या मूलभूतायाः पादौ प्रक्षालयेत् ततः ।
तथा—तज्जलं मस्तके दद्याद् देवीपादोदप्रज्ञया ॥
सोत्तरीयांशुकेनैव पादाम्बूपनयेत् ततः ।
पुनरक्षतमादाय विघ्नानुत्सारयेत् प्रिये ।
उदीर्यमाणमन्त्रेण तालत्रयपुरःसरम् ॥
तारपाशकलाकूर्चास्त्राणि प्रथमतो वदेत् ।
भूतान्यपसारय च विघ्नान्नाशय चेत्यपि ॥
हृच्छीर्षे चरमे दद्यादेकविंशाक्षरो मनुः ।
कुमार्या सहिताः सर्वे तथा देवीस्वरूपया ॥
दर्शनार्थं समायान्ति यावन्तो देवयोनयः ।
प्रेता भूताः पिशाचाश्च गन्धर्वा गुह्यका अपि ॥
राक्षसा दानवा यक्षा ये चान्ये क्रूरकर्मिणः ।
सह प्रविश्य कौमार्या मण्डपं शारदार्चनम् ॥
लुम्पन्ति च कुमार्यर्चां पूजां विध्वंसयन्ति च ।
अतो वारद्वयं कार्यं विघ्नस्योत्सारणं प्रिये ॥
ततः स्ववामहस्तेन कुमार्या दक्षिणं करम् ।
गृहीत्वा दक्षचरण-विनिःक्षेपपुरःसरम् ॥
श्रीपङ्क्तिक ताः कुमारीस्ताः श्लोकरूपं मनुं पठन् ।

पूजागृहान्तः शनकैर्नम्रमौलिः प्रवेशयेत् ॥
समस्तजगतामाद्ये जगदाधाररूपिणि ।
कुमारीरूपमास्थाय प्रविशेदं गृहं मम ॥
भवत्याः कीदृशं रूपं जाने मातरहं नहि ।
कुमारीरूपमेवेदं पश्यामि नरचक्षुषा ॥
भक्तिं मदीयां विज्ञाय त्वत्पादाम्बुजयोः शिवे ।
त्वया प्रकटितं रूपमीदृशं सर्वसिद्धये ॥
दृष्टिः कार्या न मे पापे सञ्चारेणासतः पथः ।
दृढायां केवलं भक्तौ दातव्या सुरवन्दिते ॥
शिवाद्यास्तव रूपं हि कीदृशं नेति जानते ।
ज्ञास्यामि को वराकोऽहं पाञ्चभौतिकविग्रहः ॥
इति पञ्च पठन् श्लोकान् स्वपृष्ठेनैव तारयेत् ।
अनीक्षमाण एवेशि गीतवाद्यपुरःसरम् ॥

यामले— स्नापिता गन्धतैलेन नानाभरणभूषिताः ।
आनीय देवतापार्श्वे स्थापनीया सुधीमता ॥

महाकालसंहितायाम्—

मुख्यं तत्पूजनं प्रोक्तं मुख्याया एव तन्मनुम् ।
तत्पूजयैव ताः सर्वाः पूजिताः स्युर्न संशयः ॥

तथा—बलिं दत्त्वा ततो देवयोनिभ्यः परमेश्वरि ।
आरभेत निरालस्यः कुमारीन्यासमुत्तमम् ॥

तथा—नामान्यादौ खलु महाचण्डयोगेश्वरी मता ।
ततः सिद्धिकराली च पुनः सिद्धिविकराल्यपि ॥
महान्ता मायथ ज्ञेया वज्रकापालिनी ततः ।
मुण्डमालिन्यट्टहासिन्येते द्वे परिकीर्त्तिते ॥
प्रतिपदादिपूर्णान्तं वृद्धिभेदेन पूजयेत् ।
महापर्वसु ता देवि विशेषाद्युपचारकैः ॥
महानवम्यां देवेशि कुमारीश्च प्रपूजयेत् ।
पिङ्गलां पूजयेद् यस्तु षोडशीश्चैव भक्तिमान् ॥
चण्डकापालिनी कालचक्रेश्वर्यप्यनन्तरम् ।
गुह्यकाली ततः कात्यायनी कामाख्यया सह ॥

चामुण्डा सिद्धिलक्ष्मीश्च कुब्जिका तदनन्तरम् ।
मातङ्गी तदनु ज्ञेया चण्डेश्वर्यथ कीर्त्यते ॥
सर्वशेषेऽथ कौमारी एता अष्टादशेरिताः ।

तथा—अङ्गान्यतो वच्मि शिरो मुखं तदनु चक्षुषी ॥
कर्णौ नासापुटे चापि कपोलौ तत्पुरौ पुनः ।
अधरोष्ठौ दन्तपङ्क्ती स्कन्धौ हृदयमेव च ॥
बाहू च जठरं पृष्ठमुरूजानू तथैव च ।
जङ्घे पादौ च सर्वाङ्गं तावन्त्येव स्थलानि च ॥

त्रिशक्तिरत्ने—कलादि च कलान्तं ताः पूजयेद् विधिना बुधः ।
उपवेश्यासने दिव्ये कुमारीं साधकोत्तमः ॥
वक्ष्यमाणेन विधिना देहेऽस्या न्यासमाचरेत् ।
कुमारिका स्यात् प्रथमा द्वितीया नायिका मता ॥
तृतीया भैरवी ख्याता तुर्या वागीश्वरी भवेत् ।
पालिका पञ्चमी प्रोक्ता सम्बुद्ध्यन्ताः कुलादिकाः ॥
न्यस्याः पञ्चाङ्गयोगेन कुमारीणां कलेवरे ।
वामावर्त्तक्रमादास्यचतुष्कं पूजयेत् क्रमात् ॥
ततः सिद्धा जया पूर्वा जयान्या कुब्जिका परा ।
कालिका पञ्चमी प्रोक्ता विज्ञेया बोधिता इमाः ॥
पूर्वादिवक्त्रसंयुक्ताश्चतुर्थ्यन्ता नमोन्तकाः ।
तत्तत्स्थानेषु विन्यस्याः स्वधिया क्रमपूर्वकम् ॥
पञ्चप्रणवयोगेन चैतन्यमनुना सह ।
न्यासजालं हि पूर्वोक्तं कुर्यात् साधकसत्तमः ॥

ऐं ह्रीं श्रीं ह्रीं हूं एते पञ्चप्रणवाः । सौः चैतन्यभैरवीबीजम् । तथा यामले—
वाणी माया तथा लक्ष्मीर्मायाकूर्चद्वयं तथा ।
एते च प्रणवा ज्ञेयाः कुमार्या परिपूजने ॥
चतुर्दशस्वरेणाढ्यो भृगुर्बिन्दुसंयुतः ।
चैतन्यबीजं कथितं साधकानां सुखावहम् ॥

महाकालसंहितायाम्—
ततोऽर्घस्थापनं कुर्यान्नित्यके यदुदाहृतम् ।
पूजोपकरणस्यापि शुद्धिरुक्ता पुरोक्तवत् ॥

तथा—ततो ध्यानं प्रकुर्वीत कुमार्या वक्ष्यमाणकम् । *

तथा—उपचारांस्ततः सर्वान् पाद्यादीन् स्तुतिपश्चिमान् ॥

यामले—यष्टव्याः पूर्वमार्गेण वक्ष्यमाणेन वा पुनः ।

स्वनामभिश्चतुर्थ्यन्तैस्त्रितारायैर्नमोऽन्तकैः ॥

देवतापश्चिमे मन्त्री यजेदेताः सु(स)लक्षणाः ।

आद्या शुद्धा कालिकाऽन्या तृतीया ललिता स्मृता ॥

चतुर्थी मालिनी ख्याता पञ्चमी स्याद् वसुन्धरा ।

सरस्वती रमा गौरी दुर्गा तु नवमी भवेत् ॥

पञ्चाब्दं नववर्षं च यजेद् बालं विचक्षणः ।

पञ्चाब्दो वटुकः प्रोक्तो नववर्षो गणेश्वरः ॥

तथा—प्रदद्यादासनं वाचा ह्रिया पाद्यं समर्पयेत् ।

रमयाऽर्घ्यं निवेद्याऽथ स्त्रिया चन्दनमर्पयेत् ॥

कुमार्यै शक्तिबीजेन प्रदद्यात् कुसुमोच्चयम् ।

चैतन्यमनुना मन्त्री धूपदीपादिकं न्यसेत् ॥

तारा एते समाख्याता भृगुर्भवसमन्वितः ।

बिन्दुनादसमाक्रान्तश्चैतन्यमनुरीरितः ॥

क्वचिद् भैरवबीजं तु पञ्चमः प्रणवो मतः ।

महाकालसंहितायाम्—

भूषणानि दुकूलानि सिन्दूरालक्तकावपि ।

कज्जलादर्शविख्यात-तालवृन्तानि पेटिका ॥

परिकर्माधारचोल-मञ्चिका-पीठदोलिकाः ।

पञ्चालिका च मञ्जूषा पादुके कुथपट्टके ॥

चन्द्रातपोपसङ्ख्यानं तथोद्वर्तनभाजनम् ।

शय्योपधानपर्यङ्काः समुद्गगा च प्रसाधनी ॥

प्रतिग्राहश्च हिन्दोला तथा सीमन्तवर्त्तिका ।

---

* ध्यानान्तरं तन्त्रान्तरे—

प्रसन्नवदनाम्भोजां प्रोद्यद्बालार्कसप्रभाम् ।

रक्ताम्बरां रक्तमाल्यां नानालङ्कारभूषिताम् ॥

सस्मितां दिव्यकन्याभिः क्रीडारसपरायणाम् ।

ध्यायेत् कुमारिकां बालां स्वभक्ताभीष्टसिद्धिदाम् ॥

गोरोचना-मृगमदौ कर्पूरं कुङ्कुमं तथा ॥
एवमादीनि चान्यानि यावच्छक्यानि सुन्दरि ।
प्रदातव्यानि वस्तूनि कुमारी तुष्यते यथा ॥
तथा—ततो यत् स्थापितं पात्रं कुमार्यै प्रतिपादयेत् ।
स्वीकुर्यात् सा च तत्रैव तथा यत्नं समाचरेत् ॥
अगृहीते तु तत्पात्रे महान् दोषोऽभिजायते ।
अतो यत्नस्तथा कार्यः स्वीक्रियेत यथा तया ।

## कुमारीशक्तिनामानि

ततो गृहीत्वा कुसुमाक्षतं तस्याः कलेवरे ।
पञ्चाशत्संख्यकाः शक्तीः क्रमतः परिपूजयेत् ॥
ता इदानीं प्रवक्ष्यामि सावधाना निशामय ।
आद्या जया च विजया ऋद्धिदा माययाऽन्विता ॥
कला च सिद्धिदा सूक्ष्मा प्रभा स्यात् सुप्रभा ततः ।
विद्युता च विशुद्धिश्च नन्दिनी च विशुद्धियुक् ॥
अपराजिता च ललिता लक्ष्मीर्गौरी तथैव च ।
अथ मेधा च गायत्री सावित्री च स्वधा पुनः ॥
स्वाहेच्छे च क्रिया विद्या प्रज्ञा दीप्ता च चेतना ।
भद्रा ज्येष्ठा तथोमा च शिवा च मुदिता क्षमा ॥
श्रद्धाथ विमला कौमुद्यपि वै विशदा ततः ।
अशोका ज्ञानदा चैव बलदा राज्यदापि च ॥
मैत्री तदनु रुद्राणी भवानी च मृडान्यपि ।
सर्वज्ञा चण्डिका वापि कुमारी सर्वशेषगा ॥
पञ्चाशत्संख्यका एता कुमार्याः शक्तयः स्मृताः ।
भैरवानष्ट तदनु पूजयेदक्षतादिभिः ।
भैरवीभ्यस्ततो विघ्नविनायकेभ्य एव च ॥
वटुकक्षेत्रपालाभ्यां योगिनीभ्यस्तथैव च ।
भूतेभ्यः प्रेतयक्षेभ्यो डाकिनीभ्यस्तथैव च ॥
कुर्वीत पूजनं देवि कुसुमाक्षतचन्दनैः ।
पुनरष्टौ सर्वशेषे छन्ता देवीर्यजेत् प्रिये ॥
महामाया कालरात्रिस्ततो वै सर्वमङ्गला ।

पूज्या डमरुका पश्चाद्राजराजेश्वरी तथा ॥
सम्पत्प्रदा भगवती कुमारी तदनन्तरम् ।
यामले—कुलान्तः पूजयेदेनां कुलकोणेष्विमान् यजेत् ।
कामेश्वरी च वज्रेशी तृतीया भगमालिनी ॥
उपरिष्टात् कुलद्वन्द्वकोणेष्वेताः समर्चयेत् ।
अनङ्गकुसुमाऽनङ्गमन्मथाऽनङ्गपूर्विका ॥
मदनाऽनङ्गशब्दाद्या चतुर्थी कुसुमोत्तरा ।
पञ्चम्यनङ्गमदनाऽऽतुराऽऽनङ्गपदादिका ॥
शिशिरा कथिता ह्येताः शक्तयो रससंख्यकाः ।
अनेन विधिना पूज्या कुमारी साधकोत्तमैः ॥

महाकालसंहितायाम्—

समाप्येत्थं कुमार्यर्चां तत्पुरो भुवि वारिणा ।
वर्त्तुलं मण्डलं कृत्वा तन्मध्ये कुलकामिनीम् ॥
विलिख्य जलकुसुमाक्षतचन्दननागजैः ।
पूजयेन्मण्डलं तच्च शुभदायै नमो वदेत् ॥
स्थालीगतं ततः सर्वमन्नं तत्र निवेश्य हि ।
नानाविधां च सामग्रीं लेह्यचोष्यादिघट्टिताम् ॥
मांसमीनसुरापूर्णां भक्ष्यचर्व्यादिपूरिताम् ।
कुमारीदक्षहस्तं च स्थापयित्वाऽन्नमूर्धनि ॥
उत्तानं वक्ष्यमाणेन मनुनाऽन्नं समुत्सृजेत् ।*
तथा—इतरासां कुमारीणां प्रत्येकं पूजनं चरेत् ।
गन्धपुष्पैर्धूपदीपैर्नैवेद्यैरन्नसंभृतैः ॥
तथा—अन्नानि यादृशान्यस्यै मुख्यायै कल्पितानि हि ।
अन्याभ्यस्तादृशान्येव दातव्यान्येष निश्चयः ॥
फलाफलं तु मुख्याया ज्ञेयमत्र विपश्चिता ।
भुञ्जानासु कुमारीषु न तूर्यध्वनिमाचरेत् ॥
नान्यत्र च मनो दद्यात् संबाधं नैव कल्पयेत् ।

---

*अन्नोत्सर्गमन्त्रस्त्वेवं—ऐं ह्रीं श्रीं क्लीं सौः सर्वशक्तिस्वरूपायै सर्वसिद्धिदायै भगवत्यै कुमार्यै भक्ष्यभोज्यनानाविधाकल्पितषड्रसोपेतमिदं महाभोगनैवेद्यं तुभ्यमहं निवेदयामि गृहाण गृहाण भुङ्क्ष्व भुङ्क्ष्व प्रसीद प्रसीद सर्वसिद्धिं मे प्रयच्छ प्रयच्छ ऐं ह्रीं श्रीं नमः स्वाहा ।

कोलाहलं निषेधेत अमङ्गल्यानि यानि च ॥
रुदितापानवायुं च प्रयत्नेन विवर्जयेत् ।
सावधानो भवेदत्र किमादौ भक्षयन्ति ताः ॥
मिथः किं वा प्रजल्पन्ति कुत्र वा वस्तुनि स्पृहा ।
कुत्र दृष्टिं प्रक्षिपन्ति भीताः किं वा वदन्त्यमूः ॥
इत्यादिनानाजातीयाश्चेष्टा आसां प्रयत्नतः ।
सावधानतया ज्ञेया भद्राभद्रस्य सूचकाः ॥
भक्षयन्तीषु तास्वेवं पठेत् तत् स्तोत्रमत्वरम् ।
कृताञ्जलिर्नम्रशिरा आसामग्रे क्षिपन् दृशौ ॥

## कुमारीस्तोत्रम्

जयकालि महाभीमे भीमरावे भयापहे ।
संसारदावाग्निशिखे वृजिनार्णवतारिणि ॥
ब्रह्मेन्द्रोपेन्द्रभूतेश-प्रभृत्यमरवन्दिते ।
सर्गपालनसंहार-कारिण्यहितमारिणि ॥
गुह्यकालि परानन्द-रसपूरितविग्रहे ।
परब्रह्मरसास्वाद-कैवल्यानन्ददायिनि ॥
गुणातीतेऽपि सगुणे महाकालपान्तनर्त्तकि ।
कुमारीरूपमास्थाय विश्वे प्रज्ञास्वरूपिणि ॥
आगतासि ममागारं शारदार्चासमाप्तये ।
सांवत्सरिककल्याण-सूचनाय तथैव च ॥
धन्योऽस्मि कृतकृत्योऽस्मि सफलं जीवितं मम ।
यस्मात् त्वमीदृशं कृत्वा कौमारं रूपमुत्तमम् ॥
गुह्यकालि समायाताब्दिकपूजाजिघृक्षया ।
त्वमेवैतेन रूपेण देवेभ्यः प्रार्थिता पुरा ॥
दत्तवत्यसि साम्राज्यं वरानपि समीहितान् ।
मह्यमप्यद्य देवेशि वरं देहि सुपूजिता ॥
ब्रह्मणे सृष्टिसामर्थ्यं त्वं पुरा दत्तवत्यसि ।
विष्णवे च त्वमेवादास्तथा पालनशक्तिताम् ॥
महारुद्राय संहारकर्त्तृत्वमददः शिवे ।
देवेभ्यश्चापि दैत्यानां नाशने दक्षतामपि ॥

अन्तर्यामिन्यसीशानि त्रिलोकीवासिनामपि ।
निवेदयामि किं तेऽहं सर्वकर्मैकसाक्षिणि ॥
शत्रुनाशं राज्यलाभं शरीरारोग्यमेव च ।
त्वत्पादाम्बुजयोर्भक्तिं याचेऽहं चतुरो वरान् ॥
नमस्ते भगवत्यम्ब नमस्ते भक्तवत्सले ।
नमस्ते जगदाधाररूपिणि त्राहि मां सदा ॥
मातर्न वेद्मि रूपं ते न शरीरं न वा गुणम् ।
भक्त्या हृत्स्थितया पूजां तव जानाम्यनन्यधीः ॥
त्वं माता त्वं पिता बन्धुस्त्वमेव जगदीश्वरी ।
त्वं गतिः शरणं त्वं च स्वर्गस्त्वं मोक्ष एव च ॥
विहाय त्वां जगन्मातर्नान्यां जानामि देवताम् ।
नमस्तेऽस्तु नमस्तेऽस्तु नमस्तेऽस्तु नमो नमः ॥

इति कुमारीस्तोत्रं समाप्तम्

## कुमारीपूजाफलम्

एभिः श्लोकैः स्तुतिं कुर्यात् कुमारीणां वरानने ।
दद्यादाचमनीयं हि भोजनान्ते गतत्वरः ॥
ततः प्रदद्यात् ताम्बूलं मृगचन्द्राभिवासितम् ।
सह वाद्यादिभिस्तावदनुव्रज्य विसर्जयेत् ॥
शुभाशुभफलं वच्मि साम्प्रतं तव पार्वति ।
तत्राप्यादौ शुभं वक्ष्ये विपरीतं ततोऽस्य च ॥
तदुच्छिष्टं ततो दद्याज् जम्बुकेभ्योऽथ भूतले ।
निखनेदप्सु वा देवि समालोड्य विसर्जयेत् ॥
आदौ भक्ते करे दत्ते सुभिक्षं विषये भवेत् ।
पायसे यजमानस्य पशुवृद्धिः प्रजायते ॥
घृते स्यादायुरारोग्यं पूजामैश्वर्यवृद्धये ।
तथा मोदकशष्कुल्योः सन्ततिर्भूयसी भवेत् ॥
मत्स्यजातिष्वर्थलाभः कृशरे यानसम्पदः ।
मांसे तु पुत्रलाभः स्यात् तेमने कामिनी भवेत् ॥
फलं मांसविशेषस्य भिन्नं भिन्नं ब्रुवे हि तत् ।
अर्थलाभस्तु वाराहे खाड्गे तु विजयो रणे ॥

माहिषेण तु मांसेन राज्यप्राप्तिर्भवेद् ध्रुवम् ।
आरोग्यं हारिणेनाशु कार्ष्णसारेण वाग्मिता ॥
शाशे मेधावितां गच्छेद्राजेष्वजरतामपि ।
आवेये पलले देवि सर्वकल्याणमाप्नुयात् ॥
कामठे मेदिनीलाभो बहुन्नत्वं च राङ्कवे ।
वार्ध्रीणसे शत्रुनाशो हांसे मनुजवश्यता ॥
तैत्तिरेऽभीष्टसिद्धिश्च वर्त्तके पापसंक्षयः ।
मनस्तोषो बलाकायां फलेक्षो विश्ववश्यता ॥
कीर्त्तिस्तु महती दध्नि दुग्धे सम्पदनुत्तमा ।
पिष्टके तनयावाप्तिः शाके च रिपुसंक्षयः ॥
हालायां पुण्यवृद्धिः स्याच्चोष्ये सम्पत् सुवाग्मिता ।
धनागमः फाणिते तु कूर्चिकायां बलोन्नतिः ॥
तुम्बी वृन्ताककुष्माण्ड-कारवेल्लपटोलकैः ।
घोषशूरणदीर्घाङ्घ्रिमूलकैस्तेमने कृते ॥
विद्यालाभो भवेद् देवि तक्रे वाक्पटुतापि च ।
गोधूमचूर्णघटिते वस्तुनि प्रतिभा रणे ॥
वेद्यां दृष्टौ भवेन्मोक्षो मण्डपेऽप्युन्नतिर्भवेत् ।
चामरछत्रयोस्तालवृन्तपर्यङ्कयोरपि ॥
घण्टादर्पणयोश्चापि दृग्दाने भूक्तिरुत्तमा ।
आकल्पालङ्करणयोः स्पर्श-चालनदृष्टिषु ॥
नानाविधानि सौख्यानि भवन्ति महितुः प्रिये ।
एवंविधानि भूयांसि चेष्टितान्यशनानि च ॥

## अशुभफलनिरूपणम्

शुभादेशीनि जायन्ते विपरीतान्यतः शृणु ।
मुख्यभूता कुमारी चेद् वमति द्वित्रिवारकम् ॥
दुर्भिक्षं जायतेऽवश्यं प्रजाः स्युः पीड़िता अपि ।
राजा विनाशमायाति कुमार्या रोदने कृते ॥
उद्गारे तु महामारी पुरीषे पुरदाहनम् ।
अभोजने शत्रुभयमापदो बहुभोजने ॥
अभाषणे स्यामयाः स्युर्विपदो बहुभाषणे ।

उपसर्गा बहुविधाश्चेष्टया करपादयोः ॥
अतिलज्जा विनाशाय तथा निर्लज्जताऽशुभा ॥
नानोत्पातास्तु मौने स्युः स्वापे बाहोर्विनाशनम् ।
सर्वनाशस्तु भीतायां क्रुद्धायां मृत्युरेव च ॥
आवेशे तत्क्षणाद्राजा म्रियते नात्र संशयः ।
शङ्कितायां शत्रुशङ्का श्रान्तायामीतितो भयम् ॥
चिन्तितायान्तु विज्ञेयं तद्राष्ट्रस्यैव पातनम् ।
मोहे वित्तविनाशः स्याज् जाड्ये पूजा च निष्फला ।
चाञ्चल्ये चञ्चला लक्ष्मीः पूजकस्यैव जायते ।
विषादवत्यथ यदि कुमारी तत्र जायते ॥
सरुजं सप्रजं राष्ट्रं तदा सीदति पार्वति ।
रोगेण म्रियते राजा यदि रुग्णा प्रजायते ॥
दुर्भिक्षमरकातङ्का यद्यश्रूणि विमुञ्चति ।
सर्वनाशो भवेत् तर्हि धुनोति यदि मस्तकम् ॥
त्रस्तायां रिपुजस्त्रासस्तस्य राज्ञः प्रदिश्यते ।
कम्पे सति स्याद् विमुखी कालिका परमेश्वरी ।
नीचैः शिरश्चेत् कुरुते असन्तुष्टा तदेश्वरी ॥
हीनायुः स्यात् तदा पृथ्वीपतिश्चेद् गद्गदस्वरा ।
पूजकस्य भवेद् दैन्यं व्याकुला यदि जायते ॥
मोहेन व्याकुलायान्तु सर्वं नगरमाकुलम् ।
व्रीडितायां भवेद्रोगः स्वेदे दारधनक्षयः ॥
अधोवायुं त्यजति चेत् कुमारी दैवयोगतः ।
पीडितं परचक्रेण तदा भवति पत्तनम् ॥
गीतं गायति चेत् तत्र कुमारी रहितक्रिया ।
सप्रजाराष्ट्रतनयदारस्य नृपतेर्मृतिः ॥
सहागताभिः कदाचिन्मुख्या विवदते यदि ।
तदा समायात्यकस्मात् परचक्रं सुदारुणम् ॥
यया कयाचित् सार्धं वा येन केनचिदेव वा ।
कुमारी भासते वीतभयं मन्दाक्षसाध्वसा ॥
प्रजायन्ते तदा तस्य विषयेषु षडीतयः ।

व्यत्यासं यदि भक्ष्यस्य कुर्वते करचालनैः ॥
ग्रस्तं समस्तं भवति मनसो वाञ्छितं प्रिये ।
उपायनीकृतं यद् यद् द्रव्यं देव्यै तु मण्डपे ॥
तच्चेत् कराभ्यां स्पृशति कान्दिशीको भवेन्नृपः ।
निर्वापयति चेद् दीपं कुमारीमुखमारुतैः ॥
बुद्धिभ्रंशो भवेत् तर्हि ज्ञानदीपश्च नश्यति ।
दैवयोगाच्च नृत्यन्ति कुमार्यश्चेत् सुराकुलाः ॥
सराजकः सविषयः श्मशानमिव जायते ।
वासांस्युत्सृज्य नग्नाः स्युर्यदि तत्र कुमारिकाः ॥
शत्रुभिर्म्रियते तर्हि राजा समरमूर्धनि ।
यदि फुत्कृत्य कुर्वन्ते करौ धृत्वा भ्रमन्ति च ॥
भूतावेशः क्षितीशस्य जायते नात्र संशयः ।
उच्चरिष्यामि हास्ये वा वदन्तीत्थं कुमारिकाः ॥
भोजनावसरे तर्हि महामारीभयं भवेत् ।
वामे वा दक्षिणे वापि चलत्तारकया दृशा ॥
रक्तोग्रया घूर्णयते शिरः स्वस्य कुमारिका ।
कुरुते वाट्टहासं सा येन त्रस्यन्ति मानवाः ॥
भूतावेशो भवेत् तर्हि प्रेता नृत्यन्ति वा पुरे ।
दन्तैर्दन्तान् पीडयित्वा कुर्यात् कटकटारवम् ॥
प्रयाति सदनं मृत्योः सदारसुतबान्धवः ।
दृशावनिमेषे कृत्वा सन्दश्यौष्ठं रदेन हि ॥
सन्तर्जयति शीर्षं चेत् कल्पयन्ती कुमारिका ।
तदेव फलमुद्दिष्टं यत् स्यात् कटकटारवे ॥
आद्यन्तिकं भवेन्मौनं करेणान्नं स्पृशेन्न च ।
शिरोऽत्यर्थं च नमयेदङ्गुष्ठेन लिखेद् भुवम् ॥
विदध्याद् भूतले रेखां करजैर्निष्प्रयोजनम् ।
संहताभ्यां कराभ्यां च कण्डूयेदथवा शिरः ॥
तृणान्यकारणाच्छिन्द्यादङ्गुलीस्फोटमाचरेत् ।
पाणिभ्यां मुद्रयेन्नेत्रे द्वौ कर्णौ पिदधाति वा ॥
कुर्वीत वा बाहुरिकां पार्ष्णिघृष्टिं करोति वा ।

महान्तं ग्रासमादत्ते मुखं व्यादाय तिष्ठति ॥
अग्नोपरि क्षुतं धत्ते जृम्भणं वा मुहुर्मुहुः ।
गृहीतःशा पाणिना वान्नं चतुर्दिक्षु क्षिपत्यपि ॥
उत्थाय वा प्रचलति त्यक्तान्नं पूजनं तथा ।
आयाति वमनं वास्याः स्यातां रोमाञ्चवेपथू ॥
निर्गच्छतो वा तद्गात्रात् पूयास्रे हेतुमन्तरा ।
अकस्मादेव कुरुते काकुं चेत् कारणं विना ॥
अश्लीलं वलाति तथा स्वबर्ग्यार्थे प्ररोदिति ।
आमुक्तालङ्कृतिर्मुञ्चेद् गृहं यास्यामि वा वदेत् ॥
यस्य कस्यापि वा कुर्याद् भर्त्सनं तत्स्थले स्थिता ।
उपालभेत वा काञ्चित् सहैवास्या उपेयुषी ॥
भिनत्ति वा निदानं वा स्वहस्तवलयानि वा ।
कृते मृतस्य कस्यापि बन्धोः शोचति तत्र सा ॥
यत् किञ्चिद् वा प्रलपति निर्निमित्तं कुमारिका ।
सर्वमेतदमङ्गल्यं विज्ञेयं त्रिदशार्चिते ॥
दुर्भिक्षं धननाशं च रोगो मारीभयं तथा ।
पदे पदे च विपदः शोको व्याधी रिपून्नतिः ॥
परचक्रागमोऽकस्मादग्निदाहः पुरे गृहे ।
मृत्युत्रासश्च दारिद्र्यं विच्छेदो बन्धुभिः सह ॥
भूतप्रेतपिशाचाभिनिवेशोऽपि गृहे गृहे ।
अष्टभिस्तु महारोगैः प्रजानां निधनं भवेत् ॥
इतस्ततः प्रधावन्ति काका भयनिपीड़िताः ।
किं बहूक्तेन देवेशि शिली आकालिकी भवेत् ॥
इतरैषाममीभिस्तु भयं राज्ञां महद् भवेत् ।
कुमारीचेष्टितद्वारा ज्ञायते हि शुभाशुभम् ॥
वार्षिकं च फलं राज्ञो जयो वाथ पराजयः ।
मृत्युर्दुःखं भयं सौख्यं शत्रुभीतिर्बलोन्नतिः ॥
राज्यवृद्धिः प्रजापीड़ा व्यङ्गताऽनीकसंक्षयः ।
कुमारीपूजनात् सर्वं ज्ञायते भोजनादपि ॥
परीक्ष्य यत्नतस्तस्माद्राज्ञा स्वस्य शुभाशुभम् ।

अर्चातोऽपि विशेषेण भोजनेन सुरेश्वरि ॥
जाते शुभे समीचीनं वृत्ते तद्वितरत्र हि ।
काम्यार्चा बहुसम्भारैर्दोषं तज्जं निवारयेत् ॥
निवृत्य स्वगृहं रुष्टा याता यदि कुमारिका ।
तस्मिन्नेवाऽहनि भवेत् तथापि न शुभं फलम् ॥
इत्यादिफलबाहुल्यं शुभस्याप्यशुभस्य च ।
मया विविच्य कथितं ध्रियस्व हृदि यत्नतः ॥
ततो निशीथसमये विधिवत् पूजनं पुनः ।
पीठमूर्त्योः प्रकुर्वीत धूपदीपानुलेपनैः ॥
नैवेद्यैरुपहारैश्च गीतवाद्यादिभिस्तथा ।

यामले—कुमारी पूजिता हन्ति कलुषं पूर्वसञ्चितम् ।
कुमारिकां विजानीयात् साक्षात् प्रकृतिरूपिणीम् ॥
पत्रं पुष्पं फलं तोयं यत् किञ्चिद् वस्तु शोभनम् ।
अनन्तफलदं प्रोक्तं कुमार्यै चेत् समर्पयेत् ॥
भोजिता चेत् कुमारी स्याद् भोजितं भुवनत्रयम् ।
ब्राह्मणाय सुशीलाय कुमारीं यः समर्पयेत् ॥
पृथिवीदानजं पुण्यं सोऽश्नुते नात्र संशयः ।
स सर्वसिद्धिमाप्नोति यः कुमारीं समर्चयेत् ।
वसन्ति सततं देहे कुमार्या योगिनीगणाः ।
अतः पूज्या नमस्या सा लालनीया तदिच्छया ॥
अशक्त्या पूजयेदेकां कुमारीं साधकोत्तमः ।
विना कुमारिकापूजां न पर्व परिहापयेत् ॥
यो नित्यमर्चयेदेतां तस्य स्यात् सिद्धिरुत्तमा ।
नवरात्रे समायाते नवम्यन्तं निशीथधीः ॥
नानोपहारैरभ्यर्च्य कुमारीं वृद्धिपूर्वकम् ।
वृद्धिक्रमेण प्रयजेद् वाञ्छितां सिद्धिमाप्नुयात् ।
अथवा पूजयेन् मन्त्री युवतीर्नवसंख्यकाः ।
हृल्लेखा गगना रक्ता महोच्छुष्मा करालिका ॥
इच्छा ज्ञाना क्रिया दुर्गा नव नामभिरीरिताः ।
पूर्ववत् पूजयेन् मन्त्री जपेत् साग्रं सहस्रकम् ॥

यदि सा क्षोभमायाति स्वयमेव विलासिनी।
तया सह नयेद्रात्रिं वासरं वा निशातधीः ॥
कुमारीं न स्पृशेदेव भावयुक्तेन चेतसा।
अन्यथा मृत्युमाप्नोति नो चेद् देवी पराङ्मुखी ॥

इति कुमारीपूजाविधिः

## अथ शिवाबलिः

कुलचूडामणौ—बिल्वमूले प्रान्तरे वा श्मशाने वापि साधकः।
मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत् ॥

महाकालसंहितायाम्—

पुराद् बहिर्निशाकाले महारण्यसमीपतः।
गृहीत्वा भक्ष्यवस्तूनि पूजासम्भृतिमप्युत ॥
आप्तैरनुगतो छिन्नैः प्रदद्यात् फेरवीबलिम्।
आमानि पक्वान्यपि च मांसानि विधिनाऽर्पयेत् ॥
तत्रोदीचीदिग्वदनो वीतभीः शुचिरूर्जितः।
प्राणायामं षडङ्गं च विधायाऽर्घ्यं प्रपूज्य वै ॥
उत्थाय मुक्तचिकुरः शिवा आकारयेच्छनैः।

कुलचूडामणौ—कालि कालीति वक्तव्यं तत्र सा शिवरूपिणी।
पशुरूपा समायाति परिवारगणैः सह ॥
भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरम्।
तदैव मङ्गलं तस्य नान्यथा कुलभूषण ॥
अवश्यमन्नदानेन नियतं तोषयेच्छिवाम्।
नित्यश्राद्धं यथा सन्ध्यावन्दनं पितृतर्पणम् ॥
तथेयं कुलदेवीनां नित्यता कुलपूजने।
पशुरूपां शिवां देवीं यो नार्चयति निर्जने ॥
शिवारावेण तस्याशु सर्वं नश्यति निश्चितम्।
जपपूजाविधानानि यत्किञ्चित्सुकृतानि च ॥
गृहीत्वा शापमासाद्य शिवा रोदिति निर्जने।
एकया त्वश्यते यत्र शिवया देवभैरव ॥
तत्रैव सर्वशक्तीनां प्रीतिः परमदुर्लभा।
पशुशक्तिर्नरे शक्तिः पक्षिशक्तिश्च भैरव ॥

पूजिता विगुणं कर्म सगुणं कारयेद् यतः ।
तेन सर्वप्रयत्नेन कर्त्तव्यं पूजनं महत् ॥
राजादिभयमापन्नं देशान्तरभयादिकम् ।
शुभाशुभानि कर्माणि विचिन्त्य बलिमाहरेत् ॥
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ।
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ॥
एवमुच्चार्य दातव्यो बलिः कुलजनप्रिये ।

महाकालसंहितायाम्—स्थानादस्मादपसरेत् किञ्चिद् दूरतरं प्रिये ।
शिवा यथा वीतभया आगच्छन्त्यन्नसन्निधौ ॥
तत्र स्थित्वा निरीक्षेत किं किं ता भक्षयन्ति हि ।
सर्वा आगत्य चेत् सर्वं प्रदत्तं भक्षयन्ति हि ॥
विनिर्दिशेत् सर्वसिद्धिं राज्यलाभं धनागमम् ।
यद् यत् ता भक्षयन्त्यन्नं तत्तत् फलमवाप्नुयात् ॥
यद् यच्च नैव खादन्ति तत्तन्नैव फलं भवेत् ।
कुमारीपूजनादौ तु विशेषोऽस्योपवर्णितः ॥
तेन नात्र ब्रुवे देवि ग्रन्थाधिक्यभयादपि ।
कुमारीरूपमास्थाय यथायाति महेश्वरी ॥
शिवारूपं तथा कृत्वा स्वयमायाति कालिका ।
ततो भक्तिः प्रकर्त्तव्या तासु यत्नेन साधकैः ॥
शिवासु भक्षयन्तीषु सर्वेभ्यो बलिमाहरेत् ।
संहारभैरवायादौ वटुकेभ्यस्ततः परम् ॥
विनायकेभ्यो मातृभ्यः क्षेत्रपालेभ्य एव च ।
योगिनीभ्यो डाकिनीभ्यः शिवदूतीभ्य एव च ॥
पुरोक्तो मन्त्र आसिद्धिं तेन तेन बलिं हरेत् ।
महदैश्वर्यमाप्नोति निःशेषं भक्षयन्ति चेत् ॥
अर्धे तु मध्यमा सिद्धिरभक्षे तु विपद् भवेत् ।

कुलचूड़ामणौ—यदि नो गृह्यते वत्स तदा नैव शुभं भवेत् ।
शुभं यदि भवेत् तत्र भक्ष्यते तदशेषतः ॥

महाकालसंहितायाम्—खादित्वोत्थाय तिष्ठत्सु शिवावृन्देषु तत्र हि ।
दण्डवत् प्रणमेत् सर्वाः स्वेष्टदेवीधिया स्वयम् ॥

पुष्पाञ्जलिं समादाय गन्धचन्दनचर्चितम् ।
उत्थाय मुक्तचिकुरो मीलिताक्षो दिगम्बरः ॥
भक्तिशाली वीतभयः किञ्चित् प्रणतकन्धरः ।
स्तुतिं कुर्यात् स्तवैरेतैर्वरप्रार्थनपूर्वकम् ॥
शिवारूपधरे देवि गुह्यकालि नमोऽस्तु ते ।
उल्कामुखि ललज्जिह्वे घोररावे शृगालिनि ॥
श्मशानवासिनि प्रेते शवमांसप्रियेऽनघे ।
अरण्यचारिण्यनघे शिवे जम्बुकरूपिणि ॥
नमोऽस्तु ते महामाये जगत्तारिणि कालिके ।
मातङ्गि कुक्कुटे रौद्रि महाकालि नमोऽस्तु ते ॥
सर्वसिद्धिप्रदे भीमे भयङ्करि भयापहे ।
प्रसन्ना भव देवेशि मम भक्तस्य चण्डिके ॥
संसारसागरतरे जय सर्वशुभङ्करि ।
विस्रस्तचिकुरे चण्डि चामुण्डे मुण्डमालिनि ॥
संहारकारिणि क्रुद्धे सर्वसिद्धिं प्रयच्छ मे ।
दुर्गे किराति शवरि प्रेतासनगतेऽभये ॥
अनुग्रहं कुरु सदा कृपया मां विलोकय ।
राज्यं प्रयच्छ विकटे वित्तमायुः सुतान् स्त्रियम् ॥
शिवाबलिप्रदानेन त्वं प्रसन्ना भवेश्वरि ।
नमस्तेऽस्तु नमस्तेऽस्तु नमस्तेऽस्तु नमोऽस्तु ते ॥
इत्येतैरष्टभिः श्लोकैः शिवास्तोत्रमुदीरयेत् ।
ततस्तच्छेषमन्नं यद् भाजनं चान्यदेव वा ॥
सर्वं हि निखनेद् भूमौ प्रयत्नेनैव पार्वति ।
यदि काकाः खराः श्वानो ये चान्ये पापजातयः ॥
भक्षयन्ति तदुच्छिष्टं तदा विघ्नः प्रजायते ।
रात्रावेव समागच्छेन्निर्भयो विपिनान्तरात् ॥
आगत्य गन्धपुष्पाद्यैः पुनर्देवीं प्रपूजयेत् ।
कुलचूडामणौ—एवं ज्ञात्वा महादेव शान्तिस्वस्त्ययनं चरेत् ।
कुलाचारं दक्षिणाख्यं कथितं तव सुव्रत ॥
न कस्मैचित् प्रवक्तव्यं यदीच्छेच्छाश्वतं सुखम् ।

निर्जने चैव कर्त्तव्यं न च मानुषसन्निधौ ॥
किं वा पक्षिपतङ्गादि-दर्शने नैव कारयेत् ।
पातालमण्डपे वापि गह्वरे वा सुयन्त्रिते ॥
निश्छिद्रमण्डपे वापि कर्त्तव्यं तव सन्निधौ ।

## अथ प्रायश्चित्तम्

त्रिशक्तिरत्ने—निषिद्धाचरणे पुंसां विहिताकरणे तथा ।
प्रायश्चित्तोपपातः स्यादिति ॥
नित्यातिक्रमविद्यानां शान्त्यै विद्याशतं जपेत् ।
नैमित्तिकातिक्रमणे सहस्रं प्रजपेन् मनुम् ॥

लिङ्गागमे—शृणु देवि प्रवक्ष्यामि प्रायश्चित्तविधिं तव ।
गुरुत्यागकरः शिष्यः प्रायश्चित्ती भवेद् ध्रुवम् ॥
लक्षं श्रीपादुकां जप्त्वा तस्मात् पापाद् विशुध्यति ।
मन्त्रत्यागकरो यस्तु तत्सङ्गं वर्जयेत् प्रिये ॥
लक्षमेकं जपेन् मन्त्रं होमतर्पणतः शुचिः ।

श्रीपादुकां गुरुपादुकाम् । त्यागस्तु कौलिकस्यैव गुरोः कौलिकानां निषिद्धः न त्वकौलिकस्यापि । तथाहि—यामले—

मधुलोभाद् यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ।
गुरुलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ॥

गुरोः पशोः । गुर्वन्तरं कुलीनम् । एतच्च—

यदि दैवात् पशोर्विद्या लभ्यते कुलजैर्नरैः ।
द्विजं तु कौलिकं प्राप्य पुनर्विद्यामुपालभेत् ॥

इति वचनेन सुतरां व्यक्तम् । एवं पशूनामपि पशुगुरुत्यागे दोषो बोध्यः । लक्षजपस्तन्मन्त्रस्यैव । होमो जपदशांशेन । तर्पणं तु होमदशांशेन अन्यत्र तथादर्शनात् । मन्त्रोऽप्यदुष्ट एवात्याज्यः । दुष्टस्त्याज्य एव—

शकलो बीजहीनस्तु सन्दिग्धो निन्दितस्तथा ।
मनवस्तु न सिध्यन्ति गुरुः स्याद् ब्रह्मघातकः ॥
तदा तं सहसा ज्ञात्वा मन्त्रं देवं गुरुं त्यजेत् ।

शकलादिदोषास्तूपलक्षणमात्रम् । अन्येऽपि तत्तच्छास्त्रोक्ता बोद्धव्याः । अदुष्टमन्त्रत्यागे—"क्षमस्व मातस्तत् पापं हर देवि कृपां कुरु" । इति क्षमाप्यतामेव विद्यां गृह्णीयादिति विशेषः ।

तथा—अनेकधा पशोरन्नं भुञ्जते ये तु कौलिकाः।

लक्षत्रयं जपेल्लोपां लक्षं वाप्यजपां जपेत्॥

होमयेद्दविषाऽन्नेन निष्पापः स्यात् तथा ध्रुवम्।

अनेकधा वर्षपर्यन्तम्। अत्रापि होमे जपदशांशतैव तर्पणादौ तु न प्रमाणम्।

तथा—एकपात्रे पिबेद् द्रव्यं वीरो माहेश्वरो यदि।

श्वानोच्छिष्टं भवेत् पानं प्रायश्चित्तं स कौलिकः॥

गायत्र्यास्तु सहस्रेण उपवासत्रयेण वा।

सम्यच्छोधितचित्तस्तु सुवर्णं गुरवे ददेत्॥

गायत्री स्वदेवगायत्र्येव। मन्त्रार्णवे—

बलात् स्वरसतो वापि यो रमेन् मन्त्रमातरम्।

दशलक्षं मनुं जप्त्वा तुषानलं समाचरेत्॥

मन्त्रमाता गुरुशक्तिः गुरुरेव वा।

मन्त्रपुत्र्याः स्वपुत्र्याश्च भगिन्याश्च कुलस्त्रियः॥

रमणाल्लक्षजापेन पूतो भवति कौलिकः।

मन्त्रपुत्री पुत्रत्वेन कृतोपदेशा शुद्ध्यर्थं स्वभोग्याया अप्युपदेशाभिधानात्। कुलस्त्री वीरपत्नी। तद्गमनं च भर्त्रननुज्ञयैव दोषायेति। ब्रह्मयामले—

कृत्वा वीरवधं मन्त्री वृथा पानं गुरोः स्नुषाम्।

मन्त्रपुत्रीं वीरपत्नीं रमित्वा लक्षमाजपेत्॥

इदमाचारापकृष्टवीरविषयम्। एवं च—

त्रयोदश सहस्रं तु दिव्यवीरवधे जपेत्।

इति अकामकृतवधविषयं वधानुकूलव्यापारमात्रविषयं वा आततायिविषयं वा।

तथा—अनस्थिप्राणिसंघातं हत्वा च नरकं व्रजेत्।

हत्वा च पक्षिणः सर्वान् स्त्रियं चैकादशं जपेत्॥

अनस्थिप्राणिसंघातं जलौकादि। स्त्रियं तेषामेव। एकादशं एकादशशतम्। एकादशमित्यनुस्वारस्तान्त्रिकः। तथा—

सर्पमार्जारनकुल-मूषमुष्ट्रं खरं हयम्।

गजाद्यांश्च मृगान् सर्वान् हत्वा चाष्टशतं जपेत्॥

जपेदष्टसहस्रं तु क्षुद्रजन्तुवधे कृते।

अष्टसहस्रमष्टोत्तरसहस्रम्। क्षुद्रजन्तवः उक्तभिन्ना छागादयः। यत् तु—"छागादिहनने जप्यात् त्रिसहस्र"मिति तन्त्रान्तरे उक्तं तदभ्यासकृतविषयम्।

त्रिशक्तिरत्ने—बलिदानं विना मन्त्री पातयेन्न पशून् क्वचित् ।
अन्यथा स्मार्त्तमुदितं प्रायश्चित्तं मनीषिभिः ॥
तथा—गोवधे दशभिर्लक्षैर्मुच्यते नरकार्णवात् ।
लक्षैर्द्वादशभिर्मन्त्री वृषं हत्वा विमुच्यते ॥
गुरुं हत्वा प्रमादेन पञ्चलक्षैर्भवेच्छुचिः ।

इदं चोद्यमात्रपरम् । वधे तु प्राणान्तिकस्यैवोक्तत्वात् । तथा—
दशभिः कोटिभिर्मन्त्री स्त्रीवधात् प्रतिमुच्यते ।
नक्ताशी ख्यापयन् पापं पीठक्षेत्रे परिभ्रमेत् ॥
प्रमादात् पातिते विप्रे लक्षैर्विंशतिभिः शुचिः ।
क्षत्रादयो यथोक्तेन मुच्यन्ते किल्बिषादितः ॥

यथोक्तेन ब्राह्मणापेक्षया यथाक्रमं द्वैगुण्याद्याधिक्येन । तथाहि तन्त्रे च—
ब्राह्मणस्य वधे लक्षं क्षत्रिये द्विगुणं स्मृतम् ।
वैश्ये त्रिगुणमुद्दिष्टं पादजे च चतुर्गुणम् ॥

अत्र लक्षं वध इत्युभयमप्युपलक्षणम् । यस्मिन् पापे विप्रस्य प्रायश्चित्तं तस्मिंस्तद्वर्णस्य तदाधिक्यमिति ।
अर्हद्बौद्धवधे मन्त्री खाब्धिलक्षं मनुं जपेत् ।

अर्हद्बौद्धा आर्हतोपासका बौद्धाः । खाब्धिलक्षं चत्वारिंशल्लक्षम् ।
तथा—बभ्रोश्च शूकराणां च वधे पञ्चसहस्रकम् ।

जपेदित्यनुषङ्गः । बभ्रुर्नकुलः । तथा—
पक्षिणां हनने मन्त्री द्विसहस्रेण शुध्यति ।
सर्पमार्जारमत्स्यानां वधे वेदसहस्रकम् ॥
देवद्रोहाद् गुरुद्रोहाद् त्रिंशत्कोटिमनुं जपेत् ।

पक्षिणां सर्पमार्जारयोश्च प्रायश्चित्तवादो(तद्ध्रासो?)ऽकामकृतविषयः । द्रोहो मरणानुकूलव्यापारः । एतच्च गुणवद्गुरुविषयम् । तथा—
देवद्रव्यं गुरुद्रव्यं भुक्त्वा तावन् मनुं जपेत् ।

भुक्त्वा तदननुज्ञया । तावत् त्रिंशत्कोटिम् ।
तदनुज्ञाविप्लवयोस्तदर्धं जपमाचरेत् ।

विप्लवः उद्वेगः ।
निन्दने समयानां च योगिनी-वीरयोः शिवः ।
शास्त्राणां मन्त्रिणां स्त्रीणां सहस्रं जपमाचरेत् ॥

वामदक्षिणसिद्धान्ते शैवव्रतधरे हते ।
चतुष्कोटिमितं मन्त्री जपन् शुध्यति किल्बिषात् ॥
आद्यादिनिन्दने मन्त्री दशावर्त्तेन शुध्यति ॥
अर्घामृतं पिबेत् पूर्वं देवीमुत्थापयेत् ततः ।
पशुपानं भवेत् तस्य तत्क्षयो लक्षतो भवेत् ॥

अर्घामृतं विशेषार्घामृतम् ।

अनिवेद्य तु यो भुङ्क्ते प्रजपेत् स शताष्टकम् ।

अनिवेद्य देव्यनुज्ञामगृहीत्वा । तथा—

वीरपत्नीं वृथापानं वीरपत्नीस्नुषे तथा ।
प्रायश्चित्तं चरेन् मन्त्री दिव्यवीरार्चनादिकम् ॥
दीपनाशे पात्रनाशे पात्रप्रस्खलने तथा ।
पूजयित्वा महादेवीं जपेदष्टोत्तरं शतम् ॥
अज्ञानादेवमुद्दिष्टं ज्ञानतो द्विगुणं भवेत् ।

इदं तु कामतो द्वैगुण्यं सर्वत्र बोध्यम् । भूतभैरवे—

भग्नं च स्फुटितं यन्त्रं हृतं चौरेण वा प्रिये ।
उपवासं प्रकुर्वीत दिनमेकमतन्द्रितः ॥
लक्षमात्रं जपेद् विद्यां होमतर्पणपूर्विकाम् ।
सभक्त्या च गुरुं तोष्य ब्राह्मणानपि भोजयेत् ॥
कदाचिल्लुप्तचिह्नं वा स्फुटितादिविभूषणम् ।
भग्नं करोति यो मर्त्यो मृत्युस्तस्य भवेद् ध्रुवम् ॥
तस्मात् स तीर्थराजे वा गङ्गादिसरितान्तरे ।
समुद्रे वा क्षिपेद् देवि अन्यथा दुःखमाप्नुयात् ॥

## अथान्त्येष्टिः

तत्रैव—अम्बिके यो यदा मन्त्री देहधर्ममुपाश्रितः ।
अन्त्येष्टिस्तत्र कर्त्तव्यास्तच्छिष्याद्यैर्विधानतः ॥
कर्त्ता नित्यक्रियां कृत्वा पञ्चरत्नैर्विशोधयेत् ।
प्रेतं नेत्रादिमार्गेण लोकान्तरविनिर्गतम् ॥
आकृष्य स्थापयेत् प्रेते जीवात्मानं गुरूक्तितः ।
पञ्चप्रणवयोगेन वियद्वह्न्यनिलात्मभिः ॥
मोक्षदे पदमुच्चार्य चक्षुरादि समुच्चरेत् ।

प्रेतनाम समुच्चार्य वदेदावाहयामि च ॥
अनेनावाहयेत् प्रेतं तत्र प्राणांश्च विन्यसेत् ।
अङ्गप्रकल्पनं कुर्यान् मायया दीर्घसंयुजा ॥
प्रतिष्ठाप्य घटं मन्त्री परेतं स्थापयेत् सुधीः ।
पञ्चगव्यैरघोरेण वर्धन्या त्वभिषिच्य तम् ॥
शुद्धतोयेन संस्थाप्य भस्मना स्थापयेत् पुनः ।
प्रेतं दक्षिणमूर्धानं न्यस्य दर्भास्तरे सुधीः ॥
नववस्त्रस्रगालेपैरलङ्कृत्य विभूषणैः ।
अभ्यर्चेद् गन्धपुष्पाद्यैर्मूलमन्त्रेण साधकः ॥
सम्यग्विमानं सङ्कल्प्य मृतकं तत्र विन्यसेत् ।
ग्रामं प्रदक्षिणीकुर्वन् शङ्खभेर्यादिनिःस्वनैः ॥
प्रेतस्थानं समाविश्य दक्षिणोत्तरमायतम् ।
उपलिप्य समां भूमिं तत्र लाजतिलाक्षतान् ॥
विकिरेत् सर्षपोपेतान् विमानमथ विन्यसेत् ।
संस्थाप्य तत्र चित्यग्निं परिस्तीर्य विलोमतः ॥
पात्राण्यासादयेन् मन्त्री दक्षिणे विष्णुदैवतम् ।
प्रणीतापात्रमासाद्य सम्पूज्य कुङ्कुमादिभिः ॥
दर्भैराच्छादिते मन्त्री वह्निकोणे प्रविन्यसेत् ।
दक्षभागे यजेद् देवं भैरवं मण्डलं क्रमात् ॥
उक्तेन विधिना कृत्वा वह्नेर्जिह्वादिकल्पनम् ।
तिलतण्डुलसंमिश्रं श्रपयेच्चरुमुत्तमम् ॥
मृत्युञ्जयेन मन्त्रेण शतमष्टोत्तरं सुधीः ।
साज्येन चरुणा हुत्वा पञ्चरत्नैर्विशेषतः ॥
जुहुयान् मूलमन्त्रेण क्रमादावरणान्तिकम् ।
एवं विलोमतो होमान् सर्वमन्त्रान् गुरोस्तनौ ॥
क्रमेण विलयं नीत्वा जुहुयाद् वाग्भवेन च ।
हुत्वाथ मूलमन्त्रेण प्रेतदेहे विलोमतः ॥
तत्त्वानि विलयं नीत्वा सर्वमात्मनि योजयेत् ।
पुण्यपापे परेतस्य जुहुयान् मन्त्रमुच्चरन् ॥
ततः पूर्णाहुतिं दत्त्वा योजयेत् परमे पदे ।

शिवशक्त्यात्मके शुद्धे पुनरावृत्तिवर्जिते ।
सच्चित्सुखमये साक्षात् तत्त्वातीते निराकुले ।
इति संयोजितः प्रेतः शिष्येण परमे पदे ॥
सन्त्यज्य मलकालुष्यं शम्भुभावाय कल्पते ।
आज्येन जुहुयाद् वह्नावघोरास्त्रेण मूलतः ॥
अनुलोमविधानेन प्रायश्चित्ताय साधकः ।
परेतदेहमानेन शयनं परिकल्पयेत् ॥
वह्नेर्दक्षिणदिग्भागे कुलवृक्षसमुद्भवैः ।
शङ्कुभिर्दक्षिणाग्रैस्तु विल्वैर्जवाकुशैस्तथा ॥
आस्तीर्य शयनं मन्त्री त्रिगुणीकृततन्तुना ।
संवेष्ट्य पूजयेद् गन्धपुष्पाद्यैरुपचारकैः ॥
आच्छाद्य नववस्त्रेण तत्र यन्त्रं लिखेत् सुधीः ।
पद्मं त्रिकोण-षट्कोण-कर्णिकं साष्टपत्रकम् ॥
सोर्ध्वरेखं ततस्तत्र पुष्पाण्याकीर्य सर्वतः ।
प्रेतं दक्षिणमूर्धानं विन्यसेदिह साधकः ॥
रक्षामन्त्रेण सङ्कल्प्य ज्वालामालिनीविद्यया ।
प्रज्वाल्याऽघोरमन्त्रेण वहेत् पादादितो बुधः ॥
अघोरास्त्रेण मन्त्रेण मन्त्री पाशुपतेन वा ।
यावद् भस्मीभवत्येष तावद्धोमं करोत्विह ॥
स्तोत्रमन्त्रजपं कुर्युः समयज्ञाः समागताः ।
भस्मीभूते परेतेऽस्मिन् देवान् सम्यक् समर्चयेत् ॥
चित्यग्निं रक्षयेन् मन्त्री सम्प्राप्ते सप्तमेऽहनि ।
निर्वाप्य पयसास्थीनि वेष्टयेन् नववाससा ॥
तद्भस्म निःक्षिपेत् क्वापि विशुद्धे सलिलाशये ।
अस्थिकूटं खनेन् मन्त्री देवमातृगृहेऽथवा ॥
स्वगृहे वा निखन्यैतत् त्रिसन्ध्यं पूजयेदिदम् ।
पर्वपूजां मृतदिने प्रतिमासं प्रकल्पयेत् ॥
सम्पूर्णे वत्सरे कुर्यान् महोत्सवमतन्द्रितः ।
ततो कूटं समुद्धृत्य नद्यां वा विधिसंस्पृशि(?) ॥
निःक्षिपेन् निखनेत् क्वापि विशुद्धे धरणीतले ।

केनापि कीकशेनाऽस्य प्रतिमां पादुकेऽथवा ॥
कृत्वा सम्पूजयेन् मन्त्री गुरुभक्तिपरायणः।
देशान्तरमृतानां च जीवतामपि साधकः ॥
दर्भपुञ्जैः पलाशैर्वा शालिपिष्टेन वा पुनः।
देहं कृत्वा यथापूर्वं शेषं कुर्याद् विचक्षणः ॥
अथवा मनसा कुर्यादेकान्ते स्वयमास्तिकः।
वाग्भवं दीपिनि ज्वालामालिनीति पदं ततः ॥
क्रोधहंसेन्दुहेत्यर्णान् संपुटत्वेन योजयेत्।
एतानि तत्र बीजानि प्रणवो जीवके शवे ॥
हंसेन्द्वङ्कान्तकुटिलवह्निबिन्दून् भगाश्रितान्।
शिवशक्तिक्षमेन्द्राम्बु-वह्निवातार्घिसत्त्रयम् ॥
ज्वालामालिनीमन्त्रोऽयं कथितो मन्त्रकोविदैः।
मायाबीज-स्फुरद्वन्द्वं प्रस्फुरद्वितयं तथा ॥
घोरघोरतरेत्यन्ते तनुरूपपदं वदेत्।
चट-प्रचटद्वितयं कहद्वन्द्वं वमद्वयम् ॥
बन्धद्वयं समुच्चार्य घातयद्वयमुच्चरेत्।
वर्मास्त्रान्तः समुद्दिष्टो वर्णात्माऽघोरमन्त्रकः ॥
तारश्रीं पशुवर्णान्ते कवचास्त्राक्षरौ वदेत्।
मनुः पाशुपतास्त्रोऽयं क्षुद्रग्रहनिवारकः ॥
पञ्चान्तकेन्दुपार्श्वार्णान् समधान्तसमन्वितान्।
इन्द्रानूढान् सुधीः कुर्याद् वामकर्णेन्दुसंयुतान् ॥
पञ्चरत्नमिदं प्रोक्तं मनोभिलषितप्रदम्।

इति महामहोपाध्याय-ठक्कुर-श्रीनरसिंहविरचिते ताराभक्ति-
सुधार्णवे नैमित्तिकविधिः सप्तमस्तरङ्गः ॥ ७ ॥

## अष्टमस्तरङ्गः

## अथ पुरश्चरणम्

वायवीयसंहितायाम्—

साधनं मूलमन्त्रस्य पुरश्चरणमुच्यते ।
पुरश्चरणीयत्वाद् विनियोगाख्यकर्मणी ॥
पुरतो विनियोगस्य चरणाद् वा तथोदितम् ॥
जीवहीनो यथा देहः सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः ॥

वीरचूड़ामणौ—पुरश्चरणहीनस्य मन्त्रसिद्धिर्न जायते ।
आदौ पुरस्क्रियां कुर्यान् नियमेन यथाविधि ॥

कुलचूड़ामणौ—पञ्चाङ्गानि महादेवि जपो होमश्च तर्पणम् ।
अभिषेकश्च विप्राणामाराधनमपीश्वरि ॥
पूर्वपूर्वदशांशेन पुरश्चरणमुच्यते ।

कुलमूलावतारे—संसारे दुःखभूयिष्ठे यदीच्छेच्छ्रेय आत्मनः ।
पञ्चाङ्गोपासनेनैव मन्त्रजापी सुखं व्रजेत् ॥
पञ्चाङ्गानि महादेवि जपो होमो हि तर्पणम् ।
अभिषेकश्च विप्राणामाराधनमपीश्वरि ॥
पूर्वपूर्वदशांशेन पुरश्चरणमुच्यते ।

अत्र कौलिकानां जपे लक्षसंख्यैव । तदुक्तं तारातन्त्रे—

स्वेच्छाचारपरो मन्त्री पुरश्चरणसिद्धये ।
रहस्यमालामादाय लक्षमेकं जपेत् सदा ।

सुरेन्द्रसंहितायाम्—लक्षमात्रं जपेन् मन्त्रं दशाङ्गलोहिताम्बुजैः(?) ।
जुहुयादर्चिते वह्नौ मन्त्रः सिद्धो भवेत् ततः ॥

वीरचूड़ामणौ—चतुर्लक्षं जपेन् मन्त्री दशांशं जुहुयात् सुधीः ।
पद्मैस्त्रिमधुरोपेतैर्वाक्पतिर्जायते नरः ॥

एकवीराकल्पे—भावनारहितानां च क्षुद्राणां क्षुद्रचेतसाम् ।
चतुर्गुणो जपः प्रोक्तः सिद्धये नान्यथा भवेत् ॥

तारार्णवे—एवं ध्यात्वा हविष्याशी जपेल्लक्षचतुष्टयम् ।

रहस्यमालामादाय जपेद्‌ वा लक्षमेव च ॥

वैशम्पायनसंहितायाम्—

कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणा भवेत्।
द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणेति ॥

अत्रैवं प्रतिभाति—वीरस्य सत्ययुगे एकलक्षपरिमितः पशूनां च लक्षचतुष्टय-परिमितो जपः। कलियुगे वीरस्य लक्षचतुष्टयपरिमितः पशोश्च षोड़शलक्षपरि-मितो जपः। अन्यथा वीरस्य सत्ययुग-कलियुगयोः समानसंख्यापत्तेः। न चेष्टा-पत्तिः। वैशम्पायनीयसामान्यवचनविरोधात्। यच्च कलियुग एव पशूनामेव चतु-र्लक्षविधिरिति। तन्न। सत्ययुगे पशुवीरयोरेकसंख्यापत्तेरिति। वस्तुतः 'सिद्धमन्त्रयुग-युग सेवा परिश्रमः'(?) इति तन्त्रचूड़ामणिवचनविरोधात्—

स्वाचारनिरतो नित्यं दिवालक्षं जपेत् पशुः।
दीव्यो वाऽप्यथवा वीरो रात्रौ लक्षजपं चरेत् ॥

इति कालीकल्पोक्तकालीमन्त्रपुरश्चरणकालस्यात्राप्याकाङ्क्षितत्वात्।

लक्षमात्रं जपेद्‌ विद्यां हविष्याशी दिवा शुचिः।
अशुचिश्च तथा रात्रौ लक्षमावर्त्तयेत् सुधीः ॥

इति तारापुरश्चरणप्रकरणीयब्रह्मसंहितावचनाच्च वीरस्य। रात्रौ पशोर्दिवा सदैकलक्षजपः। चतुर्लक्षजपस्तु भ्रष्टपशुविषयः। मत्स्यसूक्ते—

मृदुकोमलमासीनो महाशङ्खाक्षमालया।
मासत्रयं त्रिपक्षं वा जपेद्‌ विद्यां समाहितः ॥
नक्तंभोजी हविष्याशी जपेद्‌ विद्यां द्विलक्षकम् ॥

इति वचनं च भ्रष्टवीरपरमिति तत्त्वम्। तन्त्रे—

यस्मिन् काले भवेद्‌ दीक्षा तस्मिन् काले भवेदिदम्।

दक्षिणामूर्त्तिकल्पे—आरभेत् प्रवरो विद्वान् पूर्वपक्षं समाश्रितः।

पुण्ये मुहूर्त्ते नक्षत्रे तिथौ स्नात्वा यथाविधि।
नत्वा गुरुं गणेशानं नत्वा दुर्गां च मातरम् ॥

पूर्वपक्षं शुक्लपक्षम्। वैशम्पायनसंहितायाम्—

चन्द्रतारानुकूले च शुक्लपक्षे शुभेऽहनि।
आरभेन्मकरादौ तु सुप्ते विष्णौ जपेन्न च ॥

योगिनीतन्त्रे—गुरोराज्ञां समादाय शुद्धान्तःकरणो नरः।

ततः पुरस्क्रियां कुर्यान् मन्त्रसंसिद्धिकाम्यया ॥

तथा—तस्मादादौ स्वयं कुर्याद् गुरुं च कारयेद् बुधः ।
गुरोरभावे विप्रं वा सर्वप्राणिहिते रतः ॥
स्निग्धं शास्त्रविदं मित्रं नानागुणसमन्वितम् ।
स्त्रियं वा शीलसम्पन्नां सदाचारां पतिव्रताम् ॥

## अथ देशाः

महाकपिलपञ्चरात्रे—क्षेत्रतीर्थवनाराम-देवालयनदीह्रदाः ।
कुटी विरक्तमित्येते देशाः स्युर्मन्त्रसिद्धिदाः ॥

प्रपञ्चसारे—समुद्रतीरेऽप्यथ वाद्रिशृङ्गे समुद्रगानां सरितां च तीरे ।
जपेद् विविक्ते निज एव गेहे विष्णोर्गृहे वा पुरुषो मनस्वी ॥

शिवालयश्च वृषशून्यो जपस्थानम् ।
प्रत्यङ्मुखः शिवस्थाने वृषभेण विवर्जिते ।

इति कुम्भसम्भववचनात् । यामले—
म्लेच्छदुष्टमृगव्याल-शङ्कातङ्कविवर्जिते ।
एकान्ते पावने चिन्तारहिते भक्तिसंयुते ॥
सुदेशे धार्मिके राष्ट्रे सुभिक्षे निरुपद्रवे ।
रम्ये भक्तगणस्थाने निवसेन्न पराश्रये ॥

## अथ पुरश्चरणनिषिद्धस्थानानि

राजानः सचिवा राज-पुरुषाः प्रभवो जनाः ।
चरन्ति येन मार्गेण न वसेत् तत्र तत्त्ववित् ॥
जीर्णदेवालयोद्यान-गृहवृक्षतलेषु च ।
नदीकुलाद्रिकूटेषु भूछिद्रादिषु नो वसेत् ॥

जीर्णत्वं वृक्षपर्यन्तमन्वेति । नदीकुलनिषेधस्तु समुद्रगाकूलभिन्नपरः । तथा-
पुण्यक्षेत्रादिकं गत्वा कुर्याद् भूमिपरिग्रहम् ।
ब्रूयादमुकमन्त्रस्य पुरश्चरणसिद्धये ॥
मयेयं गृह्यते भूमिर्मन्त्रो मे सिद्ध्यतामिति ।
भूमेः परिग्रहं कृत्वा परिमाणाच्च सर्वतः ॥
ग्रामे क्रोशमितं स्थानं नगरे तद्द्वयं स्मृतम् ।
नदीपर्वततीर्थादौ परिमाणेन वर्जितम् ॥
क्षीरवृक्षमयान् कीलानस्त्रमन्त्राभिमन्त्रितान् ।
निखनेद् दशदिग्भागे तेष्वस्त्रं च प्रपूजयेत् ॥

क्षेत्रे च कीलिते मन्त्री न विघ्नैः परिभूयते ।
क्षेत्रपालादिकांस्तत्र पूजयेत्तु विधिवित्तमः ॥
दिक्पतिभ्यो बलिं दत्त्वा ततः क्षेत्रं समाश्रयेत् ।

पूर्वेशानयोर्मध्ये ऊर्ध्वबुद्धया नैर्ऋतपश्चिमयोर्मध्ये अधोबुद्धया कीलके निखनेत् । अस्त्रमिति । यस्य यस्य या या दिक् तत्र तद्दिक्पालास्त्राणि पूजयेदिति केचित् । मूलमन्त्रस्यास्त्रं षड्ङ्गं तदीयास्त्रमन्त्रेण पूजयेदित्यपरे । ततः क्षेत्रमध्ये क्षेत्रपालबलिं दद्यात् । तदुक्तं प्रथमतन्त्रे—

क्षेत्रपालं च सम्पूज्य बलिं दद्यात् यथाविधि ।
पूर्वमेहि-द्वयं पश्चाद् विदुषि स्यान्मुरुद्वयम् ॥
भञ्जय-द्वितयं भूयो नर्त्तय-द्वितयं पुनः ।
ततो विघ्नपदद्वन्द्वं महाभैरवतत्परम् ॥
क्षेत्रपालबलिं गृह्ण-द्वयं पावकसुन्दरी ।
बलिमन्त्रोऽयमाख्यातः सर्वसिद्धिफलप्रदः ॥

वीरचूडामणौ तु—ऋषिच्छन्दादि विन्यस्य दिग्देवेभ्यो बलिं हरेत् ।
असिताङ्गभैरवब्राह्मीपदं ङेन्तं समालिखेत् ॥
बलिं गृह्ण द्विधा कुर्याद् द्विठान्तो दिग्बलेर्मनुः ।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त भैरवः ॥
कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः ।
ब्राह्मी माहेश्वरी पश्चात् कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा तदनन्तरम् ॥
महालक्ष्मीः समाख्याता स्वस्वबीजाद्यनुक्रमात् ।
धूपदीपैः समभ्यर्च्य पश्चात् कीलं निवेशयेत् ॥
प्रणवं पूर्वमुच्चार्य माया लक्ष्मीश्च मन्मथः ।
इन्द्राण्यै पदमुच्चार्य चामुण्डे च पदं ततः ॥
विच्चे इति पदं पश्चादिदं क्षेत्रं च कीलय ।
रक्षरक्षपदं पश्चात् कालिकेति समालिखेत् ।
वह्निजायान्तमन्त्रोऽयं पूर्वादिक्रमतो यजेत् ॥
मूलमन्त्रं समुच्चार्य आग्नेय्यै पदमुच्चरेत् ।
याम्यै इति पदं पश्चान् नैर्ऋत्यै च मनुं पुनः ॥
वारुण्य वायवी चेति कौवेरीशानभैरवी ।

आदौ मन्त्रं समुच्चार्य पुनर्देवीं वदेत् प्रिये ॥
बलिं दद्यात् क्रमेणैव दिग्विदिक्षु बलिं हरेत् ।
प्रणवं पूर्वमुद्धृत्य हृल्लेखाबीजमुद्धरेत् ॥
वटुकाय-पदं पश्चादापदुद्धारणाय च ।
कुरुद्वयं समुच्चार्य मायां तारं समुद्धरेत् ॥
वह्निजायान्वितो मन्त्री वटुकस्य बलिं हरेत् ।
आग्नेय्यां बलिमुत्सृज्य मायालक्ष्मीश्च मन्मथः ॥
वाराहीबीजमुद्धृत्य बीजं पञ्चान्तकं पुनः ।
गणपतये पदं पश्चाद्वरवरदं तथा पुनः ॥
सर्वजनं वदेच्चैव वदेन्मे वशमानय ।
अन्ते वह्निवधूं दद्याद् गणनाथो महामनुः ॥

वाराहीबीजं ग्लौं ।

रौद्रं त्रिगुणमुद्धृत्य नारायणं तथोद्धरेत् ।
बीजं सूक्ष्मेशमुद्धृत्यामरेशं बीजमुद्धरेत् ॥
ङेन्तं तु क्षेत्रपालं च बलिं गृह्णद्वयं ततः ।
वह्निजायान्वितो मन्त्रः क्षेत्रपालस्य कीर्त्तितः ॥
वायुबीजं त्रिधा लिख्य अनन्तो माधवस्तथा ।
वर्त्तुलाक्षीमथोद्धृत्य योगिनीभ्यस्तथैव च ॥
वह्निजायान्वितो मन्त्रो वायव्यां योगिनीबलिः ।

रौद्रं क्षकारः । त्रिगुणं त्रिवारम् । नारायणम् आं । सूक्ष्मेशम् ईं । अमरेशम् ऊं । वायुबीजं यकारः । अनन्त आकारः । माधव इकारः । वर्त्तुलाक्षी उकारः ।

क्षकारं कालमारूढं तदन्ते माऽनलाक्षरम् ।
सर्वविघ्नपदं कृद्भ्यः सर्वेभ्यो भूत उद्धरेत् ॥
भ्यो वर्म फट् समुद्धृत्य बलिं गृह्णद्वयं ततः ।
द्विठान्तः सिद्धिदः प्रोक्तः सर्वभूतबलिं हरेत् ॥

कालो मकारः मा ईकारः तेन क्ष्मीं ।

ओदनं पायसं क्षीरं मत्स्यं मांसं तथैव च ।
मोदकं पूलिकापूपं वटकं त्रिविधा सुरा ॥
हृद्योदनादि पक्वान्नमाज्यं मधु सशर्करम् ।
सर्वत्र विधिवत् कुर्याद् दुग्धेनोत्सर्गमाचरेत् ॥

यामले—क्षेत्रमध्यं समाश्रित्य कूर्मचक्रं विचिन्तयेत् ।
कूर्मचक्रमविज्ञाय यः कुर्याद् जपयज्ञकम् ॥
तज्जपस्य फलं नास्ति सर्वानर्थाय कल्पते ।
सारसंग्रहे—तच्चतुर्धा स्थितं लोके तत्प्रकारस्तथोच्यते ।
प्रथमस्तु परः कूर्मस्ततो देशगतस्तथा ॥
ग्रामगो गृहगश्चेति चतुर्धा स व्यवस्थितः ।
तन्त्रराजे—व्यञ्जनं देशकूर्मे स्याद् गृहकूर्मे स्वरास्तथा ।
ग्रामकूर्मे तद्द्वितयं परकूर्मे न तद्द्वयम् ॥
देवीयामले—कुरुक्षेत्रे प्रयागे च गङ्गासागरसङ्गमे ।
महाकाले च काश्यां च दीपस्थानं न चिन्तयेत् ।
गौतमीये—पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे ।
यदि कुर्यात् पुरश्चर्यां तत्र कूर्मं न चिन्तयेत् ॥
देशं ग्रामं गृहं वापि नवधा विभजेन्नरः ।
प्रागादिपश्चिमान्तं तु कादिमान्तानि विन्यसेत् ॥
अक्षराण्यथ यादीनि तथाष्टौ कोष्ठयोर्न्यसेत् ।
ईशद्वयमधो मध्ये स्वरान् प्रागादि विन्यसेत् ॥
ईशान्तास्तु दिशः पञ्चाशनामाद्यक्षरतो भवेत् ।
तन्मुखं पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः ॥
पुच्छमेकमथो मध्यं पृष्ठमेवं षडङ्गवान् ।
मुखे सर्वार्थसिद्धिः स्यात् करयोरल्पसिद्धयः ॥
कुक्षौ तु नित्यं नैष्फल्यं पादयोर्नैव सिद्धयः ।
पुच्छे मृत्युस्तु नियतः पृष्ठे सर्वार्थसिद्धयः ॥
तस्मात् तत् साधु विज्ञाय कुर्यात् सर्वं जपादिकम् ।
सिद्धेश्वरीतन्त्रे—तस्मान्मुखं समाश्रित्य सर्वकार्यं समारभेत् ।
तदलाभे करं वापि कूर्मस्थानं समाश्रयेत् ॥
कालिकोद्भवे—स्थानसाधकयोर्नाम्नोररित्वं यत्र विद्यते ।
तदक्षशास्त्रतो ज्ञात्वा तत्तत्स्थानं परित्यजेत् ॥
गौतमीये—मन्त्राक्षरेण मैत्रञ्च दीपनाम्नो भवेद् यदि ।
साधकस्य च नाम्नाऽथ किन्न सिध्यति मन्त्रिणः ॥
पञ्चाशद्वर्णरूपेण क्षेत्रेशा विश्वविग्रहाः ।

तस्मात् तत् सगुणं क्षेत्रं सिद्धये स्यान्न चान्यथा ॥
विगुणश्चेन् मुखस्थोऽपि न तेन सिद्धिमाप्नुयात् ।
तस्माच्चक्रं विचार्यैव मित्रं च सर्वसिद्धिदम् ॥
यस्मिन् देशे द्वीपपतिः सगुणं नाममन्त्रयोः ।
तत्र यत्नेन गन्तव्यं स पीठो दुर्लभो मतः ॥

मैत्रामैत्रमुक्तं तन्त्रान्तरे—

अरित्वमद्वयस्योक्तं गकारेण परस्परम् ।
ऋद्वयस्य चकारेण मकारस्य खकारतः ॥
लृद्वयस्य यकारेण पकारस्य च लृद्वये ।
ओद्वयस्य षकारेण षकारस्यौयुगेन तु ॥
जकारस्य ढकारेण ऊकारस्य खकारतः ।
उकारस्य तकारेण फकारस्य धकारतः ॥
मकारस्य च रेफेण यकारस्य सकारतः ।
अरित्वमेषां वर्णानामन्येषां मित्रभावना ॥
स्थानसाधकयोर्नाम्नोररित्वं यत्र विद्यते ।
तदक्षशास्त्रतो ज्ञात्वा साधको यत्नतस्त्यजेत् ॥
यथा गर्गस्य वैरि स्यादट्टहासं महापुरम् ।
औड्डियानं षण्मुखस्य ऋजुभट्टस्य चक्रकम् ॥
जयन्ती टङ्कणस्यारिः खधार उभकस्य च ।
उकदेवस्य ताराख्यं फजेर्घूमाख्यमेव च ॥
भद्रस्य रम्यकं सोमनगरं यज्ञशर्मणः ।
एवं क्रमेण विज्ञाय रिपुस्थानं त्यजेद् बुधः ॥

मेरुतन्त्रे—क्षेत्रसाधकमन्त्राणामेकमेवाद्यमक्षरम् ।
यदि स्यात् स ध्रुवं मन्त्रः सर्वसिद्धिफलप्रदः ॥

तन्त्रान्तरे—रिपुत्वे निश्चिते तस्य द्वितीयार्णादि शोधयेत् ।
इत्थं स्थानगृहं कृत्वा तत्र मन्त्री बलिं हरेत् ॥

गौतमीये—द्वीपनाथं लिखेन् मध्ये पूजयेत् तं विभावयेत् ।

तन्त्रे—पूर्वादिनवकोष्ठेषु क्षेत्रेशांस्तत्र पूजयेत् ।
अमृतः प्रथमे प्रोक्तो द्वितीये वृषभस्तथा ॥
शैलराजस्तृतीये स्याच्चतुर्थे वासुकिः स्मृतः ।

अर्थकृत् पञ्चमे प्रोक्तः शक्तिकृत् षष्ठ ईरितः ॥
पद्मयोनिः सप्तमे स्यान् महाशङ्खोऽष्टमे मतः ।
छायाछत्रगणः प्रोक्तो नवमे मन्त्रिनायकैः ॥

पुरश्चरणचन्द्रिकायाम्—

मुख्यं तस्य समाश्रित्य वातातपसहां कुटीम् ।
चतुर्हस्तां चतुरस्रां हस्तोन्नतसुवेदिकाम् ॥
चन्द्रातपपताकादि-तोरणैरप्यलङ्कृताम् ।
विरक्तामतिलिप्तां च प्राकारेणाऽभिवेष्टिताम् ॥
निर्माय च ततः कुर्यादेकभक्तं शुभे दिने ।
प्रातः स्नात्वाथ गायत्र्या अयुतं प्रयतो जपेत् ॥
ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं ततः ।

गायत्री वैदिकीति बहवः । स्वदेवगायत्रीति रहस्यविदः । सनत्कुमारः—

अथ वक्ष्यामि मन्त्रस्य पुरश्चरणमुत्तमम् ।
कृत्वाभिषेको विधिवन् मन्त्रं लब्ध्वा गुरोर्मुखात् ॥
शुभे मुहूर्त्ते नक्षत्रे तिथौ स्नात्वा यथाविधि ।
विप्रान् सन्तोष्य यत्नेन भोजनाच्छादनादिभिः ॥
भूवित्तवस्त्रभूषाढ्यैः सन्तोष्य गुरुमात्मनः ।
आरभेत जपं पश्चात् तदनुज्ञापुरःसरम् ॥

अगस्त्यसंहितायाम्—

भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा ।
पयो मूलं फलं वापि यत्र यत्रोपलभ्यते ॥
चिञ्चां च नालिकाशाकं कलायं लकुचं तथा ।
कदम्बं नारिकेलं च व्रते कुष्माण्डकं त्यजेत् ॥
मलिनाम्बरकेशादि-मुखदौर्गन्ध्यसंयुतः ।
यो जपेत् तं दहत्याशु देवता गुप्तिसंस्थिता ॥
आलस्यं जृम्भणं निद्रां द्यूतं निष्ठीवनं भयम् ।
नीचसंस्पर्शनं कोपं जपकाले विवर्जयेत् ॥

तन्त्रान्तरे—अधःशायी ब्रह्मचारी निशाशी प्रजपेन् मनुम् ।

कुलार्णवे—नियमव्यतिरेकेण यत्तु यत् कर्म करोति यः ।
किञ्चिदप्यस्य न फलं सिध्यत्यक्रमदोषतः ॥

न्यूनातिरिक्तकर्माणि न फलन्ति कदाचन ।
यथाविधि कृतानीह तत्कर्माणि फलन्ति हि ॥
तद्विधानकृतं कर्म जपहोमार्चनादिकम् ।
देवताप्रीतिदं भूयाद् भुक्तिमुक्तिफलप्रदम् ॥

अत्र ऋतुकाले स्वस्त्रीसम्भोगो न निषिद्धः ।

ऋतुकालं विना मन्त्री न स्वस्त्रियमपि स्पृशेत् ।

इति गौतमीयतन्त्रवचनात् । जपश्च सङ्कल्प्य कर्त्तव्यः । तदुक्तं कुम्भसम्भवेन—

ततः सङ्कल्प्य कुर्वीत पुरश्चरणमादरात् ।

सङ्कल्पश्च सनत्कुमारसंहितायाम्—

प्रणवं तत्सदद्येति मासपक्षतिथीरपि ।
अमुकगोत्रोऽमुकोऽहं मूलमुच्चार्य तत्परम् ॥
सिद्धिकामोऽस्य मन्त्रस्य इयत्संख्याजपं ततः ।
दशांशं हवनं होमाद् दशांशं तर्पणं ततः ॥
दशांशं मार्जनं तस्माद् दशांशं विप्रभोजनम् ।
पुरश्चरणमेवं हि करिष्ये प्रागुदङ्मुखः ॥

नारदपञ्चरात्रे—सम्पूज्याऽथ जपं कुर्याद् यावद् वै प्रहरद्वयम् ।
तन्त्रे—त्रिसन्ध्यमर्चयेद् देवं द्विः सकृद् वा विधानतः ॥

पुरश्चरणचन्द्रिकायाम्—

सम्पूज्यैव जपं कुर्यान्न मन्त्रं केवलं जपेत् ।

तन्त्रान्तरे—एकदा वा भवेत् पूजा न जपेत् पूजनं विना ।
जपान्ते च भवेत् पूजा पूजान्ते च जपेन् मनुम् ॥

मुण्डमालायाम्—यदि पूजाद्यशक्तः स्याद् द्रव्याभावेन सुन्दरि ।
केवलं जपमात्रेण पुरश्चर्या विधीयते ॥

स्त्रीणां विशेषमाह यामले—

नियमः पुरुषे ज्ञेयो न योषित्सु कदाचन ।

वीरतन्त्रे—न न्यासो योषितां चात्र न ध्यानं न च पूजनम् ।
केवलं जपमात्रेण मन्त्राः सिध्यन्ति योषिताम् ॥

## अथ जपविधिः

गौतमीयतन्त्रे—पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः ।
सौषुम्णध्वन्युच्चरिताः प्रभुत्वं प्राप्नुवन्ति ते ॥

मन्त्राक्षराणि चित्सूत्रे प्रोतानि परिभावयेत् ।
तामेव परमव्योम्नि परमामृतसंज्ञके ॥
दर्शयेदात्मसद्भावं पूजाहोमादिभिर्विना ।

रुद्रयामले—स्वापकाले तु मन्त्रस्य जपो न च फलप्रदः ।
स्वापकालो वामवहो जागरो दक्षिणावहः ॥

कुलार्णवे—जातसूतकमादौ स्यादन्ते च मृतसूतकम् ।
सुतकद्वयसंयुक्तो यो मन्त्रः स न सिध्यति ॥
ब्रह्मबीजं मनोर्दत्त्वा चाद्यन्ते परमेश्वरि ।
सप्तवारं जपेन् मन्त्रं सूतकद्वयमुक्तये ॥
एवं जपं पुरा कृत्वा तेजोरूपं समर्चयेत् ।
देवस्य दक्षिणे हस्ते गन्धपुष्पार्घवारिभिः ॥
सफलं तद्विभाव्यैव प्राणायामं समाचरेत् ।
जपस्यान्ते जपादौ च त्रितयं त्रितयं चरेत् ॥

तन्त्रान्तरे—मनसा यः स्मरेत् स्तोत्रं वचसा च मनुं जपेत् ।
उभयं निष्फलं याति भग्नभाण्डोदकं यथा ॥

रुद्रयामले—जपं यस्य शृणोत्यन्यः स मन्त्रः शून्य उच्यते ।
ऋषिच्छन्दोदेवताभिः परित्यक्तो भुजङ्गमः ॥
स्त्रीशूद्राभ्यां न भाषेत रात्रौ जपपरो न च ।
न जले सन्ध्याकाले च न प्रदोषे न चातुरः ॥

वैशम्पायनः—यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं सर्वं तन्निष्फलं भवेत् ॥

रुद्रयामले—विश्वासास्तिक्यकरुणा-श्रद्धानियमनिश्चयैः ।
सन्तोषैः शुद्धकर्मादिगुणैर्युक्तो जपेत् प्रिये ॥
अत्याहारः प्रयासश्च प्रजल्पो नियमाग्रहः ।
जनसङ्गोऽथ लौल्यं च षड्भिर्मन्त्रो न सिध्यति ॥

कुलार्णवे—मानसः सिद्धिकामानां पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैव प्रशस्तो जप ईरितः ॥
अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि ।
मन्त्रैकशरणो विद्वान् मनसैव सदाऽभ्यसेत् ।
न दोषो मानसे जाप्ये सर्वदेशेऽपि सर्वदा ॥

उत्तरतन्त्रे—जपादौ पूजयेन् मालां तोयैरभ्युक्ष्य यत्नतः ।
विधाय मण्डलस्थां तां सव्यहस्तगतां च वा ॥
इष्टमन्त्रेण मालायाः प्रोक्षणं परिकीर्त्तितम् ।
ॐ माले माले महामाये सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥
पूजयित्वा ततो मालां गृह्णीयाद् दक्षिणे करे ।
जपं समाचरेत् पश्चात् पूर्ववद् ध्यानमास्थितः ॥
चिन्तयेच्च गुरुं मूर्ध्नि यथा वर्णादिकं भवेत् ।
मन्त्रं ध्यायेत् कण्ठमध्ये पीतवर्णं हिरण्मयम् ॥
महामायां च हृदये स्वात्मानं गुरुपादयोः ।
आज्ञाचक्रे ततः पश्चाद् गुरुमन्त्रस्य चात्मनः ॥
देव्याश्चाप्येकतां नीत्वा सुषुम्णावर्त्मना ततः ।
तत्त्वस्वरूपमेकं तद् यच्चक्रं प्रतिलङ्घयेत् ॥
षट्चक्रे तु महामायां क्षणं ध्यात्वा प्रयत्नतः ।
लम्बयेन् मूलमन्त्रेण चादिषोड़शचक्रकम् ॥
आदिषोड़शचक्र(मध्य)स्थां साधकानन्ददायिनीम् ।
चिन्तयेत् साधको देवीं जपकर्म समाचरेत् ॥

षोड़शचक्रमुक्तं तत्रैव—

तिसृणामपि नाड़ीनां हृदये चैकता भवेत् ।
तत्स्थानं षोड़शारं स्यात् सप्ताङ्गुलप्रमाणतः ॥
तत् पीतमुक्तं योगज्ञैरादिषोड़शचक्रकमिति ।

तथा—मालां सहृदयासन्नां धृत्वा दक्षिणपाणिना । जपेदिति शेषः ।

शैवागमे—तर्जन्या न स्पृशेत् सूत्रं कम्पयेन्न विधूनयेत् ।
न स्पृशेद् वामहस्तेन करभ्रष्टाञ्च कारयेत् ।
अक्षाणां चालनेऽङ्गुष्ठेनाऽन्यमक्षं न संस्पृशेत् ।
जपकाले सदा विद्वान् मेरुं नैव विलङ्घयेत् ॥
परिवर्त्तनकाले च संघट्टं नैव कारयेत् ॥
कलिः खटखटाशब्दे दोलमाने चलन्मतिः ॥
चलिते चैव विक्षेपः स्फुटिते व्याधिसम्भवः ।
हस्तच्युते महाविघ्नः सूत्रछेदे विनश्यति ॥

तथा—करच्युते च जृम्भायामेकमावर्त्तनं त्यजेत् ।
प्रमादात् तर्जनीस्पर्शो भवेदावर्त्तनं त्यजेत् ॥

आवर्त्तनं मन्त्रस्येत्याहुः । तथा—
जपे निषिद्धसंस्पर्शे क्षालयित्वा पुनर्जपेत् ।

उत्तरतन्त्रे—मध्यमायां मध्यभागं वर्जयित्वा तु तर्जनीम् ।
अनामिकाकनिष्ठाभ्यां युक्ताभ्यां नम्रभावतः ॥
स्थापयित्वा तत्र मालामङ्गुष्ठाग्रेण तद्गतम् ।
प्रत्येकं बीजमाधाय अङ्कादूर्ध्वेन भैरव ॥
प्रतिवारं पठेन् मन्त्री शनैरोष्ठौ च चालयेत् ।

महाकपिलपञ्चरात्रे—
एकचित्तः प्रसन्नात्मा ह्यक्षसूत्रकरः शुचिः ।
भुग्नग्रीवोन्नतः शान्तः कण्डून्मीलनवर्जितः ॥
सविसर्गं समात्रं च सबिन्दुं साक्षरं स्फुटम् ।
न द्रुतं वापि विश्रान्तं क्रमान् मन्त्रं जपेत् सुधीः ॥

अत्र मन्त्रध्यानं प्रकारान्तरेण । तदुक्तं नित्यजपप्रकरण एव । अन्ये च जपविधा जपभेदास्तत्समर्पणप्रकाराश्च तत्रैवोक्ता इति नेह वितन्यते । वायवीयसंहितायाम्—देवतागुरुमन्त्राणामैक्यं सम्भावयन् धिया ।
जपेदेकमनाः प्रातःकालान् मध्यन्दिनावधि ॥
यत्संख्यया समारब्धं तत् कर्त्तव्यमहर्निशम् ।
यदि न्यूनाधिकं कुर्याद् व्रतभ्रष्टोऽभिजायते ॥

मुण्डमालायाम्—प्रातर्मध्यन्दिनं यावज् जपकालः प्रकीर्त्तितः ।
न न्यूनं नातिरिक्तं वा जपं कुर्याद् दिने दिने ॥
नैरन्तर्यावधि प्रोक्तो न दिनान्यतिलङ्घयेत् ।
दिवसातिक्रमे पुंसां सिद्धिरोधः प्रजायते ॥
मन्त्रजप्तान्नपानीय-स्नानाचमनभोजनम् ।

प्रातरित्यादि दिवातनपुरश्चरणविषयम् । पुरश्चरणचन्द्रिकायाम्—
ध्यात्वेष्टदेवतारूपमात्मानं प्रजपेन् मनुम् ।
संख्यापूर्त्तौ पुनः कुर्यादृष्यादिप्राणसंयमान् ॥

संख्यापूर्त्तौ दैनन्दिनसंख्यापूर्त्तौ । ऋष्यादीति । ऋष्यादिन्यासाभिप्रायम् ।
सिद्धसारस्वते—एवं जपं तथा कृत्वा दशांशमसितोत्पलैः ।

आज्याक्तैर्जुहुयान् मन्त्री तद्द् दशांशेन तर्पयेत् ॥
कालागुरुद्रवोपेतैर्विमलैर्गन्धवारिभिः ।

पुरश्चरणचन्द्रिकायाम्—

ततो जपदशांशेन होमं कुर्याद्द् दिने दिने ।
अथवा लक्षसंख्यायां पूर्णायां होममाचरेत् ॥
किं वा यस्य जपो यावांस्तत्पूर्त्तौ होममाचरेत् ।

लक्षपूर्त्ताविति पृथगुपादानं यत्र बहुलक्षात्मकपुरश्चरणं तत्परम् ।

सिद्धसारस्वते—एवं जपं तथा कृत्वा दशांशमसितोत्पलैः ।
अर्कोडैर्जुहुयान् मन्त्री(?) तद्दशांशेन तर्पयेत् ।

मत्स्यसूक्ते—होमं कुर्याद्द् दशांशेन विल्वपत्रैश्च साधकः ।

होमार्थमग्निसंस्कारश्च दीक्षातरङ्गे द्रष्टव्यः । सारसंग्रहे—

ततो होमदशांशेन जले सम्पूज्य देवताम् ।
तर्पयामीति मन्त्रान्ते प्रोक्त्वाऽग्निर्मूर्ध्नि तर्पयेत् ॥

ततो मार्जनं कुर्यात् । तथाहि वैशम्पायनः—

तर्पणस्य दशांशेन नमोऽन्तं मन्त्रमुच्चरन् ।
अभिषिञ्चेत् स्वमूर्धानं जलैः कुम्भाख्यमुद्रया ॥

अत्र शीर्षे अमुकमभिषिञ्चामीति योजयन्ति । कुम्भमुद्रा नित्यस्नानप्रकरण एवोक्ता । वीरचूडामणौ तु—

तर्पणान्ते महामन्त्री अभिषेकं तु कारयेत् ।
गोमयेनोपलिप्तायां भूमौ पद्मदलं लिखेत् ॥
कलशं स्थापयेत् तत्र कलां चैव प्रपूजयेत् ।
गन्धदूर्वाङ्कुरैर्वापि अशोकैश्चूतपल्लवैः ॥
सम्पूज्य गन्धपुष्पाद्यैरुपचारैः प्रपूजयेत् ।
मातृकामन्त्रमुच्चार्य प्रत्येकं मन्त्रमुच्चरेत् ॥
अभिषिञ्चामीति पदं शिरसि चाभिषेचयेत् ।

ततो मार्जनदशांशेन पूर्वोक्तद्रव्यैः स्वेष्टदेवताभक्तान् कौलिकान् भोजयेत् ।

तन्त्रे—होमकर्माद्यशक्तानां विप्राणां द्विगुणो जपः ।
इतरेषां तु वर्णानां त्रिचतुःपञ्चसंख्यया ॥

द्वैगुण्यादि होमाद्यपेक्षयैव । सनत्कुमारीये—

यद्द् यदङ्गं भवेद्द् भग्नं तत्संख्याद्विगुणो जपः ।

होमाभावे जपः कार्यो होमसंख्याचतुर्गुणः ॥
विप्राणां क्षत्रियाणां च रससंख्यागुणः स्मृतः ।
वैश्यानां वसुसंख्याकमेषां स्त्रीणामयं विधिः ॥
यं वर्णमाश्रितः शूद्रः स च तस्य विधिं चरेत् ।

अगस्त्यसंहितायाम्—

यदि होमे न शक्तः स्यात् पूजायां तर्पणेऽपि वा ।
तावत्संख्याजपेनैव ब्राह्मणाराधनेन च ॥
भवेदङ्गद्वयेनैव पुरश्चरणमत्र वै ।

स्त्रीशूद्रयोश्च होमस्थाने यथोक्त जप एव न तु शक्तावपि होमः ।

स्त्रीशूद्राभ्यां न होतव्यं मन्त्रोच्चारणपूर्वकमिति वचनात् ।

वाराहीतन्त्रे—द्विजानामधिकारोऽस्ति तान्त्रिके होमकर्मणि ।
यदि कामी भवेच्चैव शूद्रोऽपि होमकर्मणि ॥
वह्निजायां परित्यज्य स्वाहान्ते च नमो मतः । इत्युक्तम् ।

तन्त्रे—होमाभावे द्विजानां तु यः प्रोक्तः सूरिभिर्जपः ।
तत्सुभ्रुवां च तद्भक्तशूद्राणां च स एव हि ॥

सामान्यतस्तु शूद्राणां पञ्चगुणत्वमुक्तमेव । पुरश्चरणचन्द्रिकायाम्—

पुरश्चर्यां विधायेत्थं सम्यक् साधकसत्तमः ।
तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम् ॥
बहुभिर्वस्त्रभूषाभिः पूजयेद् गुरुमात्मनः ।
दीनानाथांश्च सन्तोष्य मन्त्राः सिध्यन्ति मन्त्रिणाम् ॥

होमाङ्गनिरूपणे—जपहोमार्चनैर्मन्त्रा नियतस्यास्य सिद्धिदाः ।
जपेन त्रिगुणेनापि मनवः सिद्धिदाः स्मृताः ॥

कुलमूलावतारे रुद्रयामले च—

भोजनेन विना देवि तर्पणेन विना पुनः ।
होमेनापि विना सिद्ध्यै मन्त्राणां त्रिगुणं जपेत् ॥

## अथ वीरपुरश्चरणे विशेषः

तत्र जपादौ कालो रात्रिरेव । माला च महाशङ्खनिर्मितेति प्रागेवोक्तम् । विशेषान्तरं तु कुलचूडामणौ—

पुरश्चरणकाले च परशक्तिं प्रपूजयेत् ।
दीक्षिते वस्त्रपुष्पाद्यैर्भोज्यैः पायससम्भवैः ॥

शून्यगेहे समानीय चार्घ्योदकविशोधितम् ।
अमृतीकरणं कृत्वा शक्तीरभिमुखं नयेत् ॥

समानीय शक्तिपूजोपयुक्तद्रव्यादि । अमृतीकरणं तेषामेव । तथा—

अर्घ्योदकेन सर्वास्ताः संप्रोक्ष्य विधिपूर्वकम् ।
अमृतीकरणं कुर्यात् सकलीकरणं ततः ॥

अत्रामृतीकरणादिकं शक्तीनाम् । पूज्यशक्तीराह—

अथाऽष्ट कन्यका वक्ष्ये देवीरूपधरा यतः ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च कुलभूषणा ।
वेश्या नापितकन्या च रजकी योगिनी तथा ॥
विशेषवैदग्ध्ययुताः सर्वा एव शुभा(कुला)ङ्गनाः ।
अष्टकन्यारूपभेदं विलोक्याऽमर्षचेष्टिताः ॥
ब्राह्मण्याद्यष्टशक्तीनां नामभिः कृतसंज्ञकाः ।
गौरकृष्णादिकं रूपं सौम्यत्वं च गुणादिकम् ॥

शक्तीनां नामानि वक्ष्यमाणस्तोत्र एव वक्तव्यानि । पूजाप्रकारमाह—

आसनं प्रथमं दत्त्वा स्वागतं च वदेत् पुनः ।
अर्घ्यं पाद्यं च पानीयं मधुपर्कं जलं ततः ॥
स्नापयेद् गन्धपुष्पाद्भिः केशसंस्कारमाचरेत् ।
धूपयित्वा ततः केशं कौशेयं विनिवेदयेत् ॥
ततः स्थानान्तरे पीठमास्तीर्य पादुकाद्वयम् ।
दत्त्वा तत्र समासीनां नानालङ्कारभूषणैः ॥
भूषयित्वाऽनुलेपं च गन्धमाल्यं निवेदयेत् ।
तां तां शक्तिं समावाह्य मूर्ध्नि तासां समानयेत् ॥
भोज्यमण्डपमध्ये तु स्वर्णपात्रे सुशोभने ।
चर्व्यं चोष्यं लेह्यपेयं भोज्यं चैव हि भक्षणम् ॥
अदीक्षिता यदा स्युस्तास्तदा मायां निवेदयेत् ।

तां तामिति । यस्या नाम्ना या सङ्केतिता तस्याः शिरसि तां शक्तिमावाह्य पूजयेदित्यर्थः । इदं चावाहनं मध्येऽप्युक्तमादावेवाऽर्हति सर्वत्र तथा दर्शनात् ।

तत्रासां सव्यकर्णेषु ततस्तोत्रं समाचरेत् ।

## शक्तिस्तोत्रम्

मातर्देवि नमस्तेऽस्तु ब्रह्मरूपधरेऽनघे ।

कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
माहेशि वरदे देवि परमानन्दरूपिणि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
कौमारि सर्वविघ्नेशि कुमारक्रीडनेऽवरे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
विष्णुरूपधरे देवि महागरुड़वाहिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
वाराहि वरदे देवि दंष्ट्रोद्धृतवसुन्धरे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
शक्ररूपधरे देवि शक्रादिसुरपूजिते ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
चामुण्डे मुण्डमालासृक्चर्चिते विघ्ननाशिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
महालक्ष्मि महामोह-क्षोभसन्तापनाशिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
पितृमातृमये देवि पितृमातृबहिष्कृते ।
एके बहुतरे देवि विश्वरूपे नमोऽस्तु ते ॥
एतत् स्तोत्रं पठेद् यस्तु कर्मारम्भे सुसंयतः ।
विदग्धां वा समालोक्य तस्य विघ्नो न जायते ॥
यदि क्रीड़ापरास्तास्तु भोजने तद् गृहाद् बहिः ।
स्थित्वा स्तोत्रं पठेत् तावद् यावत् तृप्तिः प्रजायते ॥
आचम्य मुखवासादि ताम्बूलं च निवेदयेत् ।
तथा—ततो दद्यात् पुनर्माल्यं चन्दनं पङ्क्तिं शुभम् ।
विसृज्य प्रदक्षिणीकृत्य वरं प्रार्थ्य सुखी भवेत् ॥
अन्या यदि न गच्छन्ति निजकन्या निजानुजा ।
अग्रजा मातुलानी वा जननी तत्सपत्निका ॥
वयस्या ज्ञातिजा वाऽपि सधवा वापि निष्पतिः ।
पूर्वाभावे परा पूज्या मद्वंशा योषितो यतः ॥
एका चेद् युवती तत्र पूजिता वा विलोकिता ।
सर्वा एव तदा देव्यः पूजिताः कुलभैरव ॥

एवं च पुरश्चरणस्यादौ मध्ये चान्ते च कर्त्तव्यम्। तथाहि तत्रैव—

आदावन्ते च मध्ये च लक्षपूर्त्तौ विशेषतः।
न पूजयति चेत् कान्तां तदा विघ्नैर्विलुप्यते॥

वीरचूडामणौ—क्षेत्रमादौ तु संशोध्य समसूत्रं मनोहरम्।
वेदिकां कारयेत् तत्र मध्ये मुण्डं विनिःक्षिपेत्॥
अलिना लेपनं कुर्यान् मध्ये चाष्टदलं लिखेत्।
पूर्वादिक्रमतो ज्ञेयं स्वरयुग्मं लिखेत् क्रमात्॥
वर्गाष्टकं लिखेत् तत्र मध्ये प्रासादमालिखेत्।
गगनं बिन्दुसंयुक्तं लाङ्गलीशं तथैव च॥
सविसर्गं वरारोहे केशरेषु लिखेत् ततः।
तत्राधारादि सम्पूज्य आसनं स्थापयेद् बुधः॥
उपविश्यासने वीरो यत्र कुत्राप्यचूड़के।
पार्ष्णिघातत्रयं कुर्याच्छोटिकात्रितयं ततः॥
दिग्बन्धमस्त्रमन्त्रेण पूर्वादिक्रमतो बुधः।
वकेशान्ते पिनाकीशं नादबिन्दुविभूषितम्॥
पशुपदं समुच्चार्य रमान्तेऽस्त्रमनूत्तमम्।
पाशुपताख्यविद्येयं सर्वविघ्नविनाशिनी॥

वकेशः शकारः। पिनाकीशो लकारः।

भूतशुद्धिं विधायादौ न्यासपूर्वं विधानतः।

तथा—गोमयेन विलिप्तायां भूमौ मण्डलमालिखेत्।
अलिना लेपनं कुर्याद् यक्षकर्दमकेन वा॥
सूत्रेण सूत्रितं पद्मं समसूत्रं मनोहरम्।
रक्तं श्वेतं हरिद्वर्णं कृष्णपत्रं सुकेशरम्॥
चतुरस्रं सुशोभाढ्यं तन्मध्ये योनियुग्मकम्।
त्रिकोणं चैव तन्मध्ये शून्ये शून्यं विचिन्तयेत्॥
योजयेद् दीपितां नारीं तत्र सम्पूजयेन् मनुम्।
तत्रैव देवीं संस्थाप्य ईषद्धासां सुलोचनाम्॥
षोड़शाब्देन युवतीमप्रसूतां तपस्विनीम्।
स्वाधीनां स्वच्छवस्त्रां च भीतिहीनाट्टहासिनीम्॥
तीव्रशुद्धिं दृढ़ाचारां मुक्तकेशीं दिगम्बराम्।

योगमुद्राधरां वापि योगाचारपरायणाम् ॥
ईदृशीं मन्त्रसंयुक्तां यागकाले प्रपूजयेत् ।
मातङ्गीं तन्तुकारीं च भवाब्धिभीतिनाशिनीम् ॥
खट्वाकारीं चर्मकारीं शिल्पिनीं नापिताङ्गनाम् ।
हट्टनारीं विशेषात् तु सुपुष्पकेण कोमलाम् ॥
सामान्यार्घ्यं विशेषार्घ्यं स्वपात्रं शक्तिपात्रकम् ।
तन्मध्ये निक्षिपेद् द्रव्यं सामरस्यामृतोद्भवम् ॥
तत्त्वपञ्चकमन्त्रेण एकैकं शोधयेद् बुधः ।
वह्निसूर्यकलाचन्द्र-कलान्ते हृदयं मनुम् ॥
त्रिकोणं विलिखेन् मध्ये त्रिकोणमकथादिकम् ।
खान्तं षान्तं तथा नान्तं यान्तं धान्तं सशत्रुकम् ॥
वामकर्णसमायुक्तं बिन्दुनादैरलङ्कृतम् ।
रत्नेश्वरीति विद्याख्यं पञ्चरत्नात्मकं मनुम् ॥
षडङ्गेनैव सम्पूज्य मूलमन्त्रेण मन्त्रयेत् ।

## अन्तर्यागः

अथान्तर्यजनं कुर्यान् महोग्रतारिणि स्वयम् ॥
कुण्डलिनीं समुत्थाप्य त्रिपदे त्रिपथगामिनि ।
प्राणं नाड्यां समापूर्य तत्र नादसमुद्भवम् ॥
नादबिन्दुसमुद्भूतं तत्र धूम्रं विचिन्तयेत् ।
कदम्बगोलकाकार-बिलान्तरे लयात्मकम् ॥
शिवशक्त्यात्मकं विश्वं सुधाधारास्वरूपकम् ।
तदानन्दसमुद्भूतं व्यक्ताव्यक्तं परं शिवम् ॥
तत्रोत्पन्नं महाबौद्धमुद्भूतं वा परायणम् ।
मुद्रां सन्दर्शयेत् तस्यां मृगीं हंसीं च वज्रिणीम् ॥
त्रिवारं तर्पयेद् देवि एकैकामिह मूर्धनि ।
त्रिकालं चिन्तयेन् मूर्ध्नि दक्षिणोत्तरतः क्रमात् ॥
व्योमकेशोर्ध्वकेशौ च नीलकण्ठं तथा पुनः ।
नादान्तं पूजयेत् पश्चाद् व्योमाम्बापूर्वमर्चयेत् ॥
ऊर्ध्वकेशं तथा नीलं विद्यौघांश्च प्रपूजयेत् ।

मत्स्यं कूर्मं वशिष्ठं च महेश्वरानन्दमेव च ॥
तारां भानुमतीं चापि जयां विद्यां महोदरीम् ।
अम्बान्तां पूजयेन् मध्ये भावादेकजटां शिवाम् ॥
इति सिद्धौघो विज्ञेयः सम्प्रदायगुरुक्रमः ।
सुखानन्दः परानन्दः पारिजातः कुलेश्वरः ॥
विरूपाक्षस्तथा भीमो भैरवो मानवौघतः ।
सुषुम्णां च परां बुद्धिं पश्यन्तीं चैव वैखरीम् ॥
पारिजातेश्वरीं वाचं ध्यायेन्नीलसरस्वतीम् ।
त्रितारामादौ संयोज्य नमोऽन्ते मन्त्रमुच्चरेत् ॥
शिरसि पङ्क्तिं सम्पूज्य मूलाधारे स्वनाम च ।
सन्तर्प्य कुण्डलीं शक्तिं पञ्चमुद्राविधानतः ॥
अलिना पिशितं मीनं मुद्रां मैथुनमेव च ।
मकारपञ्चमं यत्र तत्र देवी न संशयः ॥
न मद्यं माधवी मद्यं मद्यं शक्तिरसोद्भवम् ।
सुषुम्णा शङ्खिनी मत्स्यं मुद्रा उन्मन्यनुत्तमा ॥
सामरस्यामृतोल्लासं मैथुनं तत् सदाशिवम् ॥
दिव्यं वीरं पशुं चैव पानं त्रिविधमेव च ।
पशुपानरतो वीरः स भक्ष्यो योगिनीगणैः ॥
दिव्यपानरतो वीरो देवीसायुज्यमाप्नुयात् ।
देशिको वीरपानेन देवीलोकं स गच्छति ।
साधकः पशुपानेन रौरवं नरकं व्रजेत् ॥
प्राणापानौ समाहारौ प्रत्याहारं मनः स्थिरम् ।
भानुमण्डलं भेदित्वा इन्दुं मण्डलमध्यगम् ॥
सुषुम्णा वर्त्मना नित्यं सुधाधाराप्रवर्षिणी ।
दिव्यपानमिदं प्रोक्तं सर्वसिद्धिकरं परम् ॥
त्यक्तसर्वाशयमूलवासनामूलसञ्चयः ।
कौलिकाचारयोगेन पञ्चतत्त्वेन तर्पयेत् ॥
षट्चक्रक्रमभेदेन हुनेद् द्रव्यं समन्त्रकम् ।
ध्यानार्चनमनावस्था वीरपानमनुत्तमम् ॥
आसक्तलोलुपो दम्भो मन्त्रार्थे अप्रसक्तः ।

कामुकः कार्यनिर्देशो पशुपानं तदुच्यते ॥

सिद्धेश्वरतन्त्रेऽपि—मूलकन्देषु या शक्तिर्भुजङ्गाकाररूपिणी ।
तद्भ्रमावर्त्तसंजातेयं तस्मादित्युच्यते बुधैः ॥
चलन्ती व्यक्तमधुरा कूजन्ती सा तथोत्थिता ।
गच्छन्ती ब्रह्मरन्ध्रेण प्रविशन्ती स्वकेतनम् ॥
यातायातक्रमेणैव तत्र कुर्यान् मनोलयम् ।
तेन मन्त्रशिखा जाता सर्वसिद्धिप्रदीपिका ॥
तमोयुक्ते तथा गेहे न किञ्चित् प्रतिभाषते ।
शिखाहीने तथा मन्त्रे न सिद्धिः कल्पकोटिभिः ॥

अयमन्तर्यागो नित्यपूजायामप्यर्घ्यस्थापनात् प्राक् पशुनापि कार्यः ।

स्वतन्त्रतन्त्रे—रात्रौ मांसासवैर्देवीं पूजयित्वा विधानतः ।
ततो नग्नां स्त्रियं नग्नो रमन् क्लेदयुतोऽपि वा ।
जपेल्लक्षं ततो देवीं होमयेज्ज्वलितानले ॥
योनिकुण्डे स्थितं सर्पिर्मत्स्यं मांसं फलं तथा ।
दशांशं तर्पयेन् मद्यं मांसमिश्रैस्तु साधकः ॥
तर्पणस्य दशांशं तु अभिषिच्य जगन्मयीम् ।
दशांशं भोजयेत् साधु साधकं कालिकाप्रियम् ॥
मद्यं मांसं च मत्स्यं च चर्वणं च प्रदापयेत् ।
ततस्तु तोषयेद् भक्त्या गुरुं स्वर्णादिभिः प्रिये ॥

इदं च यद्यपि कालिकामन्त्रमधिकृत्योक्तं तथापि "यथा काली तथा तारे"-त्यादि वचनादत्राप्याचरन्ति । अत एव वीरचूडामणावपि—

तर्पणं विधिवत् कुर्याद्रक्तधारेण संख्यया ।
मध्वाज्यसुरया वापि पायसेनोदकेन तु ॥

अत्र वीरेण सुरादिना पशुना जलादिनेति विवेकः । अगस्त्यसंहितायाम्—

सम्यक् सिद्धैकमन्त्रस्य पञ्चाङ्गोपासनेन च ।
सर्वे मन्त्राः प्रसिध्यन्ति त्वत्प्रसादान् महेश्वरि ॥

तन्त्रशेखरे—एवं प्रकुर्वतस्तस्य प्रथमे वत्सरत्रये ।
भवन्ति बहवो विघ्नाः श्रद्धाभावादयोऽशुभाः ॥
अस्मिन्नर्थे भवेन् मन्त्री यदि नोद्विग्नमानसः ।
सेत्स्यतीति च विश्वस्तस्तदासौ सिद्धिभाग्भवेत् ॥

दीक्षापुरश्चरणाद्यारम्भदिने समाप्तिदिने वा रात्रौ स्वप्नं प्रार्थयेत्। तत्प्रकारस्तु दीक्षायाग एवोक्तः।

## अथ सिद्धिचिह्नानि

वक्रतुण्डकल्पे—चित्तप्रसादो मनसश्च तुष्टिरल्पाशिता स्वप्नपराङ्मुखत्वम्।
स्वप्नेषु यानाद्युपलम्भनं तु सिद्धस्य चिह्नानि भवन्ति सद्यः॥

भैरवीतन्त्रे—ज्योतिः पश्यति सर्वत्र शरीरं वा प्रकाशयुक्।
निजं शरीरमथवा देवतामयमेव हि॥

नारदपञ्चरात्रे—मन्त्राराधनशक्तस्य प्रथमे वत्सरत्रये।
जायन्ते बहवो विघ्ना नियमस्थस्य नारद॥
नोद्वेगं साधको याति कर्मणा मनसा यदि।
तृतीयवत्सरादूर्ध्वं राजानश्च महीभृतः॥
प्रार्थयन्तेऽनुरोधेन गर्विता अपि मानिनः।
प्रसादः क्रियतां नाथ ममोद्धारणकारणम्॥
प्रज्वलन्तं च पश्यन्ति तेजसा विभवेन च।
अतस्ते मुनिशार्दूल निष्ठुरं वक्तुमक्षमाः॥
नवमाद् वत्सरादूर्ध्वं स्वयं सिध्यति मन्त्रराट्।
नानाश्चर्याणि हृदये मन्त्रसिद्धिमयानि वै॥
अत्यानन्दप्रदान्याशु प्रत्यक्षेण बहिस्तथा।
जड़धीस्तु क्षणं विप्र क्षणमस्ति प्रहर्षितः॥
क्षणं दुन्दुभिनिर्घोषं शृणोत्यप्यन्तरिक्षगम्।
क्षणं च मधुरं वाद्यं नानागीतसमन्वितम्॥
आजिघ्रति क्षणं गन्धान् कर्पूरमृगनाभिजान्।
उत्पतन्तं क्षणं वापि पश्यत्यात्मानमात्मना॥
चन्द्रार्ककिरणाकीर्णं क्षणमालोकयन्नभः।
गजगोवृषनादांश्च शृणुयाच्च क्षणं द्विजः॥
निर्भराम्बुदसंक्षोभं क्षणमाकर्षयत्यपि।
तारकाणि विचित्राणि योगिनो नभसि स्थितान्॥
पश्यत्युद्ग्राहयन्तं च क्षणं मन्त्रवतां सदा।
क्षणं किलिकिलारावं हंसबर्हिरवं तथा॥
क्षणं मेघोदयं पश्येत् क्षणं रात्रिन्दिने सति।

रात्रौ च दिवसालोकं ससूर्यं क्षणमीक्षते ॥
बलेन परिपूर्णश्च तेजसा भास्करोपमः ।
पूर्णेन्दुसदृशः कान्त्या गमने विहगोपमः ॥
शमेन युक्तः प्रौढेन गाम्भीर्येण सुखेन च ।
स्वल्पाशनेनाकृशता बहुनापि न खिद्यते ॥
विण्मूत्रयोरल्पता हि भवेन्निद्राजयस्तथा ।
जपध्यानगतो मन्त्री न खेदमधिगच्छति ॥
विना भोजनपानाभ्यां पक्षमासादिकं मुने ।
इत्येवमादिभिश्चिह्नैर्महाविस्मयकारिभिः ॥
प्रवृत्तैः सम्प्रबोद्धव्यं प्रसन्नो मन्त्रराडिति ।

बौधायनः—सिद्धेस्तु त्रीणि चिह्नानि दाता भोक्ता अयाचकः ।

प्रपञ्चसारे—ततोऽस्य प्रत्ययास्त्वेवं जायन्ते जपतो मनुम् ।
अधिष्ठितं निश्चदीपं निस्तमिश्रं गृहं भवेत् ॥
अर्काभस्तेजसाऽसौ भवति नलिनजा सन्ततं किङ्करी स्या-
द्रोगा नश्यन्ति दृष्ट्या द्रुतमथ धनधान्याकुलस्तत्समीपम् ।
देवा नित्यं नमोऽस्मै विदधति फणिनो नैव दंशन्ति पुत्रान्
पौत्रान् मित्राणि वृद्धांस्तनुविपदि परं धाम विष्णोः प्रयाति ॥

फेत्कारिणीतन्त्रे—कर्मणा प्रबलेनैव प्रतिबन्धाविरोधिना ।
यदि सिद्धिं न लभते द्विस्त्रिर्वा पुनराचरेत् ॥ इति ।

## पुरश्चरणान्तरम्

पूर्वोक्तपुरश्चरणाशक्तं प्रति पुरश्चरणान्तरमप्युक्तम् । मुण्डमालायाम्—
कृष्णाष्टमीं समारभ्य यावत् कृष्णाष्टमी भवेत् ।
सहस्रसंख्ये जप्ते तु पुरश्चरणमिष्यते ॥

चन्द्रपीठे—महालक्ष्मीं समारभ्य अमहानवमीश्वरि ।
कृष्णाष्टम्या आनवमी मधौ शाक्ते मनौ स्मृतम् ॥
ऊर्जे तपसि राधे वा शुक्लपक्षस्तु वैष्णवे ।
एकादश्यन्त ऐशे तु भूतान्तः फाल्गुने स्मृतः ॥
भाद्रेऽपि वैघ्नराजे तु माघभाद्रौ स्ववासरात् ।
अन्येष्वपि च मन्त्रेषु पूर्वोक्तं नवरात्रकम् ॥
जपो मातृकया प्रातःकालान् मध्यन्दिनावधि

रात्रौ याममितः कार्यः पयोमूलफलाहुतिः ॥
चतुर्थयामे कर्त्तव्या मालामन्त्रे दशांशतः ।
विंशांशाद् वा दशांशाद् वा अन्येष्वपि हुतं मतम् ॥
दक्षिणा च यथोक्ताऽत्र वित्तशाठ्यं न कारयेत् ।
एवं मन्त्रः प्रयोगार्हो भवत्येव न संशयः ॥

मुण्डमालायाम्—कृष्णां चतुर्दशीं प्राप्य तपस्यन्तं महोत्सवे ।
अष्टमी-नवमी-रात्रौ पूजां कुर्याद् विशेषतः ॥
दशम्यां पारणं कुर्यान् मत्स्यमांसादिभिर्युतम् ।
षट्सहस्रं जपेन्नित्यं भक्तिभावपरायणः ॥

तथा—अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
चतुर्दशीं समारभ्य यावदन्या चतुर्दशी ॥
तावज् जप्ते महेशानि पुरश्चरणमिष्यते ।
केवलं जपमात्रेण मन्त्राः सिद्धा भवन्ति हि ॥
बलिहोमादिदानेन विशेषात् पीठपूजने ।
योनिपीठं महापीठं कामरूपं तथा परम् ॥
तयोरेकतमं पूज्यं रुद्रदेह इवाऽपरः ।

कालीतन्त्रे—अथवाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
कुजे वा शनिवारे वा नरमुण्डं समाहृतम् ॥
पञ्चगव्येन मिलितं चन्दनाद्यैर्विशेषतः ।
निःक्षिप्य भूमौ हस्तार्धमानतः काननान्तरे ॥
तत्र तद् दिवसे रात्रौ सहस्रं यदि साधकः ।
एकाकी प्रजपेन् मन्त्रं स भवेत् कल्पपादपः ॥

तत्रैव—अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शवमानीय तद्वारे तेनैव परिखन्यते ॥
तद्दिनान्तद्दिनं यावत् तावदष्टोत्तरं शतम् ।
स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा ॥

तद्वारे शनिमङ्गलवारे । तेनैव प्रकारेण हस्तार्द्धमानत इति यावत् । प्रत्यहमष्टोत्तरशतं जपेदित्यनुषङ्गः । तत्रैव—

अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ॥

सूर्योदयात् समारभ्य यावत् सूर्योदयान्तरम् ।
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत् ॥

अत्र होमादिकमपि कर्त्तव्यं पुरश्चरणत्वश्रुतेः ।

कालीतन्त्रे—अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
चन्द्रसूर्यग्रहे चैव ग्रासावधि विमुक्तितः ॥
यावत्संख्यं मनुं जप्त्वा तावद्धोमादिकं चरेत् ।

सनत्कुमारसंहितायाम्—
अथवाऽन्यप्रकारेण पौरश्चरणिको विधिः ।
चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः ॥
संस्पर्शादि-विमोक्षान्तं जपेन् मन्त्रमनन्यधीः ।
दृष्ट्वा स्नात्वा च सङ्कल्प्य विमोक्षान्तं जपं चरेत् ॥
तावद्धोमादिकं कुर्याद् ग्रहणान्ते शुचिः पुमान् ।
एवं जपान् मन्त्रसिद्धिर्भवत्येव न संशयः ॥

तावदिति यावान् जपो जात इत्यर्थः। इदं च गोपालविषयम्। वचनस्य सनत्कुमारीयत्वादिति वदन्ति। पुमानित्यनेन स्त्रीणां होमनिषेधोऽभ्यनुज्ञातः।

तन्त्रान्तरे—ग्रहणे चन्द्रसूर्यस्य शुचिः पूर्वमुपोषितः ।
नद्यां समुद्रगामिन्यां नाभिमात्रे जले स्थितः ॥
यद्वा शुद्धोदके स्नात्वा शुचौ देशे समाहितः ।
स्पर्शाद् विमुक्तिपर्यन्तं जपं कुर्यादनन्यधीः ॥
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् ।
तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम् ॥
ततो मन्त्रस्य सिद्धयर्थं गुरुं सम्पूज्य तोषयेत् ।
ततः प्रयोगान् कुर्वीत मन्त्रवित् कल्पनोदितान् ॥

चन्द्रपीठ-मन्त्रदेवप्रकाशिका-रत्नावल्यादौ—
उपवासत्रयं कृत्वा एवं वा शक्त्यपेक्षया ।
श्राद्धादि चातिसंक्षेपाद् ग्रहणे स्पर्शमात्रतः ॥
समुद्रगायां सरिति कण्ठमात्रे जले स्थितः ।
जपं कुर्यादुद्ग्रहान्तं होमाद्यं तद्दशांशतः ॥
सम्पूर्णां दक्षिणां दत्त्वा मन्त्रसिद्धिमवाप्नुयात् ।
ततः प्रयोगान् कुर्वीत मन्त्रवित् कल्पनोदितान् ॥

अत्र स्पर्शपदं स्पर्शज्ञानपरमन्यथा तत्समयस्य सूक्ष्मत्वात् अननुष्ठानलक्षण-मप्रामाण्यं स्यात् ।

चक्षुषा दर्शनं राहोर्यत् तद् ग्रहणमुच्यते ।
तत्र कर्माणि कुर्वीत गणनामात्रतो नहि ॥

इति स्मार्त्तवचनात् । तथा—

सूर्यग्रहणकालादिर्नान्यः कालः प्रशस्यते ।
यस्तु श्राद्धानुरोधेन ग्रहणे चन्द्रसूर्ययोः ॥
न करोति पुरश्चर्यां नरके स विपच्यते ॥

इति वचनान् मन्त्रिणां तु ग्रहणपुरश्चरणमावश्यकम् ।

एवं च—सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति ॥

इति श्राद्धाकरणे स्मार्त्तनिन्दार्थवादो दीक्षितान्यपरः । केचित् तु ब्राह्मणादि-द्वारा श्राद्धमामनन्ति । अपरे तु—

अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं सग्रहे च शूद्रः कुर्यात् स एव हि ॥

इति वचनात् पित्रुद्देशेन किञ्चिद्धिरण्यं दत्त्वा पुरश्चरणमिच्छन्ति ।

अथवाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
शरत्काले चतुर्थ्यादि-नवम्यन्तं विशेषतः ॥
भक्तितः पूजयित्वा तु रात्रौ तावत् सहस्रकम् ।
जपेदेकस्तु विजने केवलं तिमिरालये ॥
अष्टम्यादिनवम्यन्त-मुपवासपरो भवेत् ।
स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा ॥

शरत्काले देवीपक्षे । तावत् सहस्रं षट्सहस्रम् । चतुर्थीमारभ्य नवमीपर्यन्तं प्रतिरजनि षट्सहस्रं जपेदष्टमीनवम्योरुपवासं कुर्यादित्यर्थः । मुण्डमालायाम्—

अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शरत्काले महापूजा क्रियते या च वार्षिकी ॥
तस्मिन् पक्षे विशेषेण पुरश्चरणतत्परः ।
अष्टम्यादिनवम्यन्त-मुपवासपरो भवेत् ॥
पूजयेद् भक्तितो रात्रौ षट्सहस्रं जपं चरेत् ।

अत्र प्रतिपदादि-नवम्यन्तं जपः प्रतिभाति ।

कालीतन्त्रे—अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।

अष्टमीसन्धिवेलाया-मष्टोत्तरलतागृहम् ॥
प्रविश्य मन्त्री विधिवत् ताः समभ्यर्च्य यत्नतः ।
पूर्वोक्तकल्पमासाद्य पूजादिकं समाचरेत् ॥
केवलं कामदेवोऽसौ जपेदष्टोत्तरं शतम् ।
तासां तु पत्रमूले च जप्त्वा संगृह्य मस्तके ॥
महासिद्धिर्भवेत् सद्यो लतादर्शनपूजनात् ।

अष्टमीसन्धिवेलायाम् अष्टमीनवम्योः सन्धिवेलायाम् । अष्टोत्तरलतागृहं यथासम्भवमष्टपर्यन्तानां शक्तीनां गृहं मदनमन्दिरम् । पूर्वोक्तकल्पं दूतीयागाख्यम् । पत्रमूले वराङ्गे जप्त्वा बीजं निरस्य तदेव बीजं मस्तके संगृह्य तिलकं कृत्वेत्यर्थः । इदं तु वीरपरम् । एवमग्रेऽपि बोद्धव्यम् । तथा—

अथवाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
आकृष्टायाः कुलागारे लिखित्वा मन्त्रमेव च ॥
सम्पूज्य तत्र संस्कारं कृत्वा तस्यै निवेद्य च ।
किञ्चिज् जप्त्वा मनुं नीत्वा देवताभावतत्परः ॥
तां विसृज्य नमस्कृत्य स्वयं सुप्त्वा सुसंयतः ।
प्रातः स्त्रीभ्यो बलिं दत्त्वा मन्त्रसिद्धिर्न संशयः ॥

संस्कारं पञ्चमयागोक्तम् । अत्र पूजनमात्रं न तु संभोगोऽपीत्यवधेयम् ।

गुरुमानीय संस्थाप्य देववत् पूजनं विभोः ।
वस्त्रालङ्कारहेमाद्यैः सन्तोष्य गुरुमेव च ॥
तत्सुतं तत्सुतां चैव तत्पत्नीं चैव पूज्य च ।
पूजयित्वा मनुं जप्त्वा स्वयं सिद्धीश्वरो भवेत् ॥

इति महामहोपाध्याय-ठक्कुर-श्रीनरसिंह-विरचिते ताराभक्ति-
सुधार्णवेऽष्टमस्तरङ्गः ॥ ८ ॥

## नवमस्तरङ्गः

### अथ वीरसाधनम्

योगिनीहृदये— देव्युवाच—

भगवन् सर्वधर्म(मन्त्र)ज्ञ सर्वशास्त्रविशारद ।
श्मशाने च पुरश्चर्या त्वया संसूचिता पुरा ॥
कथयस्व तदेदानीं यदि स्नेहोऽस्ति मां प्रति ।

ईश्वर उवाच—

यस्मिन् परिश्रमेणाऽपि नृणां सिद्धिः समीरिता ।
न जाता तत्र कर्त्तव्या साधकैर्वीरसाधना ॥
भयमुक्तेन शुचिना सर्वसिद्धिमभीप्सता ।
नानया दुर्लभं किञ्चित् साधकस्य समीहितम् ॥
गिरिजे तत् प्रयत्नेन मया चेयं प्रकाश्यते ।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ॥
कृष्णपक्षे विशेषेण साधयेदनया हितम् ।

वीरतन्त्रे—महावीरक्रमं देव सूचितं न प्रकाशितम् ।
कथयस्व महादेव सर्वसिद्धिप्रदं महत् ॥

भैरव उवाच—

सर्वसिद्धिप्रदं साक्षात् सर्वदेवनमस्कृतम् ।
सर्वपापहरं देवि सर्वरोगविनाशनम् ॥
ब्रह्मविष्णुशिवादीनां दिक्पालानां च भाविनि ।
भैरवाणां च सर्वेषां गन्धर्वाणां च योगिनाम् ॥
शश्वत्सिद्धिप्रदं देवि सर्वेषामालयं महत् ।
नान्यत् सिद्धिप्रदं देवि वीरसाधनवर्जितम् ॥
महाबलो महावीरो महासाहसिकः शुचिः ।
महास्वच्छो दयावांश्च सर्वभूतहिते रतः ॥
तेषां कृते महादेवि कथितं वीरसाधनम् ।

तथा—घटीबन्धनवस्त्रं वै मूलेन परिधाय च ।
तद्बाह्ये च पुनर्वस्त्रं मूलेनाऽङ्गविलेपनम् ॥
कृतोष्णीषश्च मूलेन सिन्दूरेणोर्ध्वपुण्ड्रकम् ।

इष्टदेवं गुरुं नत्वा यात्रा प्रहरमध्यतः ॥
कार्या च साधकैः सार्धं हृदि मन्त्रं परामृशन् ।
अक्षुब्धो भुक्तभोज्यस्तु यदि स्याद् वीरसाधकः ॥
दिव्यो वा न पशुस्तत्र भुक्त्वा साधनमाचरेत् ।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ॥
भौमवारे तमिस्रायां साधयेत् सिद्धिमुत्तमाम् ।
उपचारं समादाय कुलामृतरसं तथा ॥
सामिषान्नं गुडं छागं सुरा पिष्टकमेव च ।
नानाफलं च नैवेद्यं स्वस्वकल्पोक्तसाधनम् ॥
चितास्थाने समानीय सुहृद्भिः शस्त्रपाणिभिः ।
समानगुणसम्पन्नैः साधको गतभीः स्वयम् ॥
न निरीक्षेच्चतुर्दिक्षु देवताध्यानतत्परः ।
भीतश्चेत् साधकस्तत्र चतुर्दिक्षु च साधकः ॥
स्वगुरुं भ्रातृवर्गं वा ब्राह्मणान् वापि सुव्रतान् ।
सुहृदानपि रक्षार्थं कियद् दूरे निवेशयेत् ॥
नो चेत् केवलमेवाऽसौ भैरवः परिकीर्त्तितः ।
अक्षालितां चिताभूमिं गत्वा साधकसत्तमः ॥
प्रक्षालितां यदि प्रायः कारयेदस्थिसंचयम् ।

वीरतन्त्रे—अस्त्रान्तमूलमन्त्रेण प्रोक्षणं यागभूमिषु ॥
गुरुपादयुगं ध्यात्वा गणेशं वटुकं तथा ।
योगिनीं मातृकां चैव वामपादपुरःसरम् ॥
ये चात्र संस्थिता देवा राक्षसाश्च भयानकाः ।
पिशाचाः सिद्धयक्षाश्च गन्धर्वाः सरसां गणाः ॥
योगिन्यो मातरो भूताः सर्वाश्च खेचरस्त्रियः ।
सिद्धिदास्ता भवन्त्वत्र तथा च मम रक्षकाः ॥
प्रणम्य मनुनाऽनेन पुष्पाञ्जलित्रयं क्षिपेत् ।
श्मशानाधिपतिं पश्चाद् भैरवं कालभैरवम् ॥
महाकालं यजेद् यत्नात् पूर्वादिदिक्चतुष्टये ।
पाद्यादिभिश्च मन्त्रज्ञो बलिं पश्चान्निवेदयेत् ॥
शब्दबीजं ततः पश्चात् श्मशानाधिपतत्परम् ।

इममन्ते सामिषान्नं बलिं गृह्णपदं ततः ॥
गृह्ण-गृह्णापय-युगं विघ्ननिवारणं ततः ।
कुरु सिद्धिं मे समुक्त्वा * प्रयच्छ स्वाहयाऽन्वितम् ॥
ताराद्यमनुना देवि प्रथमो बलिरीरितः ।
मायान्ते भैरवात् पश्चाद् भयानकपदं ततः ॥
पूर्वे बलिं समुद्धृत्य दक्षिणे बलिमाहरेत् ।
हूमन्ते च महाकालात् पश्चात् पूर्ववदुद्धरेत् ॥
पश्चिमे कालदेवाय प्रणवाद्येन कल्पयेत् ।
शब्दान्ते कालशब्दान्ते भैरवेति पदं ततः ॥
श्मशानाधिप इत्येवं पूर्ववच्चोत्तरे हरेत् ।
चितामध्ये ततो दद्याद् बलित्रयमनुत्तमम् ॥
कालरात्रि महाकालि कालिके घोरनिःस्वने ।
गृहाणेमं बलिं मातर्देहि मे सिद्धिमुत्तमाम् ॥
हूं कालिकायै स्वाहेति बलिं दत्त्वा भूतनाथाय चार्पयेत् ।
शब्दान्ते भूतनाथान्ते श्मशानाधिप इत्यपि ॥
प्रणवाद्येन मन्त्रेण दापयेद् बलिमुत्तमम् ।
हूं सर्वगणनाथान्ते अधिपतिपदं तथा ॥
श्मशाने मस्तके दत्त्वा पूर्ववच्च समुद्धरेत् ।
ताराद्येन बलिं दत्त्वा पञ्चगव्येन सुन्दरि ॥
अस्थिसंप्रोक्षणं कृत्वा पीठमन्त्रं न्यसेत् पुनः ।
भूर्जे वा वटपत्रे वा तत्र पीठमनुं न्यसेत् ॥
तन्त्रान्तरे—ततश्चिता पश्चिमत एकीकृत्याऽस्थिसञ्चयम् ।
ॐ ह्रीं आधारशक्तये नम इत्यणुना पुनः ॥
पञ्चगव्येन संप्रोक्ष्य भूर्जे वा वटपत्रके ।
ह्सौरिति लिखेन् मन्त्रं स्थापयेत् तत्र तत् पुनः ॥
कम्बलाद्यासनं तत्र विन्यस्याधारशक्तये ।
नम इत्यणुना तत्र ह्रीमाद्यां च प्रपूजयेत् ॥
वीरतन्त्रे—पीठमास्तीर्य तस्मिन् वै बद्धवीरासनस्ततः ।

---

* तान्त्रिकप्रयोगोऽयम् ।

वीरार्दनेन देवेशि लोष्टान् दिक्षु विनिःक्षिपेत् ॥
कूर्चबीजद्वयं देवि मायायुग्मं ततः परम् ।
कालिके घोरदंष्ट्रे च प्रचण्डे चण्डनायिके ॥
दानवान् दारयेत्युक्त्वा हनेति द्वितयं ततः ।
परवीरं महावीरं छेदयद्वितयं ततः ॥
वर्माऽस्त्रान्तो द्विठान्तोऽयं वीरार्दनमनुर्मतः ।
अनेन मन्त्रितं लोष्टं दशदिक्षु विनिःक्षिपेत् ॥
तन्मध्ये भैरवो देवो न विघ्नैः परिभूयते ।
यदि प्रमादाद् देवेशि साधको भयविह्वलः ॥
तैस्तैः सर्वैः सुहृद्भिश्च रक्षितो नाऽभिभूयते ।
अर्केन्दुसितवाट्यालतूलैर्निर्मितवर्त्तिकाम् ॥
प्रदीपं तत्र संस्थाप्य अस्त्रं तत्र प्रपूजयेत् ।
हृ(ग)ते तस्मिन् महादीपे विघ्नैश्च परिभूयते ॥
तदधश्चास्त्रमन्त्रेण निखनेत् कुलदीपिकाम् ।
तत्तत्कल्पविधानेन भूतशुद्ध्यादिकं चरेत् ॥
षोढां वा तारकां वापि विन्यस्य पूजयेत् ततः ।

अत्रैव यामलादिः—ततः पञ्चोपचारेण पुरतो देवतां यजेत् ।
निमील्य चक्षुषी पश्चाद् देवं ध्यात्वा मनुं जपेत् ॥
एकाक्षरी यदि भवेद् दिक्सहस्रं ततो जपेत् ।
द्व्यक्षरे चाष्टसाहस्रं त्र्यक्षरे चायुतार्द्धकम् ॥
ततः परं तु मन्त्रज्ञो गजान्तकसहस्रकम् ।
निशार्धात् तु समारभ्य उदयान्तं समाचरेत् ॥

गजान्तकसहस्रकम् अष्टोत्तरसहस्रम् ।

यद्यसह्यं भयं कर्णनेत्रे वस्त्रेण बन्धयेत् ।
ततोऽर्धरात्रपर्यन्तं यदि किञ्चिन्न लक्ष्यते ॥
जयदुर्गाणुनाऽर्घ्यं च तेनैव सर्षपान् क्षिपेत् ।
ॐ तिलोऽसि सोमदैवत्यो गोसवस्तृप्तिकारकः ॥
पितॄणां स्वर्गदाता त्वं मर्त्यानां मम रक्षकः ।
भूतप्रेतपिशाचानां विघ्नेषु शान्तिकारकः ॥
इति क्षिप्त्वा तिलांस्तत्र चतुर्भागैः शिवादितः ।

ततः सप्तपदं गत्वा पुनस्तत्रैव संविशेत् ।
एवं तत्रापि सम्पूज्य पूजयेन् मनुमुत्तमम् ॥
निर्भयः प्रजपेत् तावद् यावत् सिद्धिः प्रजायते ।
भयं तु स्वप्नवज् ज्ञेयं परेहि शेषमाचरेत् ॥ इति ॥

वामकेश्वरतन्त्रे—जपान्ते च बलिं दद्याद् देवतायै यथाविधि ।
महिषं छागलं वापि गृहीत्वा वरमेव च ॥
गृहे गच्छेत् सुहृद्वर्गैः सार्धं संहृष्टमानसः ॥

इति चितासाधनविधिः

## अथ शवसाधनविधिः

भूतडामरे—यदुक्तं भावसर्वस्वे सर्वतन्त्रेषु गोपितम् ।
वीरसिद्धिविधानं हि देवदेवेन शम्भुना ॥
यस्य विज्ञानमात्रेण मन्दभाग्योऽपि सिध्यति ।

तथा—पुरश्चरणसम्पन्नो वीरसिद्धिं समाचरेत् ॥
पुत्रदाराधनस्नेह-लोभमोहविवर्जितः ।
मन्त्रं वा साधयिष्यामि देहं वा पातयाम्यहम् ।
प्रतिज्ञामीदृशीं कृत्वा बलिद्रव्याणि चिन्तयेत् ॥

वीरतन्त्रे—पूर्वोक्तमुपहारादि समादाय तु साधकः ।
साधयेत् स्वहितां सिद्धिं साधनस्थानमाश्रयेत् ॥
गुरुध्यानादिकं सर्वं पूर्वोक्तमाश्रयेत् सुधीः ।
वीरार्दनान्तके भूमौ माया मोहो न विद्यते ॥
ये चात्रेत्यादिमन्त्रेण भूमौ पुष्पाञ्जलित्रयम् ।
श्मशानाधिपतीनां तु पूर्ववद् बलिमाहरेत् ॥
अघोराख्येन मन्त्रेण बलिसाधनमाचरेत् ।
सुदर्शनेन वा रक्षामुभाभ्यां वा प्रकल्पयेत् ॥
माया स्फुरद्वयं भूयः प्रस्फुरद्वितयं पुनः ।
घोरघोरतरेत्यन्ते तन्न रूपपदं ततः ॥
चट युग्मान्तरान्ते च प्रचटद्वितयं ततः ।
हे युग्मं रम युग्मं च ततो बन्धयुगं ततः ॥
पातय-द्वितयं वर्म फडन्तः समुदाहृतः ।
एकपञ्चाशदर्णोऽयमघोरास्त्रमयो मनुः ॥

हालाहलं समुद्धृत्य सहस्रारस्वरूपकम् ।
वर्मास्त्रान्तं महामन्त्रं सुदर्शनस्य कीर्त्तितम् ॥
भूतशुद्धिं ततः कृत्वा न्यासजालं प्रविन्यसेत् ।
जयदुर्गाख्यमन्त्रेण सर्षपान् दिक्षु निःक्षिपेत् ॥

ॐ दुर्गे दुर्गे रक्षिणि स्वाहा इति जयदुर्गाख्यो मन्त्रः ।

तिलोऽसीति मन्त्रेण तिलानपि विनिःक्षिपेत् ।
यष्टिविद्धं शूलविद्धं खड्गविद्धं पयोमृतम् ॥
रज्जुबिद्धं सर्पदष्टं चाण्डालैर्वाभिभूतकम् ।
तरुणं सुन्दरं शूरं रणे नष्टं समुज्ज्वलम् ॥
पलायनविशून्यं च सम्मुखे रणविस्तमम् ।
स्वेच्छामृतं त्रिवर्षं च वृद्धां स्त्रीं च त्रिजं तथा ॥
अन्नाभावमृतं कुष्ठं सप्तरात्रोर्ध्वगं तथा ।
एवं चाष्टविधं त्यक्त्वा पूर्वोक्तान्यतमं शवम् ॥
गृहीत्वा मूलमन्त्रेण पूजास्थाने समानयेत् ।
चाण्डालाद्यभिभूतं वा शीघ्रं सिद्धिफलप्रदम् ॥
प्रणवाद्यस्त्रमन्त्रेण शवस्य प्रोक्षणं चरेत् ।
प्रणवं कूर्चबीजं च मृतकाय नमोऽस्तु फट् ॥
पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् स्पर्शपूर्वकम् ।
रे वीर परमानन्द शिवानन्द कुलेश्वर ॥
आनन्दभैरवाकार देवीपर्यङ्कशङ्कर ।
वीरोऽहं त्वां प्रयच्छामि उत्तिष्ठ चण्डिकार्चने ॥
प्रणम्यानेन मन्त्रेण क्षाल(स्थाप)येत् तदनन्तरम् ।
तारशब्दं मृतकाय नमोऽन्तो मन्त्र उच्यते ॥
शवस्नापनमन्त्रोऽयं सर्वतन्त्रेषु देशितः ।
धूपेन धूपितं कृत्वा गन्धादिना प्रलिप्य च ॥
रक्ताक्तो यदि देवेश भक्षयेत् कुलसाधकम् ।
गत्वा शवस्य सान्निध्यं धारयेत् कटिदेशतः ॥
यद्युपद्रावयेत् तस्य दद्याभिष्ठीवनं मुखे ।
पुनं प्रक्षालितं कृत्वा जपस्थानं समानयेत् ॥
कुशशय्यां परिस्तीर्य तत्र संस्थापयेच्छवम् ।

एलालवङ्गकर्पूर-जातीखदिरसार्द्रकैः ॥
ताम्बूलं तन्मुखे दत्त्वा शवं कुर्यादधोमुखम् ।
स्थापयित्वा तस्य पृष्ठे चन्दनेन विलेपयेत् ॥
बाहुमूलादिकट्यन्तं चतुरस्रं विभावयेत् ।
मध्ये पद्मं चतुर्द्वारं दलाष्टकसमन्वितम् ॥
ततश्चैणेयमजिनं कम्बलान्तरितं न्यसेत् ।
द्वादशाङ्गुलमानेन यज्ञकाष्ठानि दिक्षु च ॥
इमं बलिं गृह्ण-युगं गृह्णापय-युगं ततः ।
विघ्ननिवारणं कृत्वा सिद्धिं प्रयच्छ ठद्वयम् ॥
अनेन मनुना पूर्वं बलिं दद्याच्च सामिषम् ।
स्वस्वनामादिकं दत्त्वा पूर्ववद् बलिमाहरेत् ॥
सर्वेषां लोकपालानां ततः साधकसत्तमः ।
शवाधिष्ठानदेवेभ्यो बलिं दद्यात् सुरया सह ॥
चतुःषष्टियोगिनीभ्यो डाकिनीभ्यो बलिं दिशेत् ।
पूजाद्रव्यं सन्निधौ च दूरे चोत्तरसाधकम् ॥
संस्थाप्यासनमभ्यर्च्य स्वमन्त्रान्ते त्रपां ततः ।
फडित्यनेन मन्त्रेण तत्राश्वारोहणं विशेत् ॥
कुशान् पादतले दत्त्वा शवकेशान् प्रमार्ज्य च ।
दृढं निबध्य जुटिकां कृतसङ्कल्पसाधकः ॥
शवोपरि समारुह्य प्राणायामं विधाय च ।
वीरार्दनेन मन्त्रेण दिक्षु लोष्टान् समाक्षिपेत् ॥
ततो देवं च सम्पूज्य उपचारैः सुविस्तरैः ।
शवास्ये विधिवद् देवि देवताप्यायनं चरेत् ॥
उत्थाय सम्मुखे स्थित्वा पठेद् भक्तिपरायणः ।
वशो मे भव देवेश ममामुकपदं ततः ॥
सिद्धिं देहि महाभाग भूताश्रयपदाम्बरः ।
मूलं समुच्चरन् मन्त्री शवपादद्वयं ततः ॥
पट्टसूत्रेण बध्नीयात् तदोत्थातुं न शक्यते ।
ॐ भीरुभीम भयाभाव भव्यलोचनभावुक ॥
त्राहि मां देवदेवेश शवानामधिपाधिप ।

इति पादतले तस्य त्रिकोणं चक्रमालिखेत् ॥
तदोत्थातुं न शक्नोति शवोऽपि निश्चलो भवेत् ।
उपविश्य पुनस्तस्य बाहू निःसार्य पार्श्वयोः ॥
हस्तयोः कुशमास्तीर्य पादौ तत्र निधापयेत् ।
औष्ठो तु सम्पुटौ कृत्वा स्थिरचित्तः स्थिरेन्द्रियः ॥
सदा देवीं हृदि ध्यात्वा मौनी तु जपमाचरेत् ।
श्मशाने प्रोक्तसंख्याभिर्जपं कुर्यात् कुलेश्वरि ॥
अथवारम्भकालात् तु यावन्नोदयते रविः ।
यद्यर्धरात्रपर्यन्तं जप्ते किञ्चिन्न लक्ष्यते ॥
तदा पूर्ववदर्घ्यादि-समयादागतानि च ।
कृत्वोपविश्य तत्रैव जपं कुर्यादनन्यधीः ॥
चलासनाद् भयं नास्ति भये जाते वदेत् ततः ।
यत् प्रार्थयसि देवेशि दातव्यं कुञ्जरादिकम् ॥
दिनान्तरे प्रदास्यामि स्वनाम कथयस्व मे ।
इत्युक्त्वा संस्कृतेनैव निर्भयस्तु पुनर्जपेत् ॥
पुनश्चेन् मधुरं वक्ति वक्तव्यं मधुरं ततः ।
तदा सत्यं च संस्कार्यं नरं च प्रार्थयेत् ततः ॥
यदि सत्यं न कुर्याच्च वरं वा न प्रयच्छति ।
तदा पुनर्जपेद्धीमानेकाग्रं मानसं भजन् ॥
नररूपो नात्र देवो यो नरो वोपसर्पति ।
यत्नतस्तेन बोद्धव्यं नरो वा देवयोनयः ॥
माता वा तत्सुता वापि मातुलानी तथापि वा ।
आगत्य विघ्नं चरते माययाच्छाद्य विग्रहम् ॥
उत्तिष्ठ वत्स ते कार्यं सर्वं जातं न संशयः ।
प्रभातसमयो जातस्तत्पिता क्रोशते गृहे ॥
प्रायेण सकला लोका राजानो दण्डधारिणः ।
कदाचित् केनाप्याविष्टस्तदा किं ते करिष्यति ॥
इत्यादि-विविधैर्वाक्यैर्न जपं संपरित्यजेत् ।
मृताः पितृगणास्तत्र दूरदेशनिवासिनः ॥
बान्धवास्तत्र आयान्ति देवरूपधरास्ततः ।

स्त्रीपुत्रसेवकादींश्च गृहीत्वा नीयते परैः ॥
रुदन्ति पुत्रकाः सर्वे भ्रातरोऽनुजशिष्यकाः ।
निजकान्ताङ्गसंस्पर्शं वस्त्राद्याभरणादिकम् ॥
गृहीत्वा नीयते पत्नी पालकैस्तद्भयं त्यजेत् ।
यदि न क्षुभ्यते तत्र तदा किं वा न लभ्यते ॥
स्त्रीरूपधारिणी देवी द्विजरूपधरः पुमान् ।
वरं गृह्णे ति शब्दं वै त्रिवारान्ते वरं लभेत् ॥
साधुनाऽसाधुना वापि योषिच्चेद् वरदायिनी ।
तदा वीरपतेस्तस्य किन्न सिध्यति भूतले ॥
निष्पापः पुरुषश्चैव कुले चैव सुसंस्कृतः ।
असंस्कृतवरा देवी पापयुक्ता न संशयः ॥
सम्मुखेऽसम्मुखे वापि संस्कृतं वक्ति चापरम् ।
सैव देवी न सन्देहः स देवो भैरवः स्वयम् ॥
न चेदेवं भवेच्चैव मायापुटितविग्रहात् ।
वरयेन्न वरं तत्र न वरं प्रवदेत् क्वचित् ॥
स चेत् संस्कृतमाख्यातं वक्ति वक्तव्यमीदृशम् ।
न चेत् स्वयं कौलिकोक्त्या वरं ग्राह्यं निराकुलम् ॥
अथवा उत्कटं किञ्चिल्लभेताप्यात्मनो हितम् ।
शब्दो वा जायते सम्यगमृतं वापि लभ्यते ॥
सर्वं विचार्य गृहीतव्यमेवं दिक् प्रकीर्त्तिता ।
देव्याकृतयो बहुधा नराद्याकृतयः क्वचित् ॥
अवश्यं तत्र भेतव्यं न तत्र प्रत्ययः क्वचित् ।
भैरवा वटुकाश्चैव कुलशास्त्रपरायणाः ॥
एतच्छास्त्रप्रसङ्गेन कृत्याः कुटिलविग्रहाः ।
पुत्रो भूत्वा वरयेत् तं नारी भूत्वा विमोहयेत् ॥
तस्मात् तत्त्वपरो वीर आचारे यत्नमाचरेत् ॥
सत्ये कृते वरं लब्ध्वा संत्यजेच्च जपादिकम् ।
जातं फलमिति ज्ञात्वा जुटिकां मोचयेत् ततः ॥
संप्रक्षाल्य च संस्थाप्य जुटिकां मोचयेत् पदे ।
पद्मचक्रं मार्जयित्वा पूजाद्रव्यं जले क्षिपेत् ॥

शवं जलेऽथ गर्त्ते वा निःक्षिप्य स्नानमाचरेत् ।
ततस्तु स्वगृहे गत्वा बलिं दत्त्वा दिनान्तरे ॥
अग्निमरात्री तु येषां देवानां यजमानोऽहम् ।
ते गृह्णन्तु मया दत्तं बलिमिमं च सामिषम् ॥
अथ यैर्याचितश्छाश्व-नर-कुञ्जर-शूकरान् ।
दत्त्वा पिष्टमयानेव कर्त्तव्यं समुपोषणम् ॥

तन्त्रान्तरेऽपि—यवक्षोदमयं वापि शालिक्षोदमयं च वा ।
चन्द्रहासेन विधिवत् तत्तन्मन्त्रेण पातयेत् ॥
परेऽह्नि नित्यमाचर्य पञ्चगव्यं पिबेत् ततः ।
ब्राह्मणान् भोजयेत् तत्र पञ्चविंशतिसंख्यकान् ॥
पञ्च पञ्च गृहीतान् वा क्रमाच्चैव दशावधि ।
ततः स्नात्वा च भुक्त्वा च निवसेदुत्तमस्थले ॥
यदि न स्याद् विप्रभोज्यं तदा निर्धनतां व्रजेत् ।
तेन चेन्निर्धनत्वं स्यात् तदा देवः प्रकुप्यति ॥
त्रिरात्रं वाथ षड्रात्रं गोपयेत् कुलसाधनम् ।
शय्यायां यदि गच्छेद् वा तदा व्याधिः प्रजायते ॥
गीतं श्रुत्वा च बधिरो निश्चक्षुर्नृत्यदर्शनात् ।
यदि वक्ति दिने वाक्यं तदा स मूकतां व्रजेत् ॥
पञ्चदशदिनान्ता हि देहे देवस्य संस्थितिः ।
गोब्राह्मणानां देवानां निन्दां कुर्यान्न कुत्रचित् ॥
देवगोब्राह्मणादींश्च प्रत्यहं तु स्पृशेच्छुचिः ।
प्रातर्नित्यक्रियान्ते तु विल्वपत्रोदकं पिबेत् ॥
ततः स्नायात् तु तीर्थादौ प्राप्ते षोडशवासरे ।
स्वाहान्तं मूलमुच्चार्य तर्पयामि नमः पदम् ॥
एवं पदत्रयादूर्ध्वं देवानां तर्पणं जलैः ।
[ मुनितर्पणशून्यस्य न स्याद् देवस्य तर्पणम् ॥

तर्पणमिति तृप्तिरित्यर्थः ।

इत्यनेन विधानेन सिद्धिं प्राप्नोति निश्चितम् ।
इह भुक्त्वा वरान् दिव्यानन्ते याति हरेः पदम् ॥
अनङ्गं साङ्गमपि वा निष्फलं सफलं च वा ।

कृत्वा साधनमेवैतच्छक्तेः प्रियतमो भवेत् ॥
शवाभावे श्मशाने वा कर्त्तव्या वीरसाधना ।
ये भावा यस्य वै प्रोक्तास्तैर्भावैर्यदि नार्चयेत् ॥
ईदृशक्रमयोगेन भ्रष्टो भवति साधकः ।
नोपदिशेत् तत्र भावं न पूजां तत्र संदिशेत् ॥
श्मशानान्तं गृहीत्वा तु तावच्छुद्धिः प्रजायते ।

इति महामहोपाध्याय-ठक्कुर-श्रीनरसिंह-विरचिते-ताराभक्ति-
सुधार्णवे वीरसाधनविधिर्नवमस्तरङ्गः ॥ ९ ॥

## दशमस्तरङ्गः

### अथ काम्यम्

#### षट्कर्मलक्षणम्

कालीतन्त्रे—आदौ पुरश्क्रियां कुर्यान्नियमेन यथाविधि ।
तत: सिद्धमनुर्मन्त्री प्रयोगार्हो न चान्यथा ॥

फेत्कारिणीतन्त्रे—शान्तिकादीनि कर्माणि यद्वारतिथियोगतः ।
प्रारब्धव्यानि विधिना तच्च सम्प्रोच्यतेऽधुना ॥
शान्तिवश्यस्तम्भनानि द्वेषणोच्चाटने ततः ।
मारणान्तानि शंसन्ति षट्कर्माणि मनीषिणः ॥
पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ।
बुधेज्यवारसंयुक्ता शान्तिकर्मणि पूजिता ॥
गुरुचन्द्रयुता षष्ठी चतुर्थी च त्रयोदशी ।
सप्तमी पौष्टिके शस्ता चाष्टमी नवमी तथा ॥
दशम्येकादशी चैव भानुशुक्रदिनान्विता ।
आकर्षणे त्वमावास्या नवमी प्रतिपत् तथा ॥
पौर्णमासी मन्दभानुयुक्ता विद्वेषकर्मणि ।
कार्ष्णी चतुर्दशी तद्वदष्टमी मन्दवारका ।
उच्चाटने तिथिः शस्ता प्रदोषेषु विशेषतः ॥
चतुर्दश्यष्टमी कृष्णा अमावास्या तथैव च ।
मन्दभौमदिनोपेता शस्ता मारणकर्मणि ॥
बुधचन्द्रदिनोपेता पञ्चमी दशमी तथा ।
पौर्णमासी तु विज्ञेया तिथिः स्तम्भनकर्मणि ॥
शुभं शुभोदये कुर्यादशुभान्यशुभोदये ।
रौद्रकर्माणि रिक्तार्के मृत्युयोगे च मारणम् ॥

इज्यो गुरुः । मन्दः शनिः । कार्ष्णी कृष्णपक्षसम्बन्धिनी । आरः कुजः ।

पिङ्गलामते—श्टणु देवि प्रवक्ष्यामि वारतिथ्यर्क्षदेवताः ।
रवौ सूर्य-शिवौ देवि चन्द्रे सोमान्तकौ ततः ॥

भौमे च मङ्गल-गुहौ बुध-विष्णू ततः परे ।
परे गुरु-चतुर्वक्त्रौ भृगौ शुक्र-पुरन्दरौ ।
मन्दे शनैश्चरः कालो वारेशा देवि कीर्त्तिताः ॥

## तिथ्यधिपकथनम्

ब्रह्मा विधाता विष्णुश्च यमः शीतकरो गुहः ।
इन्द्रश्च वसवो नागा धर्मः शिव-दिवाकरौ ॥
मन्मथश्च कलिश्चैव विश्वेदेवास्तिथीश्वराः ।
दर्शे तु पितरो देवि पूज्याः सर्वोपचारकैः ॥

## नक्षत्राधिपकथनम्

अश्विनौ च यमौ वह्निर्ब्रह्मेन्दुश्च शिवोऽदितिः ।
गुरु-कद्रूज-पितरो भगार्यम-दिनेश्वराः ॥
त्वष्टा वायुरथेन्द्राग्नी मित्र इन्द्रस्तव प्रिये ।
निर्ऋतिश्चैव तोयं च विश्वेदेवाः प्रजापतिः ॥
विष्णुश्च वसवो देवि वरुणश्चाजपादकः ।
अहिर्बुध्नश्च पूषा च प्रोक्ता नक्षत्रदेवताः ॥
एताः सर्वोपचारैस्तु तद्दिनेषु समर्चयेत् ।
प्रणवाद्यैश्चतुर्थ्यन्तयुतैर्नामभिरीश्वरि ॥

ब्रह्मयामले—मारणे वर्जयेद् विप्रानन्यांश्चापि सुधार्मिकान् ।
स्त्रीजनव्यतिरेकेषु राजवैरिषु योजयेत् ॥
स्वरोषतो वा लोकानां रक्षार्थं वा तदाचरेत् ।
न तु लोभाद् भयाद् वापि कुर्यान् मन्त्री तु मारणम् ॥
प्रायश्चित्तं च कर्त्तव्यं देवि तद्दोषशान्तये ।
अयुतं प्रजपेन् मन्त्री जुहुयात् तावदीश्वरि ॥
सघृतैः पायसैर्देवि तिलैर्वा वीरवन्दिते ।
आत्मरक्षा च कर्त्तव्या कर्मकाले सदा बुधैः ॥

पञ्चमीश्वरीतन्त्रे—क्रूरकर्मसु देवेशि कर्म कृत्वा यथाविधि ।
तैलाभ्यक्तः पुनः स्नातः साङ्गां सावरणां बुधः ॥
अभ्यर्च्य देवतामिष्टामात्मरक्षार्थमद्रिजे ।
जपेन् मन्त्रं प्रसन्नात्मा सहस्रं साष्टकं प्रिये ॥

मां रक्ष रक्ष चेत्युक्त्वा प्रणम्य विसृजेच्छिवे ।
अन्यैः सुहृद्भिः सुस्निग्धैरात्मरक्षां तु कारयेत् ॥
मृत्युञ्जयादिभिर्देवि प्रयोगस्तेन चाणुना ।
जपहोमार्चनाद्यैश्च ब्राह्मणाराधनादिभिः ॥

## चक्रपूजावश्यकता

कुलार्णवे—प्रयोगान्ते तथा चक्रपूजां मन्त्री समाचरेत् ।
एकलक्षं जपेन् मन्त्री ध्यानन्याससमन्वितः ॥
प्रयोगदोषशान्त्यर्थमात्मरक्षार्थमेव च ।
न चेन्न फलमाप्नोति देवताशापमाप्नुयात् ॥

इदं च क्रूरतरविषयम् । तथा—

काम्यप्रयोगकर्तॄणां परलोको न विद्यते ।
प्रयोगसिद्धिरेवैषां फलमन्यन्न विद्यते ॥
एकस्य हि विधानस्य न कुत्रापि फलद्वयम् ।
देवेशि दृश्यते यस्मान्निष्कामो देवतां भजेत् ॥

तन्त्रान्तरे—गायत्रीमयुतं जप्त्वा सिद्धौ विघ्नविनाशिनीम् ।
कृत्वा चाभ्युदयश्राद्धं हविष्याशी चरेद् विधिम् ॥
मारणादिप्रयोगेषु ज्ञात्वा शत्रोर्ग्रहादिकम् ।
प्रयोगं प्रारभेत् प्राज्ञश्चान्यथाऽनिष्टमापतेत् ॥
शत्रोर्यदि शुभः कालस्तदा नैव समाचरेत् ।
यदा तस्याष्टमे भौमो राहुः केतुश्च चन्द्रमाः ॥
त्वष्टा नभश्च वा केन्द्रे लग्नेशोऽस्तं समागतः ।
अष्टमस्थोऽथवा षष्ठः क्रूरमध्यमितोऽथवा ॥
द्वादशेशस्तथा क्रूरमध्ये त्वापोक्लिमस्थितः ।
दग्धश्चास्तं समायातस्तदा मारणमारभेत् ॥
अन्ये तु यदि वा योगा स्युरनिष्टस्य सूचकाः ।
ज्योतिःशास्त्रात् तदा ज्ञात्वा प्रारभेन् मारणादिकम् ॥
आयुर्दायं तथा ज्ञात्वा दशापाकं विशालधीः ।
सत्यायुषि कृतः पुंभिः प्रयोगो निष्फलो भवेत् ॥
भौमस्य च शनेर्वापि राहोर्वा चेद् दशा भवेत् ।
तदा तु मारणं कर्म कुर्यान् मान्त्रिकसत्तमः ॥

शत्रोरशुभनक्षत्रे चन्द्रे वारे तिथौ तथा ।
लग्ने तत्तत्प्रयोगादि काले स्वस्य शुभे तथा ॥
प्रारभेत् क्रूरकर्माणि विधिमास्थाय मान्त्रिकः ।
नवमेशस्तृतीयेशो लग्नेशश्च यदा रिपोः ॥
एकत्र स्यात् तथा चन्द्रो दृष्टिर्वाथ परस्परम् ।
तदैवोच्चाटनं कुर्यादन्यथानिष्टमापतेत् ॥
यदि साध्यग्रहो दुष्टो मासः संवत्सरस्तथा ।
तदा तस्य शुभं कर्म न कुर्यादिति निश्चितम् ॥
आरम्भे महती पूजा कृत्वा देवस्य यत्नतः ।
गुरुं सम्पूज्य यत्नेन ब्राह्मणानपि भोजयेत् ॥

कुलार्णवे—तिथिवारर्क्षकरणयोगमासर्तुपक्षकम् ।
द्वीपेशकूर्मचक्राणि ज्ञात्वा कर्माणि साधयेत् ॥

कूर्मचक्रं च प्रागुक्तम् । तथा—

पञ्चशुद्ध्यासनप्राणायामन्यासाक्षमालिकाः ।
दोषसंस्कारराश्यादीन् ज्ञात्वा कर्माणि साधयेत् ॥

दोषाश्छिन्नादयः । संस्कारा जननादयः ।

## राशिचक्रम्

यथा—बालं गौरं खुरं शोणं शमी शोभेति राशिषु ।
क्रमेण भेदिता वर्णाः कन्यायां शादयः स्मृताः ॥
लग्नो धनं भ्रातृ-बन्धु-पुत्र-शत्रु-कलत्रकाः ।
मरणं धर्मकर्मायव्यया द्वादश राशयः ॥ *

तथा च स्वद्वितीयराशीयमन्त्रेण धनार्थं पञ्चमराशीयेन पुत्रार्थं सप्तमराशीयेन भार्यार्थं प्रयोगः कार्यः । एवमन्यदप्यूह्यम् । अत्र राशीनक्षत्रयोश्चक्रे मन्त्रनाम्नामाद्यक्षरं यत्र पतति तदेव साधकस्यापि राशिनक्षत्रम् । न तु जन्मराशिनक्षत्रम् । तथा सत्येतच्चक्रप्रणयनवैयर्थ्यम् । मन्त्रमात्रार्थतायां विनिगमकाभावात् । राशिचक्रमधिकृत्य—तेन मन्त्राद्यवर्णेन नाम्नश्चाद्यक्षरेण च ।
गणयेद् यत् तु षष्ठं वाप्यष्टमं द्वादशं तु वा ॥

---

* अत्र राशिचक्रे चतुर्थस्थाने शत्रुर्न तु बन्धुरेवं षष्ठस्थाने बन्धुर्न च शत्रुरिति केचित् । वैष्णवे तु—बन्धुस्थाने शत्रुः शत्रुस्थाने बन्धुरिति तन्त्रसारकृतः ।

रिपोर्मन्त्राद्यवर्णं स्यात् तत्र तस्य हितं भवेत् ।

इति तन्त्रराजवचनाच्च । वस्तुतस्तु—

प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो भवेत् ।
प्रणष्टजन्मभं यस्य तस्य नामर्क्षतो वदेत् ॥

इति पिङ्गलामतवचनाद् व्यवस्था । तथा—

कोष्ठबान्धवताराख्य-राशिवर्णानुकूलता ।
भूतमैत्रीं तथा यन्त्रं ज्ञात्वा मन्त्राणि साधयेत् ॥

कोष्ठमकथहादिचक्रम् । यथा तन्त्रराजे—

प्राक्प्रत्यग्दक्षिणोदक् च सूत्रपञ्चकयोगतः ।
कोष्ठानि षोडशात्र स्युस्तेषु वर्णान् क्रमाल्लिखेत् ॥
चतुश्चतुर्विभागेन कल्पयेत् तानि वै क्रमात् ।
प्रथमप्रथमे चाद्यं द्वितीयप्रथमे तथा ॥
द्वितीयमन्यतश्चान्यत् तथान्यदपि कल्पयेत् ।
तत्तत्कोष्ठेषु विलिखेत् तत्तत्पञ्चममक्षरम् ॥
एवं चतुर्षु कोष्ठेषु क्षान्तावधि समालिखेत् ।
स्वनामाद्यक्षरं यत्र कोष्ठे संदृश्यते यथा ॥

## सिद्धादिगणनम्

सिद्धादीन् गणयेद् यावद् मन्त्राद्यक्षरदर्शनम् ।
सिद्धसिद्धो जपात् सिध्येत् द्विगुणात् सिद्धसाध्यकः ॥
सिद्धसुसिद्धः सम्प्राप्तः सिद्धारिर्हन्ति गोत्रजम् ।
साध्यसिद्धोऽतिसंक्लेशात् साध्यसाध्योऽतिदुःखकृत् ॥
साध्ये सुसिद्धो भजनात् साध्यारिः स्वां श्रियं हरेत् ।
सुसिद्धसिद्धोऽध्ययनात् फलं दद्याद् यथेप्सितम् ॥
सुसिद्धसिद्धो जपाद्यैः सिद्धये स्यादितोऽन्यथा ।
सुसिद्धे तु सुसिद्धस्तु पूर्वजन्मकृतश्रमः ॥
तस्मात् तं सर्वसिद्धीनां साधने योजयेन् मनुम् ।
सुसिद्धारिरशेषेण स्वकुलं नाशयेद् ध्रुवम् ॥
अरिसिद्धः सुतं हन्यात् अरिसाध्यः स्वयोषितम् ।
अरिसुसिद्धमन्त्रस्तु कुलोत्सादनकृद् भवेत् ॥
अर्यरिः स्वात्महा मन्त्रः संप्राप्त्यैव सुनिश्चितम् ।

पिङ्गलामते तु—यथोक्तात् सिद्धसिद्धस्तु तत्साध्यो द्विगुणाज् जपात् ।

जपार्द्धात् तत्सुसिद्धस्तु तदरिर्बान्धवापहः ।

विघ्नाज्जपात् साध्यसिद्धस्तत्साध्यस्तु निरर्थकः ॥

तत्सुसिद्धः सार्धजपात् तदरिर्गोत्रजापहः ।

सुसिद्धसिद्धोऽर्द्धजपात् तत्साध्यो द्विगुणाज् जपात् ॥

तत्सुसिद्धो ग्रहादेव तदरिर्ज्ञातिजातिहा ।

अरिसिद्धः सुतं हन्यादरिसाध्यस्तु कन्यकाम् ॥

तत्सुसिद्धस्तु पत्नीघ्नस्तदरिः साधकापहः ॥ इति ।

पिङ्गलामते—प्रसिद्धं यद् भवेन्नाम किं वास्य जन्मनाम च ।

यतीनां पुष्पपातेन गुरुणा यत् कृतं भवेत् ॥

नाम्नस्तस्यैव वर्णानि विभक्तानि च कारयेत् ।

अन्यत्रापि—लोके प्रसिद्धनामाथ मात्रा पित्रा तथा कृतम् ।

अन्यत्रापि—सुप्तो जागर्त्ति येनासौ दूरस्थश्च प्रभाषते ।

यदत्यन्यमनस्कोऽपि तन्नाम ग्राह्यमत्र तु ।

अन्यत्रापि—मात्रा पित्रा कृतं नाम शोधनीयं प्रयत्नतः ॥

यच्च—जन्मर्क्षाक्षरतो वीक्ष्यं तत्र मन्त्रादिमाक्षरम् ॥

इत्युक्तम् । तज्जन्मनाम्नैव यत्र प्रसिद्धिस्तत्परम् । तत्रैव प्रत्यक्षरं सिद्धादि-गणनोक्ता ।

मातापितृकृतं नाम यच्चाप्यभिजनैः कृतम् ।

विश्लिष्य तस्य वै वर्णान् स्वरवर्णविभेदतः ॥

तथैव मन्त्रवर्णास्तु ततः शोधनमारभेत् ।

बिन्दुद्विबिन्दुकोपध्मानीयजिह्वाङ्घ्रिसम्भवान् ॥

संहतोच्चारणप्राप्तमधिकाक्षरमेव च ।

अपभ्रंशाक्षरं लक्षौ त्यक्त्वा षण्ढचतुष्टयम् ॥

मन्त्राक्षरैः सहैकैकं नामवर्णान् विशोधयेत् ।

व्यञ्जनैर्व्यञ्जनान्येव स्वरैः सार्धं स्वरांस्तथा ॥

आद्यमाद्येन संशोध्य द्वितीयेन द्वितीयकम् ।

मन्त्रे वाऽप्यथवा नाम्नि वर्णाः स्युर्विषमा यदा ॥

तदा मन्त्रं समारभ्य समं यावत् प्रयोजयेत् ।

आद्यन्तयोः सिद्धवर्णौ मन्त्रे यस्मिन् वरानने ॥

अचिरेणैव कालेन स भवेत् सर्वसिद्धिदः।
साध्यान्सादियुतो यस्तु सोऽतिकृच्छ्रेण सिध्यति ॥
आद्यावन्ते सुसिद्धस्तु सर्वकामविभूतिदः।
आद्यावन्ते रिपुर्यस्य भवेत् त्याज्यः स मन्त्रकः ॥
आदौ सिद्धोऽन्त्यसाध्यो यो द्विगुणेन स सिध्यति।
आदौ सिद्धः सुसिद्धान्त्यो यथोक्तात् सिध्यते जपात् ॥
आदौ सिद्धोऽन्त्यशत्रुर्य स त्याज्यो मन्त्रिसत्तमैः।
साध्यादिश्चैव सिद्धान्त्यस्त्रिगुणात् सिध्यते जपात् ॥
आदौ साध्यः सुसिद्धान्त्यः प्रोक्तमार्गेण सिध्यति।
आदौ साध्योऽन्त्यशत्रुर्यस्तं यत्नात् परिवर्जयेत् ॥
सुसिद्धादिस्तु सिद्धान्त्यो यथोक्तादेव सिध्यति।
सुसिद्धादिस्तु साध्यान्त्यश्चतुर्गुणमपेक्षते ॥
सुसिद्धादिश्चान्तशत्रुर्मध्यमः परिकीर्त्तितः।
आद्यारिश्चान्तसिद्धादिः सोऽपि त्याज्योऽत्र कर्मणि ॥
आदौ मध्ये तथा चान्ते सिद्धः शुभफलप्रदः।
सर्वसाध्य उदासीनः प्रोक्तस्तन्त्रे स्वयम्भुवा ॥
स्थानत्रितयसुसिद्धः सर्वानर्थांश्च साधयेत्।
स्थानत्रितयगतारिर्मन्त्रो मृत्युर्न सन्देहः।
सिद्धादिः साध्ययुग्मान्तो व्यर्थ इत्युच्यते बुधैः ॥
सिद्धादिर्द्विसुसिद्धान्तः सर्वकार्यार्थसाधकः।
सिद्धादिररियुग्मान्तो नाशकः संप्रकीर्त्तितः ॥
शत्रुर्भवति यदादौ मध्ये सिद्धस्तदन्तके साध्यः।
कष्टेन कार्यसिद्धिस्तस्य फलं स्वल्पमेव भवति ॥
अन्ते यदि भवति रिपुः प्रथमे मध्ये च भवति साध्ययुगम्।
कार्यं विलम्बितं स्यात् प्रणश्यति क्षिप्रमेवान्ते ॥
आद्यन्तयोर्यदा साध्ये मध्ये सिद्धः प्रजायते।
आद्यन्तयोर्यदा सिद्धो मध्ये साध्यः प्रजायते ॥
तावुभौ साध्यसिद्धौ हि जपाधिक्येन सिध्यतः।
अरिसंपुटितः सिद्धः सुसिद्धोऽपि तथा भवेत् ॥
सर्वनाशकरो ज्ञेयः साधकस्य न संशयः।

सिद्धेनाऽन्तरितः साध्यः सुसिद्धान्तरितो भवेत् ॥
शीघ्रं सिध्यति मन्त्रोऽयमीशानः स्वयमब्रवीत् ।
सिद्धेनाऽन्तरितः शत्रुः सुसिद्धेनापि चेद् भवेत् ॥
नासौ रिपुर्भवेन् मन्त्रः किन्तु कष्टेन सिध्यति ।
साध्यान्तरितसिद्धस्तु सुसिद्धोऽपि तथा यदि ॥
ईदृशं लक्षणं दृष्ट्वा दूरतः परिवर्जयेत् ।
रिपुणा दूषितो मन्त्रो नैव देयः कदाचन ॥ इति

नारायणीयेऽपि—दुष्टार्णप्रचुरो मन्त्रो यः स्यात् स च विनिन्दितः । एवञ्चानुकूलेन स्वेष्टं परानुकूलेन मन्त्रेण परानिष्टं साधयेदित्यर्थः ।

पिङ्गलायाम्—एषु दोषेषु सर्वत्र मायां काममथापि वा ।
क्षिप्त्वादौ च श्रियं दद्याद् दोषाणां च विमुक्तये ॥

## ताराचक्रम्

ताराख्येति । ताराचक्रं यथा—

प्रापलोभात्पटुप्राज्यं रुग्रस्याद्रि रुरुः करम् ।
लोकलोपपटुः प्रापः खलौ द्यौभेषु भेदिताः ॥
वर्णाः क्रमात् स्वरान्त्यौ तु रेवत्यंशगतौ सदा ।
जन्म सम्पद् विपत् क्षेमः प्रत्यरिः साधको वधः ॥
मित्रं परममित्रं च जन्मादीनि पुनः पुनः ।

अत्रापि पूर्ववदेव ज्ञेयम् । वाराहीतन्त्रे—

कोष्ठशुद्धिर्वराहे च महालक्ष्म्या कुलाकुलम् ।
नामादिचक्रं सर्वेषां भूतचक्रं तथैव च ॥
ताराशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवे भवेत् ।
त्रैपुरे राशिशुद्धिः स्याद् गोपालेऽकडमः स्मृतः ॥

## अकडमचक्रम्

यथा—निःषण्ढकानकारादीन् मेषादिक्रमतो लिखेत् ।
सिद्धादीन् कल्पयेत् तत्र स्वनामाद्यक्षरादितः ॥

भूतमैत्रीमिति कुलाकुलचक्रमित्यर्थः ।

## कुलाकुलचक्रम्

कुलाकुलपरीक्षायां प्रकारः कथ्यतेऽधुना ।

वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् ॥
पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः ।
पञ्चशः काद्यः षक्ष-लसहान्ताः समीरिताः ॥
साधकस्याक्षरं पूर्वं मन्त्रस्यापि तथाऽक्षरम् ।
यद्येकभूतदैवत्यं जानीयात् स्वकुलं हि तत् ॥
पार्थिवं वारुणं मैत्रमाग्नेयस्यापि मारुतम् ।
पार्थिवानामक्षराणां शत्रुत्वे मारुतं मतम् ॥
आग्नेयस्याम्भसं शत्रुरम्भसस्तैजसं तथा ।
एषामपि च सर्वेषामविरोधि तु नाभसम् ॥
परस्परविरुद्धानां न कुर्यान् मेलनं बुधः ।

## खद्यद्चक्रम्

यन्त्रं खद्यद्चक्रम् । यथा कुलमूलावतारे—

खद्यदं चक्रमालिख्य प्रागादिषु दलेषु तु ।
अर्कादिवर्णानेकैकं लिखेन् निःषण्ढकूटकान् ॥
स्वनामाद्यक्षरं यत्र तदारभ्य विचारयेत् ।
उदिते सम्पदुद्दिष्टा द्वितीये सम्पदां क्षयः ॥
तृतीये तु धनं विद्याच्चतुर्थे बन्धुविग्रहः ।
पञ्चमे संशयात्मा स्यात् षष्ठः सर्वविनाशकः ॥

इदमुपलक्षणं गण-योनि-फणि-वर्गचक्रर्णधनचक्रानुकूलमप्यवलोकनीयम् ।

## गणचक्रम्

गणचक्रं यथा—हस्तास्वातीश्रुतिमृगपुष्यमैत्राश्विरेवती ।

पुनर्वसुर्गुरुरिति भानि दैवानि मान्त्रिकाः ॥
पूर्वोत्तरत्रयं चार्द्रा भरणी रोहिणी तथा ।
मर्त्यप्रियगणः प्रोक्तो भान्येतानि विशारदैः ॥
चित्राश्लेषे मूलमघे धनिष्ठाज्यैष्ठिके तथा ।
वरुणः कृत्तिकेन्द्राग्नी रक्षोगण उदाहृतः ॥
एकयोरुत्तमा प्रीतिर्दैवपुंसोस्तु मध्यमा ।
दैवैर्मर्त्यैरपि महद्रक्षसो वैरमुच्यते ॥
एवं बुद्ध्वा बुधो मन्त्रं विधिनात्मनि योजयेत् ।

## अथ योनिचक्रम्

अश्वेभाजफणिद्वयं श्ववृषभुङ्मेषौतनो मूषिक-
श्चाखुर्गौः क्रमशस्ततोऽपि महिषी व्याघ्री पुनः सैरिभी ।
व्याघ्रेणौ मृग-मण्डलौ कपिरथो बभ्रुद्वयं वानरः
सिंहाश्वौ मृगराट् पशुश्च करटी योनिस्तु भानामियम् ॥

वृषभुक् विड़ालः । सैरिभी महिषी । मण्डलः श्वा । बभ्रुर्नकुलः । करटी हस्ती ।

विरोधस्तु—गोव्याघ्रं गजसिंहमश्वमहिषं शैनं च बभ्रूरगं
वैरं वानरमेषकं च सुमहत् मार्जारमूषं तथा ।
लोकानां व्यवहारतोऽन्यदपि च ज्ञात्वा प्रयत्नादिदं
दम्पत्योर्नृपभृत्ययोरपि सदा वर्ज्यं शुभस्यार्थिभिः ॥ इति

## अथ फणिचक्रम्

क्रमेण च विलेख्यानि सप्तविंशतिभानि च ।
अङ्कानि दापयेत् तत्र ऊर्ध्वाधश्च त्रिभिस्त्रिभिः ॥
सर्पाकारं भवेच्चक्रं नाड़ीचक्रं प्रचक्षते ।

यामलेऽपि—अश्विन्याद्यं लिखेच्चक्रं सर्पाकारं त्रिनाड़ीकम् ।
त्रिनाड़ीवेधनक्षत्रमश्विन्यार्द्रा युगोत्तरा ॥
हस्तेन्द्रमूलवारुण्यः पूर्वभाद्रपदा तथा ।
याम्यः सौम्यो गुरुर्योनिश्चित्रामित्रफणिद्वयम् ॥
धनिष्ठा चोत्तरा धन्या मध्यनाड़ी व्यवस्थिता ।
कृत्तिका रोहिणी सर्पो मघा स्वातीविशाखके ॥
उत्तरा-श्रवणे पौष्णं पृष्ठनाड़ी व्यवस्थिता ।

योनिः पूर्वफल्गुनी । फणिद्वयं पूर्वाषाढ़ा । फलं च—

एकनाड़ीस्थिता यस्य गुरुमन्त्रस्वदेवताः ।
तत्र द्वेषमृणं मृत्युं क्रमेण फलमादिशेत् ॥

## अथाष्टवर्गचक्रम्

वर्गशुद्धिं समासाद्य मन्त्रं दद्याद् गुरूत्तमः ।
अवर्गः पक्षिणो ज्ञेयो मार्जारश्च कवर्गकः ॥
चवर्गश्च तथा सिंहष्टवर्गश्चैव कुक्कुरः ।
तवर्गो नाग इत्युक्तो मूषिकश्च पवर्गकः ॥
यवर्गश्च गजो ज्ञेयः शवर्गोऽप्यज-मेषकौ ।

गरुड़-भुजगयोर्वैरं तथा च गज-सिंहयोः ॥
मार्जार-मूषयोर्वैरं तथा कुक्कुर-मेषयोः ।
भुजङ्ग-सिंहयोर्मैत्री मेष-मूषकयोस्तथा ॥
लोकादन्यच्च विज्ञेयं व्यवहारप्रयोगतः ।

ऋणधनचक्रम्

यथामन्त्रकौमुद्यां—धनादिकं विदित्वा तु मनौ सिद्धादिकेऽपि च ।
प्रवर्त्तितव्यं धीमद्भिर्वैफल्यं यदतोऽन्यथा ॥
दक्षोत्तरायतं कुर्यात् नवसूत्रकमुत्तमम् ।
प्राक्प्रत्यगायताश्चैव भानुरेखाः प्रकल्पयेत् ॥
द्वौ द्वौ स्वरौ लिखेद् विद्वान् पञ्चकोष्ठे तथा परान् ।
षट्स्वेकमेकमालिख्य कादिहान्तं ततोऽक्षरम् ।
एकैकमेकादशसु त्रिकेषु मतिमान् लिखेत् ॥
दिग्भूगिरिश्रुतिगजाग्निमुनीष्वब्धिषट्त्रिकैः ।
गुणयेत् साधकस्यार्णान् स्वरव्यञ्जनभेदितान् ॥
इन्द्र-नक्षत्र-नयन-रवि-पञ्चदशर्त्तुभिः ।
श्रुत्यग्न्यायुधनागेन्द्र-नवभिश्च तथा मनोः ॥
नामार्णकोष्ठाङ्कमथो आद्यन्तनिहितं क्रमात् ।
अन्यकोष्ठगुणेनैव पञ्चमं पञ्चभिर्यथा ॥
एवं पर्यवसन्नास्ते गुणकाङ्काः समासतः ।
रुरुमीननरोद्यानभावकाः साधकाक्षरे ॥
मन्त्रवर्णेषु तत्तत् तु नगभूभानुनिम्नगाः ।
नामाङ्गलादकठवादष्टभक्ताधिकं बुधैः ॥
ज्ञात्वोभयोर्ऋणं विद्यादधिकं शेषमङ्कवित् ।
उक्तं च वसुभिर्भागमाहरेदुभयोरपि ॥
बाहुल्यं यत्र दृश्येत सोऽधमर्णः प्रकीर्त्तितः ।
धार्यते यस्य यैर्मन्त्रैर्गृह्णीयात् तान् मनून् स वै ।
तदभावे समधनं धनिकं न कदाचन ॥

धाराहीतन्त्रे—मन्त्रो यद्यधिकाङ्कः स्यात् तदा मन्त्रं जपेत् सुधीः ।
समेऽपि च जपेन् मन्त्री न जपेत् तद्दृणाधिके ॥
शून्ये मृत्युं विजानीयात् तस्माच्छून्यं परित्यजेत् ।

## कादिमते ऋणशोधनप्रकारः

यथा—नामाद्यक्षरमारभ्य यावन् मन्त्रादिवर्णकम् ।
त्रिधा कृत्वा स्वरैर्भिन्नं तदन्यद् विपरीतकम् ॥ इति ।

स्वरैः सप्तभिः । विपरीतकमिति । सप्तभिर्गुणनं त्रिभिर्विभजनमिति राघवभट्टाः । तच्चिन्त्यम् । साधकाङ्कस्य त्रिभिर्विभागे अङ्कत्रयाधिकाङ्कस्याप्राप्तेः । तस्मान् कवर्णगणनायामेव वैपरीत्यं तदर्थः । तन्त्रान्तरे—

साध्यमन्त्रद्विगुणितं साधकेन समन्वितम् ।
अष्टाभिश्च हरेच्छेषं तदन्यद् विपरीतकम् । इति ॥

अस्यार्थः—मन्त्राक्षराणि स्वरव्यञ्जनरूपेण पृथक्पृथक्कृतानि द्विगुणितानि द्विर्गुणयेत् । साधकनामाक्षराण्यपि स्वरव्यञ्जनरूपेण पृथक्कृतानि द्विगुणितानि स्वरव्यञ्जनरूपेण पृथक्पृथङ्मन्त्राक्षरैः संयोजितानि अष्टभिर्हरेत् । एवं साधकराशिः एवं यस्योत्तमर्णो यो मन्त्रस्तेन तदनिष्टं यस्य चाधमर्णो यस्तेन तदिष्टं साधयेदित्यर्थः ।

चक्रभेदे—हरचक्रं षड्दलं च सिद्धादिचक्रमेव च ।
राशिनक्षत्रचक्रे च स्वकुलाकुलमेव च ॥
अकडवं चाकठवं वर्गचक्रं तथैव च ।
उक्तानि नवचक्राणि मन्त्रसिद्धिकराणि च ॥
नवचक्रविशुद्धात्मा मन्त्रोऽभीष्टाय कल्पते ।
गणचक्रविचारोऽपि केषाञ्चित् सम्मतः प्रिये ॥

## अथ हरचक्रम्

अथातः सम्प्रवक्ष्यामि हरचक्रं महोदयम् ।
यज् ज्ञात्वा ज्ञानवान् लोके जायते मन्त्रवित्तमः ॥
अन्यथा वर्जयेन् मन्त्रमित्याह भगवान् शिवः ।
तस्मात् सर्वप्रयत्नेन यः सुधीः स विचारयेत् ॥
कुर्यात् क्षेत्रं तु देवानां ताराकोष्ठं सुसन्निभम् ।
तन्मध्ये विभजेत् कोष्ठचतुष्कं कर्णसूत्रकैः ॥

ताराकोष्ठं राशिकोष्ठम् । तेन दिक्षु चतुःकोष्ठानि विदिक्षु चतुःकोष्ठानि मध्ये कोष्ठमेकम् । कोष्ठचतुष्कमिति । मध्ये सूत्रस्य पातनं नास्तीति चतुष्टयत्वमन्यथा कर्णसूत्रस्य द्वितीयत्वमेव किं तु सूत्रचतुष्टये दत्ते राशिकात्मकं कोष्ठं भवतीत्यर्थः ।

पातयेद् दिक्षु दुर्गां च वाणीं तारां च भैरवीम् ।
कर्णसूत्रस्योभयत ईशानादिषु योजयेत् ॥

त्रिपुरां भुवनेशीं च पीठेशीं चैव त्र्यम्बकम् ।
वासुदेवं श्रियं चैव छिन्नमस्तां च चण्डिकाम् ॥
ईशानाद्यं विवस्वन्तं क्रमाच्च त्वरितां तथा ।
इन्द्राक्षीं चैव हेरम्बं पितामहमनन्तरम् ॥
महामायां च कालीं च यदन्यत् सौम्यदैवतम् ।

ईशानाद्यमिति । ईशानकोणमाद्यं कृत्वेत्यर्थः । "पञ्चाशद् विलिखेद् वर्णानीश-कोष्ठादिकं क्रमादि"ति वचनात् । अत्र क्रमपदेन दिग्गतकोष्ठानामपि ग्रहणम् ।

मातापितृकृतं नाम वेदमन्त्रपरिष्कृतम् ।
सर्वकर्मणि यद् योग्यं शस्तं तन् मन्त्रदीक्षणे ॥

इति तु हरचक्रपरम् ।

नामार्णं तु समारभ्य यावद् देवार्णगोचरम् ।
संशुद्धौ ग्रहणं कुर्यादशुद्धौ न कदाचन ॥
धनं पुत्रं च लाभं च निधनं चैव विह्वलम् ।
मुक्तिं सौख्यं च धर्मं च अपिस्विन्न च कामदम् ।
भीषणं चिन्तयेत् कोष्ठे हरचक्रमितीरितम् ॥

अत्र प्रदक्षिणक्रमः । इति हरचक्रम् । विजयमालिनीतन्त्रे—

अल्पदोषा बहुगुणा मन्त्रा देया विचक्षणैः । इति ।

## तारादिमन्त्रेष्वपि सिद्धादिविचारापेक्षा

ननु—"नात्र सिद्धाद्यपेक्षास्ति न वा मित्रादिदूषणमि"ति तारादक्षिणादिमन्त्र-मधिकृत्य नीलतन्त्रादिवचनात् कथं काम्यप्रयोगेष्वपि तद्विचारापेक्षा । एवं—

नृसिंहार्कवराहाणां प्रासादप्रणवस्य च ।
सपिण्डाक्षरमन्त्राणां सिद्धादीन् न विचारयेत् ॥

इत्यादि तन्त्रान्तरसंगृहीतमन्त्रप्रयोगेष्वपि कथमेतद् विचार इति चेत्—

नित्यानां त्रैपुराणां च नावेक्षास्त्वंशकादयः ।
तथाप्यत्रोच्यते किञ्चिदभिचारादिसिद्धये ॥

इति तन्त्रराजवचनाद् गृहाण । एवं च प्रयोगार्थिनां तारादिमन्त्रग्रहणेऽपि कोष्ठादिशोधनमायाति । तच्छोधननिषेधस्य च मोक्षार्थिमात्रपरतेति प्रतिभाति ।

तन्त्रे—सूर्योदयं समारभ्य घटिकादशकः क्रमात् ।
ऋतवः स्युर्वसन्ताद्या अहोरात्रं दिने दिने ॥
वसन्त-ग्रीष्म-वर्षाख्य-शरद्धेमन्त-शैशिराः ।

हेमन्तः शान्तिके प्रोक्तो वसन्तो वश्यकर्मणि ॥
शिशिरः स्तम्भने ज्ञेयो विद्वेषे ग्रीष्म ईरितः ।
प्रावृडुच्चाटने ज्ञेया शरन् मारणकर्मणि ॥

फेत्कारिणीतन्त्रे—संलिखेत् स्तम्भनं कुम्भे हर्यक्षे वृश्चिकोदये ।
द्वेषोच्चाटादिकं नक्रकुलीराजतुलोदये ॥
यमकन्याधनुर्मीने वश्य-शान्तिक-पौष्टिकम् ।
मारणं चाष्टमे राशौ रिपोश्छेदादिनिग्रहम् ॥

हर्यक्षः सिंह । नक्रो मकरः । कुलीरः कर्कटः । अजो मेषः । यमो मिथुनः ।

तथा—वश्यं पूर्वेऽह्नि मध्याह्ने विद्वेषोच्चाटनं लिखेत् ।
शान्ति-पुष्टी त्वहन्यन्ते सन्ध्याकाले तु मारणम् ॥
अर्धरात्रे लिखेत् स्तम्भमाकृष्टिं प्राग् दिनोदयात् ।
यदन्यच्छोभनं कार्यं तत्प्रत्यूषे लिखेद् बुधः ॥
इन्द्रे स्तम्भनमुच्चाटमग्नौ सर्वाभिचारकम् ।
याम्ये रक्षसि विद्वेषं शान्तिं वरुण-सोमयोः ॥
कुलोत्सादं मरुद्भागे यक्षे कलहविग्रहौ ।
कुर्वीत नोदितं कर्म यच्छुभं ब्रह्मणः पदे ॥
वश्याकृष्टी लिखेद् भूर्जे लिखेदुच्चाटनं ध्वजे ।
गर्दभत्वचि विद्वेषं स्तम्भनं गजचर्मणि ॥
प्रेतचीरे समालेख्यं ज्वरतापादिमारणम् ।
विवादसैन्यस्तम्भानि शिलायामपि मोहनम् ॥
वश्यं कुङ्कुमकर्पूर-रोचनाभिर्हरिद्रया ।
यावेन स्तम्भनाकृष्टिं लिखेच्चानामिकासृजा ।
विद्वेषं फेरुरक्तेन काकरक्तेन मारणम् ।
मोहनं वृकरक्तेन उच्चाटं चोष्ट्रजासृजा ॥

यावोऽलक्तकम् । अनामिकासृजा अनामिकाङ्गुलिरुधिरेण । फेरुः शृगालः ।

तथा—वश्यादौ लेखनी दूर्वाकर्षणे शिखिपिच्छला ।
विद्वेषोच्चाटनं काकपक्षेणापि च मारणम् ॥
वश्ये चाकर्षणे स्तम्भे रक्तवर्णं विचिन्तयेत् ।
निर्विषीकरणे शान्तौ पुष्टौ चाप्यायने सितम् ॥
पीतं स्तम्भनकार्येषु धूम्रमुच्चाटने स्मरेत् ।

उन्मादे शक्रगोपाभं कृष्णं मारणकर्मणि ॥
आसनं श्वेतरूपन्तु सात्त्विकं समुदाहृतम् ।
यानमार्गे स्थितं पीतं राजसं परिकीर्त्तितम् ॥
दण्डमानस्थितं रौद्रं कृष्णं तामसमुच्यते ।
सात्त्विकं मोक्षकामानां राजसं राज्यमिच्छताम् ॥
तामसं शत्रुनाशार्थं सर्वव्याधिनिवारणम् ।
सर्वोपद्रवशान्त्यर्थं तामसं तु विचिन्तयेत् ॥

कुलप्रकाशतन्त्रे—श्वेतद्रव्यैर्यजेच्छान्त्यामारक्तैर्वश्यकर्मणि ।
स्तम्भने पीतवर्णैश्च धूम्रैर्विद्वेषणे यजेत् ॥
उच्चाटने मारणे च कृष्णद्रव्यैः प्रपूजयेत् ।
आत्मानं तादृशैरेव वस्त्राद्यैर्भूषयेत् तदा ॥
रतिर्वाणी रमा ज्येष्ठा दुर्गा काली यथाक्रमात् ।
षट्कर्मदेवता प्रोक्ताः कर्मादौ ताः प्रपूजयेत् ॥
कात्यायन्यभिचारे च दक्षिणाप्लावगा मही ।
वसनं लोहितं प्रोक्तमुष्णीशं लोहितं स्मृतम् ॥
सौम्ये सुवर्णदुवर्णे यज्ञसूत्रमुदाहृतम् ।
स्तम्भविद्वेषयोः प्रोक्तं मार्जारान्त्रसमुद्भवम् ॥
कुक्कुटान्त्रसमुद्भूतं यज्ञसूत्रं मनीषिभिः ।
उच्चाटने वकान्त्राणामुपवीतमुदाहृतम् ॥
उलूकान्त्रसमुद्भूतं यज्ञसूत्रं तु मारणे ।
वश्यशान्त्योर्हविष्यं स्यात् स्तम्भने पायसं मतम् ॥
विद्वेषे माषमुद्गाः स्युर्गोधूमा वायुदेवते ।
श्यामाकान्नं मसूरान्नं शाल्यजादुग्धपायसे ॥
मारणे भक्ष्यमेतत् स्यादित्युक्तो भक्षसंयमः ।

## षट्कर्मयोग्यासनम्

पद्मासनं स्वस्तिकं च विकटं कुक्कुटं तथा ॥
वज्रं भद्रकमित्याहुरासनानि मनीषिणः ।

लक्षणमुक्तं तन्त्रान्तरे—

वामोरूपरि दक्षिणं तु चरणं संस्थाप्य वामं तथा
याम्योरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।

अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकयेत्
तत्तद्व्याधिविघातकारि यमिनां पद्मासनं प्रोच्यते ॥
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तदुदीरितम् ॥
एकपादमथैकस्मिन् विन्यस्योरुणि संस्थितः ।
इतरस्मिंस्तथा चोरुं विकटासनमीरितम् ॥
पद्मासनं तु संयोज्य जानूर्वोरन्तरे करौ ।
निवेश्य भूमौ संस्थाप्य व्योमस्थं कुक्कुटासनम् ॥
मेढ्रादुपरि विन्यस्य सव्यं गुल्फं तथोपरि ।
गुल्फान्तरं च निक्षिप्य वज्रासनमिहेरितम् ॥
गुल्फे च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः ॥
भद्रासनं भवेदेतत् सर्वव्याधिविनाशनम् ।

## आसनाधारनिरूपणम्

आसनाधारमधुना वक्ष्ये तन्त्रानुसारतः ।
सर्वसिद्ध्यै द्वीपिचर्म ज्ञानसिद्ध्यै मृगाजिनम् ॥
वस्त्रासनं रोगहरं वेत्रजं श्रीविवर्द्धनम् ।
कौशेयं पौष्टिकं प्रोक्तं केवलं दुःखमोचनम् ॥
अभिचारे कृष्णवर्णं रक्तं वश्यादिकर्मसु ।
शान्तिके धवलं प्रोक्तं चित्रकं सर्वकर्मसु ॥
स्तम्भने गजचर्म स्यान् मारणे माहिषं तथा ।
मेषीचर्म तथोच्चाटे खड्गिजं वश्यकर्मणि ॥
विद्वेषे जाम्बूकं प्रोक्तं भवेद् गोचर्म शान्तिके ।
वशीकरणकर्म स्याद् देवतायतने शुभे ॥
शान्तिकर्म भवेद् गेहे श्मशाने क्रूरकर्म च ।
अथवा सर्वकर्माणि भवेयुर्देवतागृहे ॥

## षट्कर्मयोग्यमुद्रा

षण्मुद्राः क्रमतो ज्ञेयाः पद्मपाशगदाह्वयाः ।
मुशलाशनिखड्गाख्याः शान्तिकादिषु दर्शयेत् ॥
हस्तौ तु सम्मुखौ कृत्वा सन्नतावुन्नताङ्गुली ।

तलान्तर्मिलिताङ्गुष्ठौ मुद्रैषा पद्मसंज्ञिका ॥
याममुष्टिस्थतर्जन्या दक्षमुष्टिस्थतर्जनीम् ।
संयोज्याङ्गुष्ठकाग्राभ्यां तर्जन्यग्रे स्वके क्षिपेत् ॥
एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्त्तिताः ।
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली ॥
अङ्गुल्यौ मध्यमौ भूयः संलग्ने सुप्रसारिते ।
गदामुद्रेयमाख्याता विष्णोः सन्तोषवर्द्धिनी ॥
मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम् ।
कुर्यान् मुशलमुद्रेयं सर्वविघ्नविनाशिनी ॥
कनिष्ठाङ्गुष्ठसंयोगात् त्रिकोणाशनिसंज्ञिता ।
कनिष्ठानामिके बद्ध्वा स्वाङ्गुष्ठेनैव दक्षतः ॥
शिष्टाङ्गुली च प्रसृते संसृष्टे खड्गमुद्रिका ।

## षट्कर्मयोग्यकुण्डम्

चतुरस्रमर्धचन्द्रं त्रिकोणं च षड़स्रकम् ॥
वर्त्तुलं च पृथिव्यादिमण्डलाकृतयः क्रमात् ।
पीतं श्वेतं तथा रक्तं कृष्णं धूम्रमिति क्रमात् ॥
नाभौ स्मरेन् मण्डलं तु वायोस्तद्बीजसंयुतम् ।
त्रिकोणं पिङ्गलं वह्निमण्डलं हृदि चिन्तयेत् ॥
चतुरस्रं गले पीतं पृथिवीमण्डलं स्मरेत् ।
अर्धचन्द्रं ललाटे तु श्वेतपद्मद्वयाङ्कितम् ॥
मस्तके धूम्रवर्णाभं वर्त्तुलं व्योममण्डलम् ।
स्वस्वबीजयुतेष्वेषु चैतन्यं परिचिन्तयेत् ॥
जलं शान्तिविधौ शस्तं वश्ये वह्निरुदाहृतम् ।
स्तम्भने पृथिवी शस्ता विद्वेषे व्योम कीर्त्तितम् ॥
उच्चाटने स्मृतो वायुर्भूयोऽग्निर्मारणे मतः ।
तत्तद्भूतोदये सम्यक् तत्तन्मण्डलसंयुतम् ॥
तत्तत् कर्म विधातव्यं मन्त्रिणा निशितात्मना ।
दण्डाकारा गतिर्भूमेः पुटयोरुभयोरधः ॥
तोयस्य पावकस्योर्ध्वं गतिस्तिर्यग् नभस्वतः ।
गतिर्व्योम्नो भवेन् मध्ये भूतानामुदयः स्मृतः ॥

धरणेरुदये कुर्यात् स्तम्भनं वश्यमात्मवित्।
शान्तिकं पौष्टिकं कर्म तोयस्य समये वसोः॥
मारणादीनि मरुतो विपक्षोच्चाटनादिके।
क्ष्वेडादिनाशने शस्तमुदये च विहायसः॥
धरादिपञ्चभूतानां निवृत्ताद्याः कलाः स्मृताः।
निवृत्तिः सप्रतिष्ठा स्याद् विद्या शान्तिरनन्तरम्॥
शान्त्यतीतेति ता ज्ञेयाः सम्पूज्यास्तत्र तत्र ताः।
मन्त्रान्ते योजनं नाम्नः पल्लवः स तु कथ्यते॥
मारणे विषसंहारे ग्रहभूतविनिग्रहे।
उच्चाटने च विद्वेषे पल्लवस्तु प्रशस्यते॥
नामान्ते मन्त्रसंस्थानं योग इत्यभिधीयते।
शान्तिके पौष्टिके वश्ये प्रायश्चित्ते विशोधने॥
मोहने दीपने योगं प्रयुञ्जन्ति मनीषिणः।
स्तम्भनोच्चाटनोद्भेदविद्वेषेषु स चोच्यते॥
नाम्न आद्यन्तमध्येषु मन्त्रः स्याद् रोध इष्यते।
मन्त्राभिमुख्यकरणे-सर्वव्याधिनिवारणे॥
ज्वरग्रहविषाद्यार्त्तिशान्तिके रोध उच्यते।
सम्मोहने स एवाथ मन्त्रनामाक्षराणि च॥
एकैकान्तरितं यत् तु ग्रथनं तत् प्रकीर्त्तितम्।
तच्छान्तिके विधातव्यं नामाद्यन्ते तथा मनुः॥
तत् सम्पुटं भवेत् तत् तु कीलने परिभाषितम्।
स्तम्भे मृत्युञ्जये विष्ये रक्षादिव्ये च संपुटः॥
मन्त्राक्षराभ्यामेकैकं साध्यनामाक्षरं क्रमात्।
कथ्यते स विदर्भस्तु वश्याकर्षणपौष्टिके॥
एवं योगक्रमः प्रोक्तः सर्वकार्ये मनीषिभिः॥
( बन्धनोच्चाटने द्वेषे संकीर्णे हुं प्रयोजयेत्।
फट्कारं छेदने हूं फट् विघ्नग्रहनिवारणे॥
पुष्टौ चाप्यायने वौषट् रोधने मलिनीकृते।
अग्निकार्ये जपेत् स्वाहा नमः सर्वत्र चार्चने॥
शान्ति-पुष्टि-वश-द्वेषाकृष्टयुच्चाटनमारणे।

स्वधा स्वाहा वषट् हुं च वौषट् फट् योजयेत् क्रमात् ॥ )
वश्याकर्षणसन्तापज्वरे स्वाहां प्रयोजयेत् ।
क्रोधोपशमने शान्तौ प्रीतौ योज्यं नमो बुधैः ॥
वौषट् सम्मोहनोद्दीपपुष्टिमृत्युञ्जयेषु च ।
हूङ्कारं प्रीतिनाशे च छेदने मारणे तथा ॥
उच्चाटने च विद्वेषे वषट् पल्लवकृतौ वषट् ।
मन्त्रोद्दीपनकार्येषु लाभालाभे वषट् स्मृतः ॥

## षट्कर्मणि मन्त्रभेदाः

मन्त्रविद्याविभागेन द्विविधा मन्त्रजातयः ।
मन्त्राः पुंदेवता ज्ञेया विद्याः स्त्रीदैवताः पुनः ॥
स्त्रीपुंनपुंसकात्मानो मन्त्राः सर्वे समीरिताः ।
पुंमन्त्रा हुं फडन्ताः स्युर्द्विठान्तास्तु स्त्रियो मताः ॥
नपुंसका नमोऽन्ताः स्युर्विभक्ता मनवस्त्रिधा ।
शस्तास्ते त्रिविधा मन्त्रा वश्यशान्त्यभिचारिके ॥
अग्नीषोमात्मका मन्त्रा विज्ञेया क्रूरसौम्ययोः ।
कर्मणोर्वह्नितारान्ते वियत्प्रायाः समीरिताः ॥
आग्नेया मनवः सौम्या भूयिष्ठेन्दुमृताक्षराः ।
आग्नेयाः सम्प्रबुध्यन्ते प्राणे चरति दक्षिणे ॥
भागेऽन्यस्मिन् स्थिते प्राणे सौम्या बोधं प्रयान्ति च ।
नाडीद्वयगते प्राणे सर्वे बोधं प्रयान्ति च ॥
प्रयच्छन्ति फलं सर्वे प्रबुद्धा मन्त्रिणां सदा ।
शीतांशु-सलिल-क्षौणी-व्योम-वायु-हविर्भुजाम् ॥
वर्णाः स्युर्मन्त्रबीजानि षट्कर्मसु यथाक्रमम् ।

## षट्कर्मणि जपभेदाः

जपः स्यादक्षरावृत्तिस्तस्य भेदान् ब्रवीम्यहम् ।
जपः स्याद् द्विविधः प्रोक्तो वाचिको मानसस्तथा ॥
आद्योऽप्युपांशुरुच्चैश्च द्विविधः परिकीर्त्तितः ।
द्वितीयोऽपि द्विधा प्रोक्तो जिह्वाचित्तप्रभेदतः ॥
यदुच्चनीचस्वरितैः शब्दैः स्पष्टपदाक्षरैः ।
मनुमुच्चारयेद् वाचा स उक्तो वाचिको जपः ॥

शनैरुच्चारयेन् मन्त्रमीषदोष्ठौ प्रचालयेत् ।
किञ्चिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥
जिह्वाजपः स विज्ञेयः केवलं जिह्वया बुधैः ।
धिया यदुच्चरेन् मन्त्रं स उक्तो मानसो जपः ॥
उच्चैर्जपाद् विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ।
जिह्वाजपः शतगुणः सहस्रो मानसो जपः ॥
मानसः सिद्धिकामैस्तु पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैव प्रशस्तो जप ईरितः ॥

तथा—प्रणवाद्या मुक्तिकरी श्रीबीजाद्या धनागमे ।
हृल्लेखाद्या महासिद्धिकरी सर्ववशङ्करी ॥
वाग्भवाद्यां चरेद् विद्यां कामाद्या जनरञ्जिनी ।

रुद्रयामले—ऊर्ध्वदृष्टिर्जपेच्छान्तावधोदृष्टिस्तु मोहने ।
समदृष्टिः स्तम्भने च पार्श्वतो दर्शनक्रमात् ॥
विरोधे च समुच्चाटमारणे सूर्यदर्शनः ।
विद्यार्थं जलमध्यस्थो भानुमण्डलदर्शनात् ॥
भ्रूमध्यदर्शनाद् देवि मोक्षशान्तौ शुभेऽखिले ।
नासाग्रदर्शतो देवि सर्वत्र शुभकर्मणि ॥

तन्त्र—नित्यं जपं करे कुर्यान्न प्रयोगे कदाचन ।
प्रयोगे विहिता माला तत्तत्कर्मानुरूपतः ॥

## षट्कर्मणि मालाभेदाः

तन्त्रशेखरे—वश्ये पद्माक्षमाला स्याच्छान्तौ शङ्खमयी भवेत् ।
निम्बारिष्टात्मिका स्तम्भे द्वेषणे प्रेतदन्तजा ।
अश्वदन्तोद्भवोच्चाटे मारणे खरदन्तजा ॥

तन्त्रे—रुद्राक्षैर्विहिता माला सर्वकर्मप्रसाधनी ।
निर्मिता शङ्खमालाभिर्धनं कीर्त्तिं च यच्छति ॥
पद्माक्षैः पुष्टिलक्ष्मीदा शत्रुनाशकरी तथा ।
पुत्रञ्जीवभवा पुत्रपशुधान्यसमृद्धिदा ॥
मुक्ताभी रचिता माला सौभाग्यं विपुलं श्रियम् ।
मन्त्रप्रत्यक्षदा सिद्धिं शान्तिकं चाथ पौष्टिकम् ॥
मुक्तिं च तनुते तद्वत् स्फाटिक्यप्यक्षमालिका ।

सारस्वते—पद्मरागोद्भवां लाभे पुष्कले च धने तथा ।
सौवर्णी राजती माला सर्वान् कामान् प्रयच्छति ॥
सारस्वते प्रवालोत्था वश्येऽधिकधनागमे ।
पापक्षयकरी कौशी रुद्राक्षाद्विकुशान्तकैः ॥
सर्वैरेतैर्विरचिता माला स्यान् मुक्तये नृणाम् ।
उच्चाटनेऽश्वदन्तानां माला प्रोक्ताऽश्ववालकैः ॥
खरदन्तैरधोभूतैर्मनुष्यस्नायुतन्तुना ।
ग्रथितैर्निर्मिता माला शत्रूणां नाशिनी मता ॥
प्रेतदन्तैरधोभूतैः कर्त्तव्या जपमालिका ।
साध्यदेहभवैः केशैः प्रोतव्या द्वेषकर्मणि ॥

### षट्कर्मणि जपसंख्यानियमः

शतं वाथ तदर्धं वा सर्वसाधारणे जपे ।
पञ्चाशद्भिः काम्यकर्मसिद्धिः स्याच्चतुरुत्तरैः ॥
अष्टोत्तरशतैः सर्वसिद्धिरुक्ता कृतस्रजा ।
मोक्षार्थी पञ्चविंशत्या पञ्चदशाभिचारिके ॥
मध्यमाङ्गुष्ठकाभ्यां तु जपेदाकर्षणेऽन्वहम् ।
अङ्गुष्ठतर्जनीभ्यां तु विद्वेषोच्चाटयोर्जपेत् ॥
जपेज्ज्येष्ठकनिष्ठाभ्यां शत्रुमारणकर्मणि ।
अङ्गुष्ठानामिकाभ्यान्तु जपेदन्येषु कर्मसु ॥

### षट्कर्मणि मालाग्रथननियमः

सूत्रं सम्पातयेद् विद्वान् मालाग्रथनहेतवे ।
सितरक्तपीतमिश्र-कृष्णधूम्राः प्रकीर्त्तिताः ॥
वर्णतो मन्त्रः संप्रोक्ता देवताः षट्सु कर्मसु ।
क्वचित् कल्पविशेषेण प्रयोगे ध्यानमीरितम् ॥
तत्सर्वं सम्यगालोच्य प्रयोगविधिमाचरेत् ।
आकर्षणं वश्यवत् स्यात् शुभं शान्तिवदीरितम् ॥
उग्रं मारणवज् ज्ञेयं कर्म सर्वत्र साधकैः ।

### षट्कर्मणि कुण्डविशेषफलम्

होमप्रयोगे कुण्डानि तत्तत्कर्मानुरूपतः ।
दर्शितानि बुधैः सम्यगीर्यते विधिवन्मया ॥

सर्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतम् ॥
पुत्रप्रदं योनिकुण्डमर्धेन्द्वाभं शुभप्रदम् ।
शत्रुक्षयकरं त्र्यस्रं वर्त्तुलं शान्तिकर्मणि ॥
छेदमारणयोः कुण्डं षडस्रं पद्मसन्निभम् ।
वृष्टिदं रोगशमनं कुण्डमष्टास्रमीरितम् ॥
कुण्डभेदफलं प्राहुरन्ये च मुनयोऽन्यथा ।
ऐन्द्र्यां स्तम्भे चतुष्कोणमग्निभागे भगाकृति ॥
चन्द्रार्धं मारणे याम्ये त्र्यस्रं द्वेषे तु नैर्ऋते ।
वारुण्यां शान्तिके वृत्तं षडस्र्युच्चाटनेऽनिले ॥
उदीच्यां पौष्टिके पद्मं रौद्र्यामष्टास्रि मुक्तिदम् ।
पञ्चास्रिकुण्डं वायव्यां भूतादिग्रहनिग्रहे ॥
अभिचारोपशान्त्यर्थमीशे सप्तास्रि विन्यसेत् ।
शुक्लमृत्स्ना च या भूमिर्ब्राह्मी सा परिकीर्त्तिता ॥
क्षत्रिया रक्तमृत्स्ना च हरिद्वैश्यापि कीर्त्तिता ।
कृष्णवर्णा तथा शूद्रा भूमिरुक्ता मनीषिभिः ॥
ब्राह्मी सर्वार्थसिद्धिः स्यात् क्षत्रिया राज्यदा मता ।
धनधान्यकरी वैश्या शूद्रा तु निन्दिता बुधैः ॥
कुण्डमध्ये त्रिकोणान्तःकर्णिकायां लिखेद् बुधः ।
शक्तिबीजं च परितस्तत्तद्भूतार्णमालिखेत् ॥
मूलमन्त्रस्य वर्णेन ग्रथितं वा विदर्भितम् ।
सम्पुटं वा तथा मन्त्री तत्तत्कर्मानुरूपतः ॥
साध्यनामाक्षरं मन्त्री लिखेन्नियतमानसः ।
अग्नेर्जिह्वा तथा प्रोक्ता गुणभेदेन कर्मसु ॥

## षट्कर्मणि अग्नेर्जिह्वाभेदाः

हिरण्या गगना रक्ता कृष्णान्या सुप्रभा मता ।
बहुरूपाऽतिरक्ता च सात्त्विक्यः शुभकर्मसु ॥
पद्मरागा सुवर्णान्या तृतीया भद्रलोहिता ।
लोहिता च ततः श्वेता धूमिनी च करालिका ॥
राजस्यो रसना वह्नेर्विहिता वश्यकर्मसु ।
विश्वमूर्त्ति-स्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ॥

लोहिता च करालाख्या काली तामस्य ईरिताः।
एताः सप्त नियुज्यन्ते क्रूरकर्मसु मन्त्रिभिः॥
अष्टाभिराज्याहुतिभिः प्रणवेन पृथक् पृथक्।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा॥
अनन्तरं जातकर्म स्यान्नामकरणं तथा।
बहिर्निष्क्रमणं पश्चादन्नप्राशनमीरितम्॥
चूडोपनयने भूयो महानाम्न्यं महाव्रतम्।
अथोपनिषदं पश्चाद् गोदानोद्वाहकौ मृतिः॥
शुभेषु स्युर्विवाहान्ताः क्रियास्ता क्रूरकर्मसु।
मरणान्ताः समुद्दिष्टाः वह्नेरागमवेदिभिः॥
प्रोक्षण्यादीनि पात्राणि स्वर्णरौप्यमयानि च।
ताम्राणि शान्तिकादौ च द्वेषणोच्चाटनादिषु॥
बहुवारकाक्षशोभाञ्जनान्यतमकादिषु।
श्रोत्रादिकल्पना वह्नेराख्याता तन्त्रवेदिभिः॥
मुखं मध्ये शिरो दक्षे पादावुत्तरदिग्गतौ।
इन्द्रेशयोर्मुखं शान्तौ दिश्यग्नेः काम्यकर्मणि॥
रक्षसो मारणे वायोराकर्षेऽन्यत्र मध्यतः।

## होमीयमुद्रा

रुद्रयामले—होमे मुद्रात्रयं प्रोक्तं मृगी हंसी च शूकरी।
हंसी स्यात् तर्जनीमुक्ता त्रिधा मुद्रा प्रकीर्त्तिता।
शान्तिके पौष्टिके चैव मारणोच्चाटने तथा॥
विद्वेषे स्तम्भने चैव वश्ये च परमेश्वरि।
शान्तिके च मृगी ज्ञेया हंसी पौष्टिककर्मणि॥
अभिचारे शूकरी स्याद् विद्वेषोच्चाटनादिषु।
होमाङ्गनिरूपणे—न देवाः प्रतिगृह्णन्ति मुद्राहीनामथाहुतिम्।
मुद्राहीनं तु यो मोहाद्धोतुमिच्छति मन्दधीः॥
यजमानं तथात्मानं पातयत्येव निश्चितम्।
होमश्चाग्निस्थितिं ज्ञात्वा कर्त्तव्यं कर्म निश्चितम्॥

## अग्निचक्रम्

अथ वक्ष्ये महादेवि होमकर्मसु सिद्धिदम्।

अग्निचक्रं वरारोहे सर्वचक्रेषु गोपितम् ॥
नवग्रहमयो वह्निस्ते च वह्निमया ग्रहाः ।
अतस्तेषां स्थितिं ज्ञात्वा वह्नौ होमं समाचरेत् ॥
शान्तिके पौष्टिके वृद्धौ क्रूरेष्वपि च कर्मसु ।
तेषां स्थितिक्रमं वक्ष्ये नक्षत्रेषु यथाविधि ।
सूर्यो बुधो भृगुश्चैव शनिश्चन्द्रो महीसुतः ।
जीवो राहुश्च केतुश्च नवैते देवि खेचराः ॥
त्रीणि त्रीणि च ऋक्षाणि रविभादीनि दापयेत् ।
सूर्यभाच्चन्द्रभं यावत् गणयेच्च महेश्वरि ॥
सूर्यादीनां फलं देवि शृणु वक्ष्ये यथाक्रमम् ।
आदित्ये तु भवेच्छोको बुधे चैव धनागमः ॥
शुक्रे लाभं विजानीयाच्छनौ पीड़ा न संशयः ।
चन्द्रे लाभो महादेवि भौमे चैव तु बन्धनम् ॥
गुरुणा च धनप्राप्तिः राहौ हानिस्तथैव च ।
केतुना जायते मृत्युः फलमेवं महेश्वरि ॥
एवं ज्ञात्वा महेशानि होमकर्म समाचरेत् ।
सौम्यग्रहमुखे यस्मिन् दिने विंशतिराहुतिः ॥
आरम्भः सोम्यहोमस्य दिने तस्मिन विधीयते ।
क्रूरहोमस्तथा देवि क्रूरग्रहमुखे भवेत् ॥
इति ज्ञात्वा महेशानि काम्यहोमं समाचरेत् ।
अन्यथा क्रियमाणे तु नैष्फल्यं चात्मनाशनम् ॥

गणेश्वरविमर्शिण्याम्तु विशेषान्तरमुक्तम्—

नव कोष्ठं समालिख्याप्येषणैर्ऋक्षयोः क्रमात् ।
वारुण्यं(?)दीर्वायुवह्न्योर्दक्षिणोत्तरयोर्न्यसेत् ॥
सूर्यादीन् मध्यकोष्ठे तु केतुं न्यस्य फलं दिशेत् ।
आदित्येऽर्थं भवेच्छोको बुधे धनसमागमः ॥
शुक्रस्थानेऽर्थलाभः स्याच्छनिर्हानिकरो भवेत् ।
चन्द्रे लाभं विजानीयाद् भौमे च वधबन्धनम् ॥
गुरुः स्यादर्थलाभाय राहुर्हानिकरो मतः ।
केतुना मृत्युमाप्नोति ह्यग्निचक्रे सदैव हि ॥

त्रयं त्रयं च गणयेत् सूर्यर्क्षाद्दिनभावधि ।
कुण्डे च स्थण्डिले चैव होतव्यं देशिकोत्तमैः ॥
नित्ये नैमित्तिके दुर्गाहोमादौ न विचारयेत् ।
ब्रह्मयामले—अथ वह्नेः स्थितिं वक्ष्ये होमकर्मसुसिद्धये ।
स्वर्गलोके च पाताले भूमौ तिष्ठति हव्यराट् ।
तत्प्रकारमहं वक्ष्ये साधकानां हिताय च ॥
धृतिश्च तिथिवारांश्च सप्तद्वीपं चतुर्युगम् ।
एकीकृत्य हरेद् भागं त्रिभिः शेषेण पावकः ॥
एकेन वसति स्वर्गे द्वये पाताल एव च ।
शून्ये च मर्त्यलोके स्यादेवं वसति पावकः ॥
उत्पातः स्वर्गलोकस्थे पातालस्थे धनक्षयः ।
मर्त्यलोके स्थिते वह्नौ होमोऽभीष्टफलप्रदः ॥
इत्थं विज्ञाय मन्त्रज्ञो होमकर्म समाचरेत् ।

## षट्कर्माणि स्रुक्स्रुवसमिल्लक्षणम्

तन्त्रे—सौवर्णौ स्रुक्स्रुवौ स्यातां सौम्यकर्मणि सर्वतः ।
भवेतामायसावेतौ स्तम्भनादिषु कर्मसु ॥
लौकिकाग्नौ शान्तिकं स्याद् वश्यं लौकिकपावके ।
स्तम्भनाख्यं भवेत् कर्म वटजे जातवेदसि ।
विद्वेषोऽक्षशुचौ ज्ञेयः श्मशानो खर्बुधे स्मृते(?) ॥
उच्चाटमारणे प्रोक्ता षट्कर्मज्वलना इमे ।
वश्ये दाड़िमपुष्पाणि शान्तौ स्युर्दूर्वया सह ॥
समिधो गोघृतस्नाताः स्तम्भने राजवृक्षजाः ।
मेषीघृतेन संयुक्ता द्वेषे क्षतरुजा मताः ॥
उच्चाटने रसालोत्थाः कटुतैलेन संयुताः ।
मारणे खादिराः प्रोक्ताः कटुतैलेन संयुताः ।
होमद्रव्यमिदं प्रोक्तं षट्सु कर्मसु मन्त्रिभिः ॥
तथा—घृतहोमे धनावाप्तिः सिद्धार्थैः कीर्त्तिरुत्तमा ।
किंशुकैः सर्वकामाप्तिः फलहोमे सुखं भवेत् ॥
गुड़ेन प्रियता प्रोक्ता चम्पकैः पाटलै रमा ।
पुत्रहोमे सुतावाप्तिः करवीरैस्त्रियो वशाः ॥

आयुष्करी भवेद् दूर्वा गुडुची रोगशान्तिदा ।
तिला अपि तथा प्रोक्ताः सौभाग्यं गन्धहोमतः ॥
श्रीफलैर्बिल्वपत्रैश्च तथा जलरुहैरपि ।
राज्यभ्रष्टस्य राज्याप्तिर्मल्लिका कीर्त्तिदा मता ॥
कर्णिकारैः किंशुकैश्च भवेयुर्विबुधा वशाः ।
काशमर्दैर्नृपा वश्याः कृतमालैर्विशो वशाः ॥
शूद्राः स्युः पाटलैर्वश्या नीलपद्मैर्भवेद्रमा ।
जातीपुष्पैर्भवेद् वाणी मधुरैरिष्टसम्पदः ॥
अश्वत्थोदुम्बरप्लक्षसमिद्भिर्वाञ्छितास्तयः ।
इष्टद्रव्यैर्भवेदिष्टं यवैश्च व्रीहिभिस्तथा ॥
माषै रिपूणां मूकत्वं कोद्रवैर्व्याधिसम्भवः ।
कलापहोमतोऽरीणां भीतिः स्यान्महती ध्रुवम् ॥
विभीतकसमिद्भिः स्यादुन्मत्तं द्विषतां कुलम् ।
शाल्मलेः समिधा शत्रोः पश्चान्नाशो भवेद् ध्रुवम् ॥

## होमद्रव्याणि

फेत्कारिणीतन्त्रे—अथ द्रव्याणि वक्ष्यामि तत्तत्कर्मानुरूपतः ।
शान्तिके तु पयःसर्पिस्तिलक्षीरक्रमेण तु ॥
अमृताख्या लता चैव पायसं तत्र कीर्त्तितम् ।
पौष्टिके विल्वपत्रैश्च जातीपुष्पैर्नृपो भवेत् ।
कन्यार्थी जुहुयाल्लाजैः श्रीकामः कमलैस्तथा ॥
दध्ना च श्रियमाप्नोति अन्नैरन्नं घृतप्लुतैः ।
क्षीरेण सर्पिषा वापि कमलैर्मधुनाप्लुतैः ॥
समृद्धयैर्जुहुयान् मन्त्री महानैर्धन्यशान्तये ।
लक्षहोमाल्लभेच्छान्तिं घृतविल्वतिलैर्निधिम् ॥
आकर्षणे तु लवणं प्रियङ्गुर्बिल्वकं फलम् ।
जातीपलाशकुसुमैः सर्वैरेकैकमेव वा ॥
राजीलवणकैर्वश्यं वश्यं वा पौष्टिकोदितैः ।
वश्यार्थी जातीकुसुमैराकृष्टौ करवीरजैः ॥
कार्पासनिम्बैस्तक्राक्तैर्नरकेशैस्तथापि वा ।
एकीकृत्य हुनेन् मन्त्री शत्रुमारणकाङ्क्षया ॥

जुहुयात् सार्षपैस्तैलैरथवा शत्रुमारणे ।
रोहीबीजैस्तिलोपेतैरुच्चाटे जुहुयान्नरः ॥
तुषकण्टकसंयुक्तैर्बीजैः कार्पासिकैरपि ।
सर्षिपैस्तिलसंमिश्रैर्हुनेत् सर्वाभिचारके ॥
काकोलूकच्छदैः क्रूरैः कारस्करविभीतकैः ।
मरिचैः सर्षपैः सिद्धैरर्कक्षीरैः कटुत्रयैः ॥
कटुतैलैः स्नुहीक्षीरैः कुर्यान् मारणकर्मणि ।

शत्रुनाशकरहोमे अग्नेः कर्णादिहोमाच्छत्रोः कर्णादिनाशः । तदुक्तम्—

वह्नेः शिरसि नाशायां श्रोत्रेष्वक्षिषु वा तथा ।
जुहुयाच्चेत् तदा क्षीप्रं तत्र (शत्रुं वि)नाशयेदिति ॥

अग्नेः कर्णादिलक्षणं तु पूर्वमेवोक्तम् । तथा—

आयुष्कामो घृततिलैर्दूर्वाभिश्चाम्रपल्लवैः ।
पयसाक्तैराम्रपत्रैर्ज्वरं सद्यो विनाशयेत् ॥
गुडूची मृत्युजयने तथा शान्तौ गजाह्वयोः ।
गौरैस्तु सर्षपैर्हुत्वा सद्यो रोगं हरेज्ज्वरी ॥
वृष्टिकामो वेतसीभिः समिद्भिः पत्रकैस्तथा ।
हुत्वा पुष्टिमवाप्नोति पुत्रञ्जीवैस्तु पुत्रकम् ।
घृतगुग्गुलहोमेन वाक्पतित्वं प्रजायते ।
मल्लिकाजातिकुसुमैर्नागपुन्नागसम्भवैः ॥
पुष्पैः सरस्वतीसिद्धिस्तथा सर्वार्थसाधनम् ।
पयसा लवणैर्वापि हुनेद् वृष्टिनिवारणे ॥
रक्तपुष्पैरपामार्गैरङ्कोलैश्च सुभद्रकैः ।
एभिर्मधुरसंयुक्तैर्मन्त्री कुर्यात् तु वश्यकम् ॥
वातोद्धतैः शुष्कपत्रैः काष्ठैरशनिपातितैः ।
उष्ट्रास्थिना वा चाङ्गारैः शत्रोरुच्चाटनं भवेत् ॥
दूर्वागुडूचीगव्येन सर्पिषा तिलतण्डुलैः ।
अन्नैः समिद्भिः पालाशैः शान्तिं कुर्याद् विचक्षणः ॥

तन्त्रान्तरे—सौम्यकर्मणि संप्रोक्ता हरिद्रा जलसंयुता ।

उष्णोदकं समारीचं मारण-स्तम्भयोर्भवेत् ॥
द्वेषोच्चाटनयोः प्रोक्तं जलं मेषसृजायुतम् ।

तर्पणद्रव्यमाख्यातमिदमागमपारगैः ॥
सौम्यकर्मणि मन्त्रज्ञः सुखासीनः प्रतर्पयेत् ।
जानुभ्यामवनीं गत्वा तर्पणं स्तम्भने भवेत् ॥
द्वेषादावेकचरणस्तर्पयेत् साधकाग्रणीः ।
वश्यशान्त्योः स्वर्णपात्रं मृत्पात्रं स्तम्भने मतम् ॥
विद्वेषे खादिरं पात्रमुच्चाटे लौहनिर्मितम् ।
मारणे कुक्कुटाण्डं स्यात् पात्राणीमानि तर्पणे ॥

इति सामान्यप्रयोगाः

### अथ विशेषप्रयोगाः

फेरवीये—विद्याकामेन होतव्यं तिलाज्यं मधुसंयुतम् ।
सिद्धसारस्वते—बन्धूकपुष्पहोमेन दासवत् कुरुते नृपान् ।
सर्पिर्लवणहोमेन चाकर्षयति कामिनीम् ॥
वकुलप्रसूनैर्होमात् सौभाग्यं लभते नरः ।
मल्लिकाजातिपुन्नागैः कदम्बैः पुष्टिमाप्नुयात् ॥
चन्दनागुरुकाश्मीर-कर्पूरैर्होमतः पुनः ।
मन्त्री नीलसरस्वत्याः सर्वाभीष्टमवाप्नुयात् ॥
राजवृक्षप्रसूनस्य होमात् सम्पदमाप्नुयात् ।
सम्पूज्य मूलमन्त्रेण विल्वपत्रैर्घृतान्वितैः ॥
सहस्रं प्रत्यहं हुत्वा प्राप्नोति परमां गतिम् ।
घृताक्तमालतीपुष्पहोमाद् द्रुतकविर्भवेत् ॥
सुरेन्द्रसंहितायाम्—विद्याकामेन होतव्यं पद्मैर्मधुरलोलितैः ।
त्रिमध्वक्तैस्तिलैर्हुत्वा धने वैश्रवणो भवेत् ॥
रक्तपुष्पं त्रिमध्वक्तं हुनेदष्टशतं सुधीः ।
राजानो वशमायान्ति क्षणार्धेन न संशयः ॥
क्षीराक्ततगरैर्होमान् महतीं कवितां लभेत् ।
विल्वपत्रसहस्रैस्तु यावद् वर्षं दिने दिने ॥
परमां गतिमाप्नोति देवानामपि दुर्लभाम् ।
हविष्याशी मुक्तकेशो जपेदयुतसंख्यया ॥
गद्यपद्यमयी वाणी सभायां तस्य जायते ।
पद्मावतीमनुं जप्त्वा सहस्रं प्रयतोऽब्रवीत् ॥

चतुष्पथे बलिं दद्यात् स स्याद् द्रुतकविर्ध्रुवम् ।
शताभिजप्तमात्रेण रोचनातिलकं नरः ॥
कृत्वा पश्यति यं मन्त्री तं कुर्याद् दासवद् वशम् ।
उदयात् पूर्वमारभ्य जपेदस्तं दिनावधि ॥
एकविंशद्दिनं यावन्निशि हर्म्ये बलिं हरेत् ।
कहकहपदं ब्रूयात् कालिकेति पदं ततः ॥
पिशाचिपदमुच्चार्य पिण्डं गृह्ण द्विठ द्वयम् ।
इति मन्त्रैर्बलिं दत्त्वा सर्वज्ञः साधको भवेत् ॥

मत्स्यसूक्ते तु—विद्याकामेन होतव्यं पायसैर्मधुसंयुतैः ।
धनकामेन होतव्यं तिलाज्यं मधुसंयुतम् ॥
होमस्य नियमस्तन्त्रे कथितोऽप्ययुतावधि ।
अयुतं विल्वपत्रेण मधुत्रययुतेन च ॥
हवनान्नात्र सन्देहो वाणी सर्वविधा भवेत् ।
तत्पत्रलक्षहोमेन श्रिया साक्षाद् धनेश्वरः ॥
रक्तचन्दनहोमेन सर्वज्ञो जायते नरः ।
श्वेतचन्दनहोमेन साक्षाद् भूमिपुरन्दरः ॥
रक्तचन्दनहोमेन साक्षाद् भूमिवृहस्पतिः ।
यवानां लक्षहोमेन संस्कृतां वाप्यसंस्कृताम् ॥
सर्वभाषां परिज्ञाय सर्वज्ञो जायतेऽचिरात् ।
अश्रुतान्यपि शास्त्राणि व्याचष्टे नात्र संशयः ॥
शालमत्स्यादिहोमेन शिवप्रतिनिधिः स्मृतः ।
लक्षमात्रेण होतव्यं तिलाज्येन सुरेश्वरि ॥
साधकः सर्वविद्यानां पारगो भवति ध्रुवम् ।
प्रातर्मातृकया सार्धं विद्यया च त्रिजप्तया ॥
पानाच्च सर्वविद्यानां मासमात्रेण साधकः ।
उत्थाय चोत्तरे यामे कुण्डलीमासनं कृतम् ॥
चिन्तयेदुग्रतारां वै मुक्तिभागी भवेन्नरः ।
शान्त्यै कुन्देन्दुधवलां चिन्तयेत् साधकोत्तमः ॥
धूम्राभां पूजयेद् वायुमण्डले पूजिता तथा ।
उन्मादयति शत्रूणां बलं बुद्धिं न संशयः ॥

सुरेन्द्रसंहितायाम्—कुलाकुलसमुद्भूतममृतानन्दमर्चयेत् ।
सूर्यकोटिसमं सूत्रं वाटमध्ये व्यवस्थितम् ॥
यजेत् कुलामृतं दत्त्वा लिङ्गयोनिसमुद्भवम् ।
तथा कुलं यजेल्लिङ्गे कुण्डलीदृढबन्धनात् ॥
आधारपद्ममध्ये तु द्विपदे द्विपदालये ।
षोडशारे यजेल्लिङ्गे द्वादशे मणिपूरके ॥
हृदये दशपत्रे तु द्वादशार्धे चतुर्दले ।
कण्ठे भाले यजेद् देवीं जिह्वाललनसङ्कुले ॥
धवलागारमध्ये तु ब्रह्मचर्ये रतो नरः ।
पूजयेद् धवलैर्देवीं श्वेतवस्त्रावगुण्ठनैः ॥
धवलैरेव नैवेद्यैर्दधिक्षीरौदनादिभिः ।
सङ्कल्पैर्वा विधायेत्थं ध्यायेद् वागीश्वरीं पराम् ॥
गच्छन्तीं ब्रह्ममार्गेण लिङ्गभेदक्रमेण तु ।
विसर्गस्थामृतं दिव्यं क्षीरधारासमुद्भवम् ॥
पीत्वा कुलामृतं तत्र पुनरेव विशेत् कुलम् ।
पुनरेव कुलं गच्छेद् द्वादशान्ते निवेशयेत् ॥
सहस्रारे महापद्मे वाग्भवं पूर्णचन्द्रकम् ।
ब्रह्मग्रन्थिं ततो भित्वा दत्त्वा सप्ताष्टधारया ॥
लम्बिकां ब्रह्ममार्गेण तालुमूले प्रवेशयेत् ।
जिह्वामापूर्य तां विद्यां मातृकावर्णरूपिणीम् ॥
वहिर्गतां वर्णरूपां जिह्वाग्रे दीपरूपिणीम् ।
आमूलाद् ब्रह्मरन्ध्रान्तं तथा जिह्वाग्रदेशगः ॥
वाग्भवाद्यां महाविद्यां दीपाकारां विचिन्तयेत् ।
हस्तयोः पादयोर्विद्यां तथा नाडीत्रयेषु च ॥
आधारात् तु समुत्थाप्य वागीशीं द्वादशे नयेत् ।
द्वादशाधारमादाय तद्ग्रन्थिं परिभेदयेत् ॥
तस्माज्जिह्वाग्रमानीय दीपाकारां विचिन्तयेत् ।
लक्षमेकमिदं जप्त्वा सर्वपापानि निर्दहेत् ॥
ततश्चराचरं सर्वं ज्ञात्वा सर्वज्ञतां लभेत् ।
ततो जपेन् महाविद्यां वाक्पतिर्जायते नरः ॥

वादे सदसि या वाक्स्तम्भिनी प्रतिवादिनाम् ।
तत्पण्डितघटाटोप-तेजःप्रतिहतप्रभः ॥
सत्तर्कपदवाक्यार्थ-शब्दालङ्कारसारवित् ।
जिह्वायां न्यसनादेव मूकोऽपि सत्कविर्भवेत् ॥
सुकुमारतरस्फार-शब्दालङ्कारसारवित् ।
वातोद्धूतसमुद्रोर्मीमालातुल्यैरुपन्यसेत् ॥
पद्गुल्फैर्महाकाव्यवरकारयिता भवेत् ।
अव्याहता मतिः शास्त्रे विजयो वाक्पतेरिव ॥
बालकस्य तु जिह्वायां त्रिदिनाभ्यन्तरे लिखेत् ।
सुवर्णमय्या लेखन्या मधुना श्वेतदूर्वया ॥
वाग्भवाद्यां लिखेद् विद्यां समाराध्य प्रजप्य च ।
स एव पण्डितः श्रीमान् न तु मूर्खः कदाचन ॥
एतद्वागीश्वरीविद्यां ध्यालिख्य(बालमू)र्द्धनि ।
करं दत्त्वा जपेद् विद्यां शतमष्टोत्तरं नरः ।
सोऽपि श्लोकानशेषांस्तु करोति वाक्पतिर्यथा ॥

वीरचूडामणौ—पायसं सर्वकार्येषु चोत्तमानि फलानि च ।
नीलोत्पलस्य होमेन वाक्पतिर्जायते नरः ॥
हयारिकुसुमैर्हुत्वा सर्वसिद्धिः प्रजायते ।
जवाकुसुमहोमेन कुरङ्गाक्षी वशी भवेत् ॥
मालत्या महती प्रज्ञा कदम्बैः कालचन्दनम् ।
रक्तोत्पलैर्महालक्ष्मीस्तम्भने पुष्पचम्पकम् ।
विल्वपत्राणि रम्याणि होमयेच्छान्तिकर्मणि ॥
केवलं तिलहोमेन सर्वपापैः प्रमुच्यते ।
दूर्वाहोमेन दीर्घायुर्वतसैर्वृष्टिदो भवेत् ॥
अष्टधा नारिकेलैस्तु होमं कुर्यात् सुसाधकः ।
गृहे तस्य स्थिरा लक्ष्मी राजानोऽनुचरा इव ॥
कदलीफलहोमेन देवी सन्तुष्यते क्षणात् ।
कपित्थैर्मातुलिङ्गैश्च सर्वरोगविनाशनम् ॥
विभीतकेन निम्बेन शत्रुं मारयते क्षणात् ।
सर्षपं राजिलवणं मरीचं हिङ्गुरर्कजम् ॥

मारणे चाभिचारे च तत्तद्द्रव्यमुदाहृतम् ।
एकैकं फलपुष्पादि द्राक्षा चैव तु पञ्चकम् ॥
गुग्गुलं बदरीतुल्यं कपित्थं तु त्रिधा स्मृतम् ।
चतुर्धा मातुलिङ्गं तु शतमात्रं तिलाः स्मृताः ॥
मारीचेन प्रमाणेन चन्द्रं चोरं च कुङ्कुमम् ।
सर्षपं राजिकं चैव द्वात्रिंशत् तु प्रमाणतः ॥
लवणं कर्षमात्रं तु हिङ्गु' गुञ्जाचतुष्टयम् ।
कर्षमात्रं घृतं चैव तद्वेव दुग्धमुच्यते ॥
शुक्तिमात्रं दधि चापि पलमात्रं तु धान्यकम् ।
त्रिंशिका चैव दूर्वापि वे(रे)तसं द्वादशाङ्गुलम् ॥
सर्वैस्त्रिमधुरोपेतैः शान्तिवश्यादिसाधने ।
कटुतैलप्लुतैर्द्रव्यैर्मारणोच्चाटनादिके ॥
कौक्कुरं रुरुमांसं च छागलं महिषं तथा ।
अयुतं होमयेत् कुण्डे धने वैश्रवणो भवेत् ॥
कपोतं गृध्रणीमांसं उलूकं चैव वायसम् ।
कुक्कुटं चैव जम्बूकमभिचारे पलं स्मृतम् ॥

वीरतन्त्रे—जिह्वायां भावयेद्व यस्तु तारिणीं दीपसन्निभाम् ।
बृहस्पतिसमस्तस्य कविता शुक्रनिर्मिता ॥

नीलतन्त्रे—ब्राह्मे मुहूर्त्ते उत्थाय कृतावश्यः सुसंयतः ।
जिह्वायां भावयन् विद्यां तेजोरूपां जपेत् सुधीः ॥
अमृतस्यन्दिनी तस्य वाणी सर्वविधा भवेत् ।

एकवीराकल्पे—प्रातर्विद्यां विभाव्यैव जिह्वायां दीपरूपिणीम् ।
मातृकासहितां विद्यां त्रिरावृत्य जलं पिबेत् ॥
जलपानविधानेन मूकोऽपि सुकविर्भवेत् ॥

मत्स्यसूक्ते—जिह्वायां चिन्तनादेव त्रिकालज्ञो भवेन्नरः ।
यस्तु विद्यामभेदेन चिन्तयेत् साधकोत्तमः ॥
जीवन्मुक्तो विमुक्तश्च अन्ते सोऽपि भवेद्व ध्रुवम् ।
मधुना तर्पणं देव्या सर्वकामफलप्रदम् ॥
अष्टसिद्धिकरं साक्षात् महापातकनाशनम् ।
हविष्याशी मुक्तकेशो जपेदयुतमादरात् ॥

गद्यपद्यमयी वाणी तस्य सर्वविधा भवेत् ।

सिद्धसारस्वते—शताभिजप्तमात्रेण रोचनातिलकं नरः ।

कृत्वा पश्यति यं मन्त्री तं कुर्याद् दासवद् वशम् ॥

## देहसिद्धिः

मत्स्यसूक्ते— देव्युवाच—

भगवन् सर्वतत्त्वज्ञ लोकानुग्रहकारक ।

केनोपायेन देवेश देहसिद्धिः प्रजायते ।

तन्मे कथय सर्वज्ञ यदि स्नेहोऽस्ति मां प्रति ॥

ईश्वर उवाच—

देवेशि भक्तिसुलभे चौषधं कथयामि ते ।

न प्रकाश्यमिदं क्वापि त्रिषु लोकेषु दुर्लभम् ॥

कुमारीं छत्रधारीं च राजमाषेण पेषयेत् ॥

एकवर्णगवां क्षीरै रम्भाबीजरसेन च ।

प्रभाते लेपयेदङ्गे वश्यसिद्धिः प्रजायते ॥

श्वेतापराजितामूलं मधुना सह भक्षयेत् ।

श्वेतकुष्ठविनाशश्च लेपयित्वा रवेर्दिने ॥

अशोकस्य फलं पुष्पमेरण्डस्य फलैः सह ।

निर्मन्थयेत् पूर्वदिने भक्षयेदपरेऽहनि ॥

वाताजीर्णभवो रोगस्तस्य देहे न जायते ।

फेत्कारिणीतन्त्रे—पुष्करिण्यां जले गाधे यष्टिकाष्ठं तमोग्रहे ।

यत्नेनानीयते तूर्णं की·········कारयेत् ॥

तेनैव मधुनाक्तेन पद्मिनीपत्रमात्रके ।

लिखेद् वज्रावलीमध्ये मूलमन्त्रं तु सिद्धिदम् ॥

अमुकं कुरु मायान्ते वदेत् साधकसत्तमः ।

तत्कुण्डे चतुरस्रे तु निक्षिप्य जुहुयादपि ॥

सत्पत्रं क्षीरनीराक्तं पद्मानां लोहितत्विषाम् ।

प्रणवं पूर्वमुच्चार्य पद्मे युगलमेव च ॥

महापद्मे पदं ब्रूयात् पद्मावति पदं ततः ।

हुं हुं स्वाहेति मन्त्रेण यथापूर्वं बलिं हरेत् ॥

एवं यः कुरुते कर्म स स्याद् द्रुतकविर्ध्रुवम् ।

अर्धरात्रे ततो नित्यं बलिं दद्याच्चतुष्पथे ॥
प्रणवं पूर्वमुल्लिख्य हृल्लेखां च ततःपरम् ।
एकजटे पदान्ते तु महाशब्दमुदीरयेत् ॥
यक्षाधिपदमाभाष्य पतये च ततो मया ।
उपनीतं पदं चोक्त्वा बलिं गृह्णेति च द्विधा ॥
गृह्णापय द्विधा चोक्त्वा मम सर्वपदं ततः ।
शान्तिं कुरु पदं चैव परविद्यामनन्तरम् ॥
द्विधाकृष्ये(त्वे)ति च ब्रूयात् त्रुट छिन्धीति च द्विधा ।
सर्वादि च ततो जगद्वशमानय शब्दतः ॥
माया स्वाहेति मन्त्रोऽयं बल्यादौ वृद्धिसिद्धिदः ।
परसैन्यग्रहारिष्ट-रोगकृत्यादिनाशनः ॥

नीलतन्त्रे—प्रयोगे बलिमन्त्रोऽयं प्रयोगान् साधयेद् यदि ।
अर्धरात्रे ततो(गते) नित्यं बलिं दद्याच्चतुष्पथे ॥
परसैन्यग्रहारिष्ट-रोगकृत्या-विनाशनः ।
प्रणवं पूर्वमुच्चार्य चोग्रतारे ततः परम् ॥
विकटदंष्ट्रे परपक्षं क्षोभ(मोह)यद्वयमुच्चरेत् ।
खादयद्वयं पचमथ तथा द्वयं द्वयं वदेत् ॥
ये मां हिंसितुमुद्यतास्तथा निन्दितुमुद्यताः ।
योगिनीचक्रसहितैस्तान् नाशय हुं फट् स्वाहा ॥

परविद्यामाकर्षय छेदय स्वाहा कपिले गृह्ण गृह्ण स्वाहेति । फेत्कारिण्याम्—
अथवा मधुलाजाभ्यां जिह्वायां बालकस्य च ।
नाड़ीछेदात् तदा पूर्वं लिखेद्धेमशलाकया ॥
मूलमन्त्रं लिखेन् मन्त्री य(स्यो)द्वोष्ठे श्वेतदूर्वया ।
वाक्योच्चारणतो बालो वाग्मी द्रुतकविर्भवेत् ॥

महोग्रताराकल्पे मत्स्यसूक्ते च—
जन्मसंस्कारकं सद्यः पुत्रे जाते प्रशस्यते ।
जिह्वायान्तु लिखेन् मन्त्रं यज्ञदारुशलाकया ॥
वारत्रयं तु सम्पूज्य दक्षिणेनैव पाणिना ।
मन्त्रमुच्चार्य प्रत्येकं पङ्क्तिं कुर्यात् सुशोभनाम् ॥
आदौ संस्कारः कर्त्तव्यस्तदन्ते विलिखेन् मनुम् ।

गन्धचन्दनपुष्पैश्च पूजयेत् तारिणीं शिवाम् ॥
उत्तराभिमुखो भूत्वा स्थापयेत् पीठमुत्तमम् ।
पूजयेत् तारिणीं देवीं नानाभक्ष्यैः सुशोभनैः ॥
कविर्वाग्मी भवेत् पुत्रः सत्यवादी जितेन्द्रियः ।
कुशमूलेन मधुना लिखेन् मन्त्रं प्रयत्नतः ॥
पितुर्भ्राताऽथवा मन्त्रं मातुर्भ्राताऽथवा पुनः ।
पिता वापि लिखेन् मन्त्रं नान्य एव कदाचन ॥
अथ भ्राता प्रशस्तश्च चाग्रगश्च भवेत् सदा ।
तस्माद् देवि न्यसेन् मन्त्रं सर्वकामफलप्रदम् ॥
मातुः क्रोडे तु संस्थाप्य दर्भानास्तीर्य यत्नतः ।
शान्तिं कुर्याद् बालकस्य साधकैः सह संयुतः ॥
मातुः सव्ये तु कर्णे च ततस्तोत्रं समाचरेत् ।

## अथ स्तोत्रम्

मातर्देवि नमस्तेऽस्तु ब्रह्मरूपधरेऽनघे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
माहेशि वरदे देवि परमानन्दरूपिणि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
कौमारि सर्वविद्येशे कौमारक्रीडने परे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
विष्णुरूपधरे देवि महागरुडवाहिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
वाराहि वरदे देवि दंष्ट्रोद्धृतवसुन्धरे ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
शक्ररूपधरे देवि शक्रादिसुरपूजिते ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
चामुण्डे मुण्डमालासृक्चर्चिते विघ्ननाशिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
महालक्ष्मि महोत्साहे महाक्षोभविनाशिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥
मितिमातृमये देवि मितिमातृबहिष्कृते ।

एके बहुविधे देवि विश्वरूपे नमोऽस्तु ते ॥
एतत् स्तोत्रं पठेद् यस्तु कर्मारम्भेषु संयतः ।
विदग्धां वा समालोक्य तस्य विघ्नो न जायते ॥
स्तुत्वा जप्त्वा महामन्त्रं ब्राह्मणान् भोजयेत् ततः ।
देव्युवाच—जिह्वामार्जनकं द्रव्यं(रक्षा देहस्य ?) कीदृशी ।
पुत्ररक्षा च किं देव वेश्मरक्षा किमौषधम् ।
श्रोतुमिच्छाम्यहं देव कथ्यतां मदनुग्रहात् ॥

ईश्वर उवाच—

कृष्णाजयन्तीमूलं च अपामार्गस्य मूलकम् ।
लेपयित्वा च जिह्वायां षष्ठे च दिवसे सुतम् ॥
श्वेतापराजितामूलमर्कस्य दक्षिणत्वचम् ।
रक्षाद्रव्यं च जानीयाद् यज्जन्मदिवसे कृतम् ॥
विप्रदारुपद्ममूलशुष्कगोमुण्डमेव च ।
स्थापयेद् वामदेशे च नास्ति किंचिद् भयं तदा ॥
जम्बूत्वचं शिम्बिपत्रं जातानां धारयेच्छिरे ।
राक्षसानां भयं नास्ति रोगकृत्यादिकं तथा ॥
चतुष्कोणे तु गेहस्य रोपयित्वा तु पिप्पलम् ।
बहिः संस्थापयेद् द्वारे बध्नीयाच्छगलं कपिम् ॥
रम्भामूलद्वयं रोहेत् षष्ठे च दिवसे निशि ।
तत्रैव स्थापयेत् खड्गं ब्राह्मणं च सुशोभनम् ॥
वृद्धां स्त्रियं प्रतिष्ठाप्य श्यालं वा विनयान्वितम् ।
जयन्त्या स्वरसेनैव कुमारं स्नापयेत् ततः ॥
जयन्तीघृतयोगेन चोदकेन च सेचयेत् ।
अष्टपत्रे प्रतिष्ठाप्य स पुत्रो मतिमान् भवेत् ॥
नागेश्वरस्य मूलं च त्वचमानीय यत्नतः ।
चूर्णं कृत्वा घृताक्तं च वर्त्तिकां कारयेत् ततः ॥
दीपं कृत्वा तु मन्त्रज्ञः पुत्रनाड़ीं तु छेदयेत् ।
सुविनीतो भवेत् पुत्रो मेधावी च गुणान्वितः ॥
स्थापयेद् द्वारदेशे च अशोकदक्षिणत्वचम् ।
एतानि स्थापयित्वा तु जम्बुत्वचं सलोमकम् ॥

यः स्थापयेत् सदा द्वारे तस्य विघ्नविनाशनम् ।
निशाभागे त्रयोदश्यां पूजयित्वा तु तारिणीम् ॥
अर्कत्वचं करे धृत्वा स्पर्शयेत् तारिणीं शिलाम् ।
काममुद्दिश्य यत्नेन लभते नात्र संशयः ॥
चूतमूलं करे धृत्वा यः स्पृशेत् तारिणीं मनुम् ।
त्रयोदश्यां विशेषेण सर्वकामफलं लभेत् ॥

### स्पर्शमन्त्रः

कुल्लुके तारमारे च परमानन्ददायिनि ।
संसारे दुस्तरे घोरे त्राहि मां परमेश्वरि ॥
सर्वता(पा)पविनाशे च सर्वपापविनाशिनि ।
चित्कलाज्ञानरूपे च त्राहि मां परमेश्वरि ॥

फेत्कारिणीतन्त्रे—श्मशानाङ्गारमादाय मङ्गले वासरे निशि ।
कृष्णवस्त्रेण संवेष्ट्य बध्नीयाद् रक्ततन्तुना ॥
शताभिमन्त्रितं तच्च निक्षिपेद् वैरिवेश्मनि ।
सप्ताहाभ्यन्तरे तेषामुच्चाटनमिदं महत् ॥
नरास्थनि लिखेन् मन्त्रं क्षीरयुक्तं हरिद्रया ।
सहस्रं परिसंजप्य निशायां रविवासरे ॥
क्षिप्यते यस्य गेहे तु मृत्युस्तस्य त्रिमासतः ।
क्षेत्रे तु शस्यहानिः स्याद् जवहानिस्तुरङ्गमे ॥
धनहानिर्धनागारे ग्राममध्ये तु तत्क्षयः ।
द्वेष्यद्वेषकयोर्नाम्नि तस्य द्वेषो महान् भवेत् ॥

### अथ वीरप्रयोगाः

गन्धर्वतन्त्रे—पृथ्वीमृतुमतीं वीक्ष्य सहस्रं यदि नित्यशः ।
तदा वादी सुसिद्धान्तहतः क्षितितलं विशेत् ॥
पर्वते हस्तमारोप्य निर्भयो यतमानसः ।
कवितां लभते सोऽपि चामृतत्वं च गच्छति ॥

नीलतन्त्रे—महाचीनद्रुमलतावेष्टितः साधकोत्तमः ।
रात्रौ यदि जपेन् मन्त्रं सैव कल्पलता भवेत् ॥
तिथिक्रमेण संख्याभिर्लताभिर्वेष्टितो यदि ।
तदा मासेन सिद्धिः स्यात् सहस्रजपमानतः ॥

अष्टम्यां च चतुर्दश्यां द्विगुणं यदि जप्यते ।
तदैव महती सिद्धिर्देवानामपि दुर्लभा ॥
महाचीनद्रुमे बीजं लिखित्वा कुङ्कुमेन च ।
तत्पार्श्वे साध्यमालिख्य ताड़येद् द्वष्टिवृष्टिभिः ॥
तत्र गच्छति कामार्ता यत्र तिष्ठति साधकः ।
महाचीनद्रुमरसेनाक्तं पिण्डं विधाय च ॥
यन्नाम्ना दीयते देवि सोऽचिरान् मृत्युमर्हति ।
महाचीनद्रुमसूनसिक्ताभिर्विल्वपत्रकैः ॥
सहस्रं देवीमभ्यर्च्य श्मशाने साधकोत्तमः ।
तदा राज्यमवाप्नोति यदि ना स पलायते ॥
महाचीनद्रुमलतावेष्टनेन च यत् फलम् ।
तस्यापि षोड़शांशेन कलां नार्हन्ति चाप्सराः ॥
शवासनाधिकफलं लतागेहे प्रवेशनम् ।
एवम्भूतः सदा देवि साधको भुवि दुर्लभः ॥
एतत्प्रकाशनाद् देवि मृत्युर्भवति नान्यथा ।
अथवा चाधरं दृष्ट्वा अथवा स्तनमण्डले ।
अथवा योनिमध्ये च हस्तं दत्त्वा जपेन् मनुम् ॥
ऋतुकालं समारभ्य यावदृत्वन्तरं भवेत् ।
तावज् जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत् ॥

फेरवीये—कालिकामन्त्रतन्त्रोक्तान् प्रयोगानिह चाचरेत् ।
अत्रोक्तमपि तत्रापि प्रयोगान् सम्यगाचरेत् ॥

फत्कारिणीतन्त्रे—योनियुग्मे लिखेद् भूर्जे लाक्षारसेन मन्त्रवित् ।
तन्मध्ये साध्यसंयुक्तं मनुराजं लिखेत् ततः ॥
क्लीबहीनान् दीर्घवर्णान् षट्कोणे विलिखेत् ततः ।
अष्टपत्रे चाष्टवर्णान् तद्‌बहिर्भूपुरद्वयम् ॥
अष्टवर्गं भूपुरे च विलिखेत् साधकोत्तमः ।
स्वर्णपट्टे च भूर्जे वा रौप्ये वाप्यथ सुव्रते ॥
विलिखेद्धेमलेखन्या गन्धाष्टकसमन्वितम् ।
दूर्वाकाण्डेन वा लिख्यात् कुशमूलेन वा पुनः ॥
वेष्टितं पीतवस्त्रेण जतुना परिवेष्टयेत् ।

बध्नीयात् पट्टसूत्रेण शिशूनां कण्ठभूषणम् ॥
स्त्रीणां वामभुजे चैव चान्येषां दक्षिणे भुजे ।
बन्ध्या तु लभते पुत्रं निर्धनो धनवान् भवेत् ॥
एषा रक्षा पुरा बद्धा ज्ञानार्थं गौतमादिभिः ।
जयार्थं पार्थिवैश्चान्यैः संग्रामे जयकाङ्क्षिभिः ॥

अष्टवर्णानिति । वाग्भवं कुलदेवीं च तारकं वाग्भवं तथा ।
हृल्लेखा चास्त्रमन्त्रान्ते वह्निजायावधिर्मनुः ।
अष्टाक्षरः परः प्रोक्तो मन्त्राणां सार ईरितः ॥

इत्युक्तमन्त्रवर्णानित्यर्थः ।

## अथ यन्त्रम्

रुद्रयामले—अथ यन्त्रं प्रवक्ष्यामि शृणुष्व हरवल्लभे ।
त्रिकोणं विन्यसेत् पद्मं षट्कोणपरिवेष्टितम् ॥
अष्टपत्रं महायन्त्रं त्रितत्त्वं च ततः परम् ।
भूपुरत्रितयं दद्याद् वसुशूलसमन्वितम् ॥
कण्ठे ठं वं समायुक्तं दद्याद् यत्नेन देशिकः ।
इदं यन्त्रं समुद्दिष्टं सरस्वत्याः प्रसादतः ॥
पत्रमूले स्वरयुग्मं पत्रे वर्गाष्टकं स्मृतम् ।
विवरे तस्य गायत्रीं त्रिकोणे मन्त्रवर्णकम् ॥
साध्यस्य नामसंयुक्तं षष्ठ्यन्तं विलिखेत् सुधीः ।

तथा—पूर्वोक्तं विलिखेद् यन्त्रं चतुर्दलसमन्वितम् ।
गोमये वा ततः कुर्यात् शुक्लचन्दनकेऽपि वा ॥
काञ्चनं रजतं वापि विद्रुमं वा महेश्वरि ।
अन्येन चैव पूज्येन लिखेद् यन्त्रं शलाकया ॥
चतुरङ्गुलमानेन शलाका च विनिर्दिशेत् ।
सुवेशां चैव कुर्वीत शलाकां सुमनोहराम् ॥
ततः पूर्वदले लेख्यं ह्रींकारं पद्मभाजने ।
दक्षे स्त्रीं च लिखेद् धीमान् पश्चिमे फं लिखेत् ततः ॥
उत्तरे टं समुद्दिष्टं मध्ये हूं विलिखेत् सुधीः ।
इदं यन्त्रं समुद्दिष्टमक्षोभ्येन सुरेश्वरि ॥
बध्नीयात् पट्टवस्त्रेण शिशूनां कण्ठभूषणम् ।

स्त्रीणां वामकरे धार्यं पुंसां सव्यकरे तथा ॥
बन्ध्याऽपि लभते पुत्रं निर्धनो धनमाप्नुयात् ।
इयं रक्षा पुरा बद्धा ज्ञानार्थं गौतमादिभिः ॥
कीर्त्यर्थं पार्थिवैश्चान्यैः संग्रामे जयकाङ्क्षिभिः ।
त्रैलोक्येऽस्य समं नास्ति विद्यावाक्यविशुद्धये ॥

## ताराकवचम्

अथ यन्त्रार्थं गन्धर्वतन्त्रोक्तकवचं लिख्यते ।

भैरव्युवाच—

यद् गुह्यं परमाख्यातं तारिण्या विश्वतारणम् ।
त्रैलोक्यविजयं नाम कवचं मन्त्रविग्रहम् ॥
षडाम्नायानुभिर्जुष्टं षट्कषट्कसमन्वितम् ।
साधकानां हितार्थाय कृपया वद भैरव ॥

भैरव उवाच—

शृणु देवि प्रवक्ष्यामि साधकानां सुखावहम् ।
त्रैलोक्यविजयं नाम कवचं मन्त्रविग्रहम् ॥
यद् धृत्वा भगवान् विष्णुरजयद् दानवान् मुहुः ।
तपोभिरूर्जितान् वीरः संहरत्यच्युतोऽव्ययः ॥
सृष्टिं करोति भगवान् ब्रह्मा यस्य प्रसादतः ।
शिवो यस्य प्रसादेन अवधीत् त्रिपुरं पुरा ॥
वृत्रं येन जघानेन्द्रो गुप्तो व्याहतविक्रमः ।
येनाग्निरपि दुर्धर्षो ह्यजेयो धर्मराड् यमः ॥
निर्ऋतिर्वरुणो वायुः कुवेर ईश्वरादयः ।
यद्दशांशोपासनातः संहरन्ति रणे रिपून् ॥
यस्योपदेशतः स्कन्दः सेनानीस्त्रिदिवौकसाम् ।
तारकाख्यं जघानोग्रमन्यान् दैत्यान् सुदुर्मदान् ॥
यज् ज्ञात्वा भार्गवो रामः क्षत्रियानजयद् रणे ।
वरोर्जितान् महातेजाः कालिकां चान्वतर्पयत् ॥
पिशितैः क्षत्रदेहोत्थै रुधिरैः सगणां प्रभुः ।
व्यासाद्या ऋषयो येन भारतादीन् प्रचक्रिरे ॥
विवस्वानतितेजस्वी सर्वज्ञो भगवान् भवः ।

जगद् विजयतेऽनङ्गो जगदानन्दकृच्छशी ॥
कलयत्यखिलं कालो यस्य वीर्येण भैरवि ।
तच्छृणुष्व मयाख्यातं यथोक्तं शङ्करेण च ॥
स्कन्दाय सुरलोकानामशुभस्कन्दहेतवे ।
तत्स्कन्देन पुरा प्रोक्तं पर्शुरामाय धीमते ॥
आज्ञया श्रीभगवतः शङ्करस्य महाप्रभोः ।
तत् ते वक्ष्यामि देवेशि यथा लब्धं महात्मना ॥
कार्त्तिकेयेन देवानां गुप्तये समरैषिणा ।
एकदा नन्दने रम्ये नानापुष्पैरलङ्कृते ॥
कूजत्कोकिलभृङ्गौघ-शिखण्डिभिर्निनादिते ।
पद्मकैरवकल्हार-शतपत्रश्रियोज्ज्वले ॥
सुगन्धिशीतलानन्दिमन्दमारुतसेविते ।
दिव्यसिंहासने रम्ये पारिजाततरोरधः ।
निविष्टं प्रणिपत्याह अर्धनारीश्वरं गुहः ॥

कार्त्तिकेय उवाच—

देव देव महादेव भक्तानुग्रहकारक ।
त्वं धाता त्वं पिता नाथ त्वमेव विजयप्रदः ॥
त्वं वै गतिमतां गम्यस्त्वं चैतन्यं परा चितिः ।
परापरगतिस्त्वं वै त्वमेव शरणं विभो ॥

भैरव उवाच—

इत्थं विज्ञापितं तेन गिरीशं त्रिदशेश्वरम् ।
वक्षःस्थले समासीना कृपयोवाच पार्वती ॥

श्रीपार्वत्युवाच—

भगवन् सर्वदेवेश सर्वदेवारिहा विभुः ।
त्वमेव सर्वलोकेशः सर्वसाक्षी सनातनः ॥
भवता देवरक्षायामभिषिक्तोऽतिबालकः ।
कुमारः सुकुमाराङ्गः प्रियो मे शिखिवाहनः ॥
येन गुप्तो जयेच्छत्रून् तदस्मै क्षिप्रमादिश ।
येन मायासुरी दैवी गान्धर्वी मानुषी प्रभो ॥
यक्षविद्याधराणां च राक्षसी दानवी तथा ।

न बाधन्ते कूटमायाशस्त्राण्येनं तथा कुरु ॥

भैरव उवाच—

इत्थमभ्यर्थितः श्रीमान् शङ्करः प्रियया प्रभुः ।
कृपया कवचं प्राह चतुर्वर्गफलप्रदम् ॥

श्रीमहादेव उवाच—

अस्ति गुह्यं महादेवि कवचं ब्रह्मसम्मितम् ।
तारिण्या ब्रह्मरूपिण्या उग्रापत्तारणं नृणाम् ॥
त्र्यैलोक्यविजयं नाम कवचं मन्त्रविग्रहम् ।
सर्वशक्तिमयं देवि सर्वारिष्टविमर्दकम् ॥
सर्वकामप्रदं सर्व-वैरिहृदयशोषणम् ।
ॐ त्र्यैलोक्यविजयस्यास्य ऋषिरक्षोभ्य उच्यते ॥
छन्दोऽनुष्टुब् देवता श्रीदेवी मत्तोग्रतारिणी ।
ह्रीं बीजं त्रीं परा शक्तिर्हूंमस्य कीलकं स्मृतम् ॥
अमुकविजयकामे विनियोगः प्रकीर्त्तितः ।
कुल्लुकां जानतः पुंसश्चाज्ञापालनतत्पराः ॥
ब्रह्मविष्णुमहेशाद्यास्त्रिदशाः सर्वसिद्धयः ।
माहेश्वरी-भयङ्कर्यौ नारसिंही तथैव च ॥
कुल्लुकाः स्युर्महोग्रायाः सर्वतन्त्रेषु गोपिताः ।
वासुदेवो हरो ब्रह्मा तारिणी प्रकृतिः सदा ॥
एकमूर्त्तिः सदा चिन्त्या एकमूर्त्तिस्तु संस्थिता ।
तां च श्रीमूर्त्तिमूर्धाधः संयोज्य मध्यदेशतः ॥
कुल्लुका विविधा चर्या प्रत्येकं त्र्यक्षरी सदा ।
माहेश्वरीति विख्याता श्रीमत्कुल्लुकतारिणी ॥
ऊर्ध्वं रक्षतु सा नित्यं चतुर्वर्गफलाप्तये ।
महामेघप्रभां श्यामां कलाबाहुसमन्विताम् ॥
खड्गकर्त्तृधरां पीतवस्त्रां शवासनां स्मरेत् ।
प्रणवं भुवनेशानीमनन्ताद्यं शिवं तथा ॥
बिन्दुनादसमायुक्तं कूर्मबीजं तदन्तरम् ।
नमस्तारायै सकलदुस्तरांस्तारयद्वयम् ॥
स्वाहान्तोऽयं भयङ्करी श्रीमद्भुवनतारिणी ।

श्यामां द्वादशहस्तां च रक्तवस्त्रां शवासनाम् ॥
खड्गकर्तृधरां नित्यां संस्मरेद् हृदयाम्बुजे ।
कूर्चं नृसिंहं क्रों कूर्चं लज्जामस्त्रं च कूर्चकम् ॥
नारसिंहीति विख्याता श्रीमत्सङ्कटतारिणी ।
श्यामां दशभुजां खड्गकर्तृहस्तां शवासनाम् ॥
शुक्लवस्त्रां सदा ध्यायेन् मूलाधारनिवासिनीम् ।
ॐ शिरो मे सततं पातु ह्सौं कुल्लुकतारिणी ॥
शिखां मे पातु कलह्रीं देवी या ब्रह्मतारिणी ।
शिरसो दक्षिणे भागे हसस्त्रीं वज्रतारिणी ॥
पातु मां वामभागे तु वं सह्रुं दुर्गतारिणी ।
शिरसः पश्चिमे भागे रक्ष फट् उग्रतारिणी ॥
षडक्षरी कुल्लुकेशी विजयानन्दतारिणी ।
खड्गाम्भोजवराभीतिधारिणी मां सदाऽवतु ॥
मणिधरि वज्रिणि ह्रीं हुं त्रीं सर्ववशङ्करि ।
प्रतिसरे रक्ष रक्ष मां ह्रीं हुं हुं फट् स्वाहयान्विता ॥
शिखाग्रन्थिस्थिताऽव्यान्मां देवी श्रीमणितारिणी ।

ॐ ह्रीं हुं क्ष्रौं सर्वविघ्नानुत्सादय विदारय हुं फट् स्वाहा विघ्नतारा विक्षु मां पातु सर्वदा ॥ ॐ ह्रीं स्त्रीं आः सुरेखे हुं वज्ररेखे ठः हुं फट् स्वाहा पातु भुवि प्रीता मां सुरेखोग्रतारिणी ॥ इत्यष्टौ कुल्लुकामन्त्रान् विन्यस्य साधकोत्तमः । चतुरशीतिभेदांस्तान् मूलस्थान् विग्रहे न्यसेत् ॥ ॐ शिरो मे ह्रीं स्त्रीं हुं फट् पातु मां पद्मतारिणी । या देव्येकजटा नाम त्रैलोक्ये जाड्यहारिणी ॥ नेत्रयो-र्ह्रीं स्त्रीं हुं पातु नीला देवी त्रिलोचना । भाले श्रीं ह्रीं स्त्रीं हं सः हुं फट् स्वाहा भीमतारिणी ॥ भ्रुवोर्मध्यं पातु नित्यं ॐ ह्रीं हंसः सह्रीं सहुं । फट् स्वाहा ज्ञानतारा या अज्ञानेन्धनदाहिनी । ॐ ह्रीं हंसः श्रीं हं सः स्त्रीं हुं फट् श्रीं प्राण-तारिणी । पातु मां नासिकामध्ये सर्वापत्क्षयकारिणी । क्लीं ह्रीं स्त्रीं हुं ॐ क्लीं हुं फट् पातु मोहनतारिणी ॥ मुखपद्मेऽङ्कुशाम्भोज-वराभयकराम्बुजा । ॐ ह्रीं हुं फट् पातु ओष्ठं लम्बोष्ठी विश्वमोहिनी ॥ आं ह्रीं ऐं हुं हुं हसस्त्रीं फट् ह्यधरं पातु मे सदा । अनन्ततारिणी देवी भोगमोक्षफलप्रदा । ऐं ॐ हुं ऐं स्त्रीं ह्रीं फ् हुं ऐं वाक्तारिणी परा ॥ मां पातु वाक्प्रदा देवी वचने मङ्गलप्रदा । ॐ तारे स्त्रीं महातारे हुं तारिण्युग्रतारिणी ॥ रक्ष रक्ष जगत्तारे हुं फट् तारिणी

पाहि माम्। ॐ ह्रीं श्रीं त्रीं स्त्रीं ह्रीं फट् ऐं ह्रीं वद वाग्विभवप्रदे॥ सर्वज्ञाज्ञापय स्त्रीं हूं जिह्वां मे रक्ष तारिणी। ऐं ह्रीं हूं स्त्रीं हसस्त्रीं फट् वाचीं चण्डोग्रतारिणी॥ पातु मे चिबुकं देवी चण्डभीतिविनाशिनी॥ ॐ कलह्रीं हूं हसस्त्रीं क्लीं क्लीं फट् कालतारिणी। कपोलौ पातु मे उग्रा स्वर्णाभा नागकुण्डला॥ ॐ युं हूं हूं श्रीं हसस्त्रीं क्लीं ह्रीं हं ह्रीं हूं फट् ऐं सदा। कर्णौ पातु महामाया विद्या श्रीशब्दतारिणी॥ ॐ श्रीं ग्लौं गं हूं हसस्त्रीं ऐं गण्डौ पातु मे सदा। पद्मयुग्मवराभीतिधारिण्यभयतारिणी॥ ॐ क्लीं किलि किलि स्त्रीं फट् कण्ठं पातु सुतारिणी श्रीं श्रीं ह्रीं ऐं स्त्रीं च्लूं हसस्त्रीं हूं फट् स्त्रीं हूं क्षें हूं करालिनी रक्ष रक्ष महातारे हूं फट् स्वाहा ककुत्स्थलम्॥ ॐ त्रीं ह्रीं स्त्रीं हूं हं सस्त्रीं हूं फट् ग्रीवां रक्ष तारिणी॥ ॐ ह्रीं हूं श्रीं क्लीं हसस्त्रीं भस्त्रीं भस्त्रीं जये जये महोग्रे पिङ्गलजटे ह्रीं स्त्रीं हूं फट् स्वाहाऽवतु स्कन्धौ मे जयदा पातु देवी विजयतारिणी॥ ॐ हूं ह्रीं त्रीं ह्रीं द्रां द्रीं क्लृं हं सः ऐं हूं फट्। बाहुमूले पातु नित्यं मम सा जयतारिणी॥ ॐ द्रां द्रीं द्राविणि क्लिन्ने द्रावय द्रावय द्रुतम्। सर्वशत्रून् महामाये महातारिणि ह्रीं सह्रीं फट् स्वाहा बाहुमध्यं मे पातु विद्रावतारिणी॥ ॐ ह्रीं क्षं भमलवरयूं श्रीं क्ष्रीं हूं सह्रौं सः फट्। करौ पातु सिद्धितारा मम सर्वार्थसाधिनी। आं ह्रीं क्रों हूं हसस्त्रीं फट् अङ्गुलीर्ऋद्धितारिणी॥ ॐ खफ्रें स्त्रीं हूं हं सः क्ष्रीं नखानखण्डतारिणी॥ ॐ ह्रीं हूं द्रां द्रीं हूं च्लूं स्त्रीं सः खफ्रें चण्डयोगिनि योगेश्वरि महातारे तारकासुरमर्दिनि मदय प्रमथान् दुष्टान् मम शत्रून् विदारय शोषय त्रोटय क्षां क्ष्रीं धूं धूं बन्धय बन्धय सर्वारिष्टं संहर स्त्रीं करौ महोग्रतारिणी पातु मे विजयानन्ददायिनी खड्गधारिणी॥ ॐ स्त्रीं हूं यरलवसहूं हसक्षमलवरयूं ह्रीं ह्रीं ॐ कुक्षिदेशं मे पातु योगिनीतारिणी॥ ॐ ह्रीं ह्रीं हूं हूं स्त्रीं स्त्रीं सः क्लीं क्लीं विमोक्षदे हंसः क्लीं सह्रीं पाहि मां पार्श्वयोर्भृगुतारिणी स्वाहा हंसः॥ ॐ ह्रीं स्त्रीं हूं फट् सोऽहं महोग्रतारिणी। पाहि मां हृदयासन्ना प्राणशक्त्युपबृंहिता॥ ॐ तारे तारय त्रीं हूं हंसस्त्र्यैलोक्यत्राणकारिणी। हूं फट् स्वाहा स्तनद्वन्द्वं रक्ष मे विजयप्रदे॥ ॐ क्षां हूं कलहस्त्रीं फट् कालरुद्रनिवारिणी। रक्ष रक्ष हूं फट् ऐं हूं उदरं रुद्रतारिणी॥ ॐ ह्रीं भस्त्रीं हसस्त्रीं फट् नाभिं मे जीवतारिणी। ह्रीं क्लीं हूं सहस्त्रीं फट् लिङ्गं प्रजनतारिणी॥ ॐ ह्सौं ह्रीं हसस्त्रीं हूं हूं क्लीं स्त्रीं फट् सदा मम। आधारं पातु सा देवी त्र्यैलोक्याधारतारिणी॥ ॐ हूं ह्रीं स्त्रीं जम्भिनि श्रीं ह्रीं वशिनि क्लीं मोहिनि द्रां द्राविणि मे शत्रून् हन द्रावय मोहय क्षोभय

क्षोभय हुं हुं त्रुतं जम्भय जम्भय तारे तारिणि रुद्रास्थिधारिणि ब्रह्मरूपिणि ब्रह्मविष्णुशिवत्राणकारिणि क्षौं फट् अम्बिके रक्षिणि तारिणि देवि त्रिखण्डं पातु मे सदा। हूं ह्रीं स्त्रीं श्रीं हसस्त्रीं ह्रीं हूं फट् स्वाहा ममाऽवतु। नितम्बस्थूल-सर्वाङ्गी सर्वदा सर्वतारिणी ह्रां हूं ह्रीं क्लीं ब्लूं स्त्रीं हूं फट् ऊरू मे भङ्गतारिणी॥ ॐ भ्रीं त्रीं क्रीं हसस्त्रीं फट् हूं ह्रीं जम्भय मोहय स्तम्भय द्रावय द्रां द्रीं क्लीं ब्लूं सः शत्रुपक्षगान् मम जानुयुगं रक्ष देवी जम्भकतारिणी॥ ॐ श्रीं हूं ह्रीं त्रीं भ्रीं श्रीं हूं हूं ममाऽवतु। जङ्घायुग्मं महादेवी पातु सा भ्रमतारिणी॥ ॐ ह्रीं गां गीं ग्लौं गूं गैं गौं ग्लौं हूं स्त्रीं फट् परमेश्वरी। गुल्फयुग्मं सदा पातु देवी श्रीगण-तारिणी॥ ॐ हूं फट् पादपृष्ठं पातु परोक्षतारिणी॥ ॐ हूं ह्रीं फट् महातारा पातु मे चरणाङ्गुलीः॥ ॐ ह्रीं स्त्रीं ग्लौं लं हसस्त्रीं हूं फट् स्वाहास्वरूपिणी। पादाधः पातु मे नित्यं देवी श्रीभूमितारिणी॥ ॐ क्षौं क्षीं हूं ह्रीं स्त्रीं ह्सौं फ्रें फट् ईश्वरि। तुरु तुरु स्त्रीं श्रीं ह्रीं हूं वज्रतेजोमये ऐं फट् सर्वास्त्रशस्त्रवारिणि सर्वप्रहरणनिसूदिनि सर्वकृत्याभिचार-ग्रहारिष्टनिवारिणि सर्वास्त्राणि स्तम्भय स्त्रीं मर्दय ह्रीं विदारय भञ्जय द्रां बन्धय क्लूं सन्तापय ह्सौं हः फट् महोग्र-तारिणीविद्या रोमकूपानि मेऽवतु। सर्वायुधकरा देवी सर्वतोऽभयदायिनी॥ ॐ ह्रीं भ्रूं त्रूं रूं त्रूं हूं नमो भगवति दंष्ट्रिणि भीमवक्त्रे महोग्ररूपे कालिके केलि-निश्चले क्लुं क्लुं क्लुं विद्युज्जिह्वे हूं हूं कटिश्रोणिमांसाभरणे विशालमुण्ड-मालाधारिणि द्रावय द्रावय महारौद्रि परभट-गजाश्वहृच्छोषिणि अखिलदुष्टमूषिणि निखिलास्त्रपरीवर्त्तकारिणि भ्रुकुटीकृतनयने विषमनेत्रे महारक्तवसामांसवसामेदोप-लिप्तगात्रे कहकहमहमहभ्रूंदभ्रूंदनानाजीमूतवर्णे विलम्बवद्घण्टावकीर्णदेहे शवमांस-प्रिये बिम्बे बिम्बे रणबिम्बे रौद्ररूपे ह्रौं ह्रौं हः कुन्त कुन्त आकर्षय आकर्षय धुनु धुनु हें हः खफ्रें विजृम्भिनि हूं क्षौं नमो जय त्र्यैलोक्यविजये हूं फट् स्वाहा त्र्यैलोक्य-विजया तारा सर्वाङ्गं मे सदाऽवतु॥ ॐ ह्रीं स्त्रीं चां चीं चैं हूं फट् श्रीं ह्रीं महेश्वरि हूं विद्युत्प्रभे विद्ये विजयानन्ददाऽवतु॥ ॐ ह्रीं स्त्रीं चां चीं चैं हूं फट् श्रीं ह्रीं महेश्वरि हूं विद्युत्प्रभे विद्ये विजयानन्ददायिनि चिदानन्दमये देवि चेतने चित्स्व-रूपिणि हंसः हंसां हंसीं हूं सः पातु चैतन्यतारिणी॥ इति त्रिर्व्यापकं कृत्वा अष्टा-धारान् प्रविन्यसेत्। शिवशक्त्यात्मकैर्वर्णैस्तारिणीमन्त्रसंयुतैः॥ ॐ ह्रीं स्त्रीं डां डीं डूं डैं डः डरलकसहैं हूं वं शं षं सं ग्लौं भूमितत्त्वात्मिके डाकिनि तारिणि कालाग्निरुद्रसहिते ममाधारं सदाऽवतु। ऐं ह्रीं श्रीं हसखफ्रें ह्सौं यरलवसहूं ह्सौं हसखफ्रें श्रीं ह्रीं ऐं ॐ आधारवासिनि कालाग्निरुद्रसहिते ममाधारं रक्ष रक्ष स्वाहा।

ॐ ह्रीं हूं रां रीं रूं रैं रौं रः स्त्रीं रडलकसहैं ऐं ह्रीं श्रीं हसखफ्रें स्त्रीं लवरयूं ह्सौः सः फट् श्रीं ह्रीं ऐं वं भं मं यं रं लं राजसि आप्याश्रये ब्रह्मणा सहिते पाहि अधिष्ठानं जगन्मयि विघ्नान् मे जलजान् छिन्धि रक्ष राकिनि तारिणि ॥ ॐ स्त्रीं ह्रीं लां लीं लूं लैं लौं लः फट् ह्सौः सः फट् लडरकसहौं हैं ह्रः ऐं ह्रीं श्रीं सहखफ्रें ह्सौः हसक्षमलवरयूं ह्सौः हसखफ्रें श्रीं ह्रीं ऐं डं ढं णं तं थं दं धं नं पं फं सात्त्विके जीवात्मरूपिणि श्रीं ह्रीं रुद्रानन्दप्रदायिनि तेजोमये ज्वलत्कालानलदीप्ते महेश्वरि मणिपूरं सदा पाहि देवि लाकिनि तारिणि ॐ ह्रीं हूं कां कीं कूं कैं कौं कः स्त्रीं ह्सौं सः क्लीं कलडरसहौं हूं श्रीं ऐं ह्रीं श्रीं हसखफ्रें ह्सौं ह्सौं हसक्षमलवरयूं ह्सौं हसखफ्रें श्रीं ह्रीं ऐं कं खं गं घं ङं चं छं जं झं ञं टं ठं फट् परतत्त्वात्मिके देवि जगच्चैतन्यकारिणि । विष्णुवक्षःस्थलावासे कमले कमलालये । क्लींकारे कामदे देवि प्राणशक्तिप्रबोधिनि । अनाहतं रक्ष नित्यं देवि काकिनि तारिणि ॥ ॐ ह्रीं त्रीं हूं ह्रीं श्रीं ह्रौं हैं स्त्रीं ह्सौः फट् परापरे सां सीं सूं सैं सौं सः ह्रीं सःसडरलकहौं ह्रीं ह्रं ऐं ह्रीं श्रीं हसखफ्रें ह्सौं क्षमलवरयूं ह्सौं हसखफ्रें श्रीं ह्रीं ऐं ह्रीं फट् परापरापरे अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः फट् आकाशात्मिके देवि विद्युन्मतिविरोचने हिरण्यगर्भाश्रये देवि ग्लौः हूं विशुद्धं पाहि मे सदा । चण्डमण्डलसङ्काशे देवि साकिनि तारिणि ॥ ॐ ह्रीं स्त्रीं हूं हां हीं हूं हैं हौं हः फट् श्रीं हसकलरडैं ऐं ह्रीं श्रीं हसखफ्रें ह्हौः ह्रीं त्रीं फट् ठं ठः स्फुर स्फुर लत्र प्रक्ष सहस्त्रीं ह्सौं हसखफ्रें श्रीं ह्रीं ऐं हं क्षं हं सः हूं सोहं ह्रीं फट् मनोमये ब्रह्मतारालये ईशे सदाशिवहृदिस्थिते साभिलाषं मनो नित्यं पाहि हाकिनि तारिणि ॥ ॐ ह्रीं स्त्रीं हं यां यीं यूं यैं यौं यः सौं हं हं सीं स्त्रीं ह्सौं ऐं ह्रीं श्रीं हूं हसखफ्रें ह्सौं भगवत्यम्बचिन्मये बुद्धितत्त्वात्मिके हसक्षमलवरयूं हसक्षमलवरयीं ह्सौं सहखफ्रें श्रीं ह्रीं ऐं प्रज्ञां रक्ष जगन्मये निखिलप्रपञ्चरूपिणि हंसः सोहं ह्सौं सः फट् जगत्तत्त्वात्मिके देवि एकपत्रं ममाऽवतु ॥ ॐ ह्रीं स्त्रीं हूं जगद्धात्रि जगदानन्ददायिनि ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः स्त्रीं फट् जगदाह्लादरूपिणि ह्रींकारं मे अहंतत्त्वं पातु सच्चित्स्वरूपिणी ऐं ह्रीं श्रीं हसखफ्र ह्रीं हूं क्लीं सः ह्सौं स्त्रीं फट् अघोरमुखि तारे हूं सर्वप्रत्ययकारिणि ह्सौं ऐं ह्रीं हसखफ्रें सक्लीं हूं श्रीं ह्सौं ह्रीं ऐं सः सहस्राराधिष्ठिते हूं ह्रीं महाशिवविभूषणे रक्ष रक्षाहङ्कृतिं मे जगच्चैतन्यतारिणि ॥ ॐ ह्रीं हूं स्त्रीं हसस्त्रीं हसकलह्रीं ह्सौं तारिणि ब्रह्मतारिणि ह्सौं हसखफ्रें हश्रीं श्रीं ह्रीं ऐं परमे परमे परे घोरे घोरे महाघोरे अघोरे घोररूपिणि घोरघोरतरे भस्रां भस्रीं हूं हूं परमेश्वरि चिदानन्दपरब्रह्मतारिणि श्रीं सः ह्रीं सः फट् परमे शिवपर्यङ्के शुद्धपद्मा-

सनस्थिते सहजानन्दसुस्निग्धे पाहि मामुग्रतारिणी। नवतारा: प्रविन्यस्य षडङ्गं विन्यसेत् पुनः ॥ ऐं क्लीं सौं ॐ हसस्त्रीं हूं ह्रीं स्त्रीं फट् स्वाहा हृदयेऽवतु खड्गो-त्पलवराभीतिधरा भैरवतारिणी ऐं क्लीं सौः ह्रूं ऐं कलह्रीं हसकलह्रीं सक्लीं क्लीं ह्रीं हूं ह्रीं स्त्रीं हूं ऐं क्लीं सौः मातङ्गिनि मोहिनि ह्रीं श्रीं हूं ऐं वज्रवैरोचनीये हूं हूं ऐं हूं फट् स्वाहा ह्रीं शिरसे पातु देवि खड्गोग्रतारिणि ॥ ॐ ह्रूं ऐं कलह्रीं श्रीं ह्रीं हूं स्त्रीं हूं फट् श्रीं हसकलह्रीं स हूं ह्रीं शिखां पाहि मम त्र्यैपुरतारिणि ह्रीं स्त्रीं हूं श्रीं ह्रीं श्रीं ऐं वज्रवैरोचनीये हूं हूं फट् स्वाहा वज्रतारे ममाङ्गे वज्रतां कुरु। कवचं मम सर्वाङ्गं रक्ष श्रीवज्रतारिणि ॥ ॐ हूं ह्रीं ऐं क्लीं सौः नमो मातङ्गतारिणीश्वरि। सर्वमुखरञ्जनि श्रीं सर्वसत्त्ववशङ्करी स्त्रीं सर्वस्त्रीपुरुषवशङ्करि सर्ववैरिवशङ्करि ह्रीं क्लीं ह्रीं हूं हूं हस्त्रीं सर्वराजवशङ्करि सर्वदुष्टवशङ्करि ऐं क्लीं सौः नेत्रमण्डले सदा-स्थिता पाहि तारे मातङ्गि विश्वमोहिनि ॥ ॐ ह्रीं स्त्रीं हूं फट् क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं हसौः स्त्रीं हः फट् स्त्रीं हूं ह्रीं ॐ कालि कालि ॐ ॐ ॐ हः स्त्रीं हूं खफ्रें क्षौं क्षः स्त्र्यौं स्त्र्यः सहैं हं सः नमो भगवति सस्फं प्रचण्डबालिके खड्गशूलगदाधरे हूं हूं हें हैं सर्वशक्तिधरे सर्वारिसूदनि रक्तमांसाशने भीमे खर्परखट्वाङ्गधारिणि मां रक्ष रक्ष विजये मम शत्रून् विनाशय विनाशय सर्वदुष्टानरिष्टान् निवारय सर्वग्रह-यक्षभूतक्रूरमातृभयं हन कुष्माण्ड-भैरव-क्षेत्रपाल-डाकिन्युरङ्गमान् निवारय निवारय खेचरान् ब्रह्मराक्षसान् ये मां हिंसन्ति प्रत्यक्षं कृत्याद्रोहस्य कारकाः परोक्षे वा तान् ज्वल ज्वालिनि हूं हन क्षयं नय नय प्रमर्दय प्रमर्दय प्रणाशय प्रणाशय शोषय शोषय भ्रूं रूं क्ष्रीं क्ष्रौं भ्रैं फट् करद्वयम्। कालिकामन्त्रतो न्यस्य गायत्र्या व्यापकं चरेत्॥ ह्रीं स्त्रीं हूं फट् एकजटे विद्महे ह्रीं स्त्रीं हूं परे नीले विकटदंष्ट्रे ह्रीं धीमहि ॥ ॐ ह्रीं स्त्रीं हूं फट् ऐं सः स्त्रीं तन्नस्तारे प्रचोदयात् मां पाह्युग्रतारिणि ॥ ॐ अक्षोभ्यः शिरः पातु सर्वदा क्षोभकारकः। पूर्वे ऐं ह्रीं श्रीं ॐ मां रोचनः पातु सर्वदा ॥ ऐं ह्रीं श्रीं ॐ पश्चिमेऽव्यात् सर्वदा सिद्धिनायकः। ऐं ह्रीं श्रीं हूं फट् आग्नेय्यां नामको मां सदाऽवतु ॥ ऐं ह्रीं श्रीं हूं फट् नैर्ऋत्यां मां पातु मामकः सदा। ऐं ह्रीं श्रीं हूं फट् वायव्यां पातु पावकः। सदा ऐं ह्रीं श्रीं हूं फट् ऐशान्यां तारकः पातु मां सदा। तद्बहिः पूर्वदिग्भागे ऐं ह्रीं श्रीं ॐ नमो नमो ब्रह्माणि रक्ष रक्ष हंसवाहिनि हंसिनि आं ह्रीं क्रों ह्रीं हसैं स्त्रीं सः असिताङ्गनिषेविते रक्ष रक्ष महामाया हंसः सोऽहंस्वरूपिणी। आग्नेय्यां ऐं ह्रीं श्रीं ह्रौं स्त्रीं हूं फट् ह्रूं ह्रीं नमो नमो माहे-श्वरि वृषारूढे शूलहस्ते ममाभये हें ह्रौं हूं ह्रीं श्रीं रक्ष रक्ष मां रुरुभैरवभूषणे ऐं ह्रीं श्रीं ॐ ह्रीं हूं स्त्रीं ऐं नमो भगवति ह्रीं ह्रीं कौमारि मां रक्ष रक्ष दक्षिणे शिखि-

वाहने शक्तिहस्ते ऐं ह्रीं हैं चण्डभैरवभूषिते ऐं ह्रीं श्रीं ह्रीं हूं फट् ॥ ॐ ग्लौं नमो भगवति सुवं वाराहि मां रक्ष रक्ष दंष्ट्रायुधे महाबले उन्मत्तसहिते विधे नैर्ऋत्यां रक्ष मां सदा। ऐं ह्रीं हूं ॐ क्लीं हैं हं सः सोहं नमो नमो भगवति वैष्णवि श्रीं ह्रीं श्रीं गरुडवाहिनि चक्रायुधे मां रक्ष रक्ष ऐं जौं ह्रौं हं सौः सः फट् मायासहस्र-परिवर्त्तिनि क्रोधभैरवभैरवि प्रतीच्यां रक्ष देवेशि सर्वविघ्नान् निवारय ऐं ह्रीं श्रीं ॐ ह्रीं ह्रीं द्रीं श्रीं ह्स्रैं ऐं त्रां ईं ऊं ह्रीं नमो नमो भगवत्यजिते ऐन्द्रि गजराजोपरि-स्थिते वज्रहस्ते हैं ह्सौं मम वैरिविनाशिनि कपालिसहिते रक्ष वायव्यां दिशि मां सदा। ऐं ह्रीं श्रीं ॐ स्त्रीं हूं फट् चां चीं चैं नमो भगवति श्रीं चामुण्डे शव-वक्षःस्थे खट्वाङ्गायुधधारिणि ह्रौं ह्रीं ह्सौं भीषणाख्ये उदीच्यां रक्ष मां सदा ऐं ह्रीं श्रीं ऊं ईं लं ह्रीं ॐ ह्रीं स्त्रीं स्त्रीं हूं फट् नमो नमो भगवति महालक्ष्मि पद्मासन-संस्थिते परे पद्मायुधधरे ॐ ह्रीं ह्क्लीं ह्क्लीं ह्सैं हस्त्रीं विभूतिदे संहारभैरवानन्दे ऐशान्यां पाहि मां सदा। ऐं हैं ह्रौं हेतुकः पातु पूर्वे ऐं वं हूं फट् ह्रौं स्लौं सः फट् आग्नेये त्रिपुरान्तकः क्लौं हूं याम्ये ऐं वं वह्निवेतालः पातु मां भयाद् दक्षिणेऽ-व्यादग्निजिह्वः ऐं अं कं नैर्ऋत एव मे हूं ह्रीं क्रें ईं कां भ्रूं ह्रीं हूं कालाक्षः पातु मां सदा। वायुकोणे ऐं मं हूं मतयो भैरवोऽवतु। उदीच्यां एं ऐं हूं फट् एकपादः सदाऽवतु ऐं भीमा मां पातु भीमवटुक ऐशान्यां पातु मां सदा। ॐ तारे तारे महातारे उत्तारे भयतारिणी। ॐ ह्रीं श्रीं ज्रीं हूं क्रों वं क्रों लं वज्राश्मास्त्राणि मर्दय मर्दय द्रावय ह्रीं हः कहकह विमोडय विमोडय हसस्त्रीं फट् स्वाहैन्द्रास्त्रात् पाहि तारिणी ॥ ॐ तारे वं विश्वतारे ह्रीं स्त्रीं वारुणतारिणी। वं क्रों वं क्रों अग्न्यस्त्राणि स्तम्भय द्रावय द्रुतं परिवर्त्तय कर्तयाशु भ्रामयास्त्रं विदारय सङ्कोचय छेदय स्त्रीं सर्वशत्रून् विनाशय अग्न्यस्त्रेभ्यः पाहि मां त्वं वह्निस्तम्भनतारिणी ॥ ॐ ह्रीं तारे महातारे कालदण्डविनाशिनि हूं क्रों यं क्रों हसक्रों फट् दण्डास्त्राणि निवारय भञ्जय त्रोटय क्षुन्न छिन्धि छिन्धि विपाटयास्त्रं स्तम्भय स्तम्भय क्ष्रीं ह्रीं याम्यास्त्राद् रक्ष तारिणी ॥ ॐ क्लीं ह्रीं त्रीं विष्णुतारे सर्वासुरविदारिणि असुरा-स्त्राणि सर्वाणि निवारय विदारय भञ्जय त्रोटय कुन्तं मर्दय त्रोटय द्रुह सर्वासुर-प्रहरणेभ्य आः सुरेखे सुरेखे हूं वज्ररेखे विदारिणि क्ष्रौं क्ष्रीं क्ष्रुं ह्रीं हूं फट् ह्सौः कृत्याद्रोहं प्रणाशय मायाव्यूहं विदारय त्रीं त्रासिनि मां रक्ष आसुरास्त्रेभ्य ईश्वरि ॥ ॐ ह्रीं त्रीं हूं महातार हं हः क्रों वं क्रों वं क्रों क्ष्रूं क्ष्रौं वषट् ज्वल ज्वल शूलिनि क्ष्रीं दुष्टग्रहभयापहे हूं फट् स्वाहा वरुणास्त्रकृत्याद्रोहान् निवारय शोषय क्षोभय क्ष्म्व्वं फट् भिन्द्धि भिन्द्धि विलोपय आप्यदुर्गा आपदोऽस्मान् दुर्गे दुर्गे रक्षिणि फट्

स्वाहा मां पश्चिमे पातु श्रीदुर्गोत्तारिणी तु या ॥ ॐ ह्रीं श्रीं भीमतारा या ज्ञेया गिरिवराश्रया। महाकटा महावेगा महाधीरा महाबला। ह्रां ह्रां स्थां स्थीं महोच्छुष्मा वाद्यस्त्राणि विनाशय। धूं धूं धूमावति क्लिन्ने क्लेदय द्रावयाऽहितान् आधारतारिणि छिन्धि समीरास्त्राणि मे रिपोः॥ ॐ ह्रीं हूं वज्रवैरोचनीये वज्रतारिणी हूं हूं फट् स्वाहा हैं सक्लीं गदां चूर्णय भञ्जय यक्षास्त्राणि यक्षमायां द्रीं द्रावय श्रीं विमोचय उदीच्यां रक्ष मां देवि परितो वज्रतारिणि॥ ॐ ह्रीं स्त्रीं क्लीं स्त्रीं कालरुद्रशक्तितत्त्वस्वरूपिणि हैं ह्रौं क्ष्रौं महातारे तारिणि ब्रह्मस्वरूपिणि प्रचण्डे प्रमथास्त्राणि भञ्जय ह्रीं हः खण्डय रौद्रकृत्यापशूनुग्रान् प्रमथान् सर्पराक्ष-सान् ब्रह्मराक्षसवेतालानुत्सारय निवारय रुद्रास्त्रेभ्यः सदा पाहि मां त्वं प्रचण्ड-तारिणी॥ ॐ ह्रीं हं सः क्रों ॐ हंसः छ्रां सोहं क्रों वषट् हक्लीं सक्लीं हसक्लीं फट् हूं स्त्रीं ब्रह्मोग्रतारिणि द्रुतं ब्रह्मास्त्राण्युपशान्तिं त्वं नय विश्वात्मिके शिवे वेदोदिताः क्रियाः सर्वाः कृत्याद्रोहफलप्रदाः। ये मामुद्दिश्य कुर्वन्ति तांस्तान् हिंसन्तु हिंसकान्। प्रचण्डतारिणी चक्रभीत्या क्रोधाग्निधर्षिताः॥ ॐ ह्रीं स्त्रीं हूं हसस्त्रीं ह्रीं गां गीं गूं गैं गौं गः सः फट् ऐं ह्रीं श्रीं हूं स्लूं सुपर्णे क्रों अम्बान्तां सह्रौं ह्सौः हंसः सोहं नागबाणान् हन संहन द्रां द्रीं ह्रीं च्लूं स्त्रीं हसस्त्रीं क्लें क्लें क्षः तार्क्ष्यतारिणि विषसर्पभयास्त्राणि संहराखिलभीतिहेतिनागपाशान् संहरैहि देवि श्रीतार्क्ष्यतारिणी। इति शत्रोरस्त्रदुर्गं निराकृत्य विशुद्धधीः। पठेदिमं महामन्त्रं सर्वभीतिविनाशनम्॥ ॐ ह्सौं वसहूं कलह्रीं हसस्त्रीं फट् नरान्त्रमालाभरण-भूषिते महाकौलिनि महाब्रह्मवादिनि महाधनोन्मादकारिणि महाभोगप्रदे अस्म-दीयं शरीरं वज्रमयं कुरु कुरु दुर्जनान् हन हन महीपालान् क्षोभय क्षोभय परचक्रं भञ्जय भञ्जय जयङ्करि गगनगामिनि यमलवरयूं हयमलवरयूं भमलवरयूं शमलवरयूं क्षमलवरयूं भमलवरयूं हसक्षमलवरयूं सहक्षमलवरयूं हंसः सोहं हूं ह्रीं स्त्रीं ह्सौं द्रां द्रीं द्रूं त्रां त्रीं त्रूं त्रैं त्रौं त्रः श्रीमत्कुल्लुकतारिणी सर्वत्र मां रक्ष रक्ष स्वाहा॥ ॐ ह्रीं स्त्रीं श्रीं ह्रीं महादेवि अश्वारूढा जयप्रदा वाहनानि पातु नित्यं मम सवार्थ-साधिनी। ह्रीं हैं सुरेखे देवि हूं हूं फट् रथं ममाऽवतु रां रीं रूं रैं रौं रः रक्षिणि हूं फट् परमानन्दतारिणि॥ ॐ हूं पुष्पकेतु राजार्हते गतागतायै सम्यगुदितायै सग्रहराशिनक्षत्रायै उदितादित्यमण्डलवर्त्तिन्यै नित्यचैतन्योदितायै ह्रीं त्रीं पर-ज्योतिस्तारायै हूं फट् स्वाहा ह्रीं ज्योतिस्तारिणि क्लिन्ने क्लेदिनि मे ध्वजं सदा रक्ष रक्ष वैरिपक्षान् क्षयं कुरु नमोऽस्तु ते॥ ॐ क्लीं कामाकर्षिणी मां पातु सवार्थ-साधिनी तेजआकर्षिणी बुद्ध्याकर्षिणी ज्ञानाकर्षिणी चित्ताकर्षणदेवी च मोहा-

कर्षकरूपिणी तपआकर्षिणी शास्त्राकर्षिणी भूताकर्षिणी वाहनाकर्षिणी मन्त्राकर्षिणी क्षेत्राकर्षिणी दुर्गाकर्षणरूपा च रत्नाकर्षणरूपिणी ॥ अहङ्काराकर्षिणी च योगाकर्षणरूपिणी। विद्याकर्षणरूपा च श्रद्धाकर्षणरूपिणी ॥ ओजआकर्षिणी चैव स्तम्भिनी मोहिनी तथा। द्राविणी क्षोभिणी चैव वशीकरणरूपिणी ॥ आकर्षिणी सम्मोहिनी पञ्चबाणेश्वरी परा। सर्वरूपा महातारा समरे पातु मां सदा ॥ अरण्ये प्रान्तरे भीमे निरालम्बे जलप्लवे। वराभयाम्भोजहस्ता पातु मामुग्रतारिणी ॥ विषमे सङ्कटे घोरे कान्तारे पर्वतालये। खड्गाम्भोजधरा देवी पातु मां दुर्गतारिणी ॥ सिंहव्याघ्रसमाकीर्णे कानने भीषणालये। भीमदंष्ट्रा पातु नित्यं खड्गखर्परधारिणी ॥ सभायां शास्त्रवादे तु रिपुसंघसमाकुले। मुष्टियन्त्रितहस्ता मां पातु नीलसरस्वती ॥ खर्वा प्रत्यालीढपदा शवासनगता शिवा। मुष्टिहस्ता स्मृता देवी सद्यः स्तम्भयतेऽखिलान् ॥ क्षरत्पीयूषकलिका सौम्यस्मेराम्बुजानना। रोगेभ्यः पातु मां नित्यं देवी याऽमृततारिणी ॥ प्रमथेभ्यः पिशाचेभ्यो राक्षसेभ्यो ग्रहादपि। ब्रह्मराक्षसवेताल-कुष्माण्डादिभ्य एव च ॥ सर्वत्र रक्ष मां देवि सिंहास्याद्‌ भूततारिणी ॥ ॐ पूर्वस्यां दिशि चाग्नेये दक्षिणे नैर्ऋते तथा ॥ वारुणे चैव वायव्ये कौबेरे रौद्रगौरवे। छिद्रस्थानेषु सर्वेषु रन्ध्रदेशेषु च क्रमात् ॥ कर्त्तृखर्परधरा देवी पातु मामुग्रतारिणी। सैन्यानि वाहनान्येव गजाश्वादीनि मेऽवतु ॥ उग्रापत्तारिणी देवी सर्वमङ्गलदायिनी। गोत्रं मित्राणि मे रक्ष पत्नीः प्रणयशालिनीः ॥ महोग्रतारिणी पातु सर्वभीतिविनाशिनी ॥ ॐ हुङ्कारबीजोद्भवे लोलजिह्वे भयङ्करि। कर्त्तृखर्पधरे उग्रे उग्रतारे नमोऽस्तु ते ॥ आकाशनिलये तारे ऽयक्षरे ब्रह्मवादिनि। सिद्धानां शुद्धिदे शुद्धे नमस्ते चोग्रतारिणि ॥ सर्वत्र रक्ष मां देवि भयेभ्यश्चोग्रतारिणि। प्रसादादुग्रताराया न मां हिंसन्ति हिंसकाः ॥ ॐ ह्रीं ह्रीं हूं स्त्रीं हसस्त्रीं स्फुर स्फुर हसस्त्रीं फट् प्रस्फुर प्रस्फुर स्त्रीं ह्रीं चट चट हूं ह्रीं श्रीं हसकलरीं प्रचट प्रचट हूं ह्रीं कह कह क्ष्रीं क्षीं क्रों हूं घम घम स्त्रीं हूं मे रिपून् घातय घातय हूं फट् क्लीं क्रों ठः क्ष्रीं सः हसक्षमलवरयूं हसक्षमलवरयीं हसखफ्रें ह्सौं सहूं हंसः सोहं हूं फट् सोहं सर्वाङ्गं मेऽवतु तारिणी। पातु मे सर्वदा नित्या सर्वमन्त्रप्रबोधिनी। भैरवी सुन्दरी काली मातङ्गी छिन्नमस्तका ॥ नीलसरस्वती चेति मन्त्रषट्कमुदाहृतम्। इति ते कथितं वत्स कथितं देवदुर्लभम् ॥ त्रैलोक्यविजयं नाम ब्रह्ममन्त्रैकविग्रहम्। अनेन कवची भूत्वा भावयन्नुग्रतारिणीम्। आधारस्थां परां शक्तिमाकुञ्च्यानीय यत्नतः ॥ षडङ्गसहितां मूर्ध्नि परानन्दे निमील्य च। सहजानन्दजं तेज आत्माभेदेन

भावय ॥ शिवोऽहं भैरवश्चाहं नित्यानन्दोऽहमव्ययः । संहर्त्ताऽहं रिपूणां वै महोग्रतारिणी ह्यहम् ॥ सर्वशक्तिमयो ब्रह्मरूपोऽहं तारिणीमयः । इत्यात्मानं भावयस्त्वं मन्त्राण्यरिषु योजय ॥ ब्रह्ममन्त्रं स्मरन् मन्त्रतेजोभिरुज्ज्वलान्यपि । दहन्त्यविरलान्येव स्वशुष्कान्यनलो यथा ॥ ब्रह्ममन्त्रैः पुटं कृत्वा यो जपेत् तारिकामनुम् । कवचं वा तारिकायास्तस्य सिद्धिर्भवेद् ध्रुवम् ॥ ॐ क्लीं ह्रीं ऐं क्लीं सौं कएईलह्रीं हसकहलह्रीं सकलह्रीं स्त्रीं ऐं क्रों ह्रीं हूं श्रीमदेकजटे ब्रह्मषोडशीस्वरूपिणि त्रिपुरसुन्दरि ह्रीं श्रीं हूं फट् कएईलह्रीं स्त्रीं हूं नीलसरस्वति महातारे सर्वसिद्धिं प्रयच्छ ॐ ह्रीं क्लीं लौं स्त्रीं फट् स्वाहा ।

## अथ यन्त्रम्

अथ यन्त्रवरं वक्ष्ये यद् धृत्वा कवची भवेत् ।
षट्कोणं विन्यसेदादौ मध्ये मूलं तु विन्यसेत् ॥
तारमन्तर्गतं कुर्यात् ससाध्यं लज्जयान्वितम् ।
षट्कोणे मन्त्रषट्कं च कोणक्रोड़े च कुल्लुकम् ॥
केसरेष्वष्ट ताराः स्युर्दले वर्गाश्च सस्वराः ।
प्रणवग्रथितान् वर्णान् बाह्ये तेनैव मुद्रयेत् ॥
शृङ्खलां प्रणवैः कुर्याद् दिग्दशान्तेऽथ बीजकान् ।
शेषान् वर्णान् कोणसंस्थान् शृङ्खलान्तेषु तारिणीम् ॥
योजयेत् तद्बहिः पद्मं षोड़शारं तदन्ततः ।
कामवाणमन्त्रवर्णैः केसराणि तु वेष्टयेत् ॥
नृसिंहक्रोड़ताराणैर्वेष्टयेत् पत्रमध्यमान् ।
तद्बहिः शृङ्खला कार्या लज्जया तत्र तारिणीम् ॥
योजयेत् प्रत्यर्णभेदैः कलाभिर्विजयोत्सुकः ।
बहिः कुर्यादन्तपत्रमब्जं प्राणान्वितच्छदम् ॥
जयताराबीजयुक्तं त्र्यक्षरं जयशब्दतः ।
ताराबीजगर्भितं स्याज्जयबीजं निरामयम् ॥
कालीमालामन्त्रवर्यं-वेष्टनं कूर्चशृङ्खलम् ।
भूबिम्बत्रितयं कुर्यादाद्ये पद्मान्तकादिकान् ॥
तारोपेतान् कोणभागे कूर्चान् क्षार्णान् सजातिकान् ।
तद्बहिर्दिगस्त्रतारान् सिद्धमन्त्रमुदाहृतम् ॥
इन्द्रादीनां मनून् बाह्ये कुर्यात् फट्कारगर्भितान् ।

तद्बहिः कवचं योज्यं लिखेद् गन्धाष्टकैः सुधीः।
भूर्जत्वचि कृतावश्यो लिखेद्धेमशलाकया॥
पीतकौशेयवस्त्रेण रक्तवस्त्रेण वेष्टयेत्।
गन्धाष्टकेन संलिख्य लाक्षया वेष्टयेत् पुनः॥
स्वर्णमध्ये स्थापयेत् तत् सतावरणसंयुतम्।
देवताभेदतः पूज्यं जीवन्यासपुरःसरम्॥
होमं कुर्यात् त्रिमध्वक्तैरष्टोत्तरसहस्रकम्।
सहस्रं तु जपेत् तत्र मूलं साध्यसमन्वितम्॥
गुरुं सम्पूज्य विधिवद् गोभूस्वर्णाम्बरादिभिः।
सन्तोष्य तत्कराद् ग्राह्यं धारयेद् यतमानसः॥
अजेयः सर्वदेवानामसुराणां भवेद् ध्रुवम्।
इदं यन्त्रं महावीर्यं शिरस्थं शवभीतिहम्॥
बाहुस्थं जयदं युद्धे कण्ठस्थं विश्वमोहनम्।
हृदिस्थं कामदं नाभौ स्तम्भनं रोगनाशनम्॥
मुष्टिस्थं द्युतकलहे जयदं काण्डवारणम्।
शिखास्थं शस्त्रसङ्घानां वारणं नात्र संशयः॥
यस्य मूर्ध्नि महाबाहो कवचं ब्रह्मसम्मितम्।
न तस्य गात्रं कृन्तन्ति रणे शस्त्राणि कानिचित्॥
ब्रह्मास्त्रादीनि शस्त्राणि तं दृष्ट्वा विमुखान्यपि।
यान्ति निर्वीर्यतां वत्स सत्यं सत्यं वदाम्यहम्॥
भैरवा यातुधानाश्च राक्षसा ब्रह्मराक्षसाः।
छायां तस्य न लङ्घन्ति किं पुनस्तस्य विग्रहम्॥
दंष्ट्रिणः शृङ्गिणः क्रूराः सिंहव्याघ्रादयस्तथा।
तं दृष्ट्वा तु पलायन्ते तेजसा भयपीडिताः॥
न तत्पीडां प्रकुर्वन्ति ग्रहा नागा सुरादयः।
सिद्धगन्धर्वयक्षाद्या विद्याधरमहोरगाः॥
कृत्याद्रोहं तस्य केचिद् ये कुर्वन्ति स्वतःपरैः।
तांस्तानेव हि खादन्ति उग्रताराप्रभावतः॥
शत्रुतां तस्य ये मूढाः कुर्वन्ति दिग्विदिक्स्थिताः।
आत्मकोपाग्निना दग्धाः प्रणश्यन्ति सबान्धवाः॥

कृत्याद्रोहाः शमं यान्ति साधकस्यास्य दर्शनात् ।
मुच्यन्ते रोगिणो रोगैर्विषमप्यमृतायते ॥
येनेदं धार्यते मूर्ध्ना कवचं चक्रसंयुतम् ।
तं दृष्ट्वा त्रिदशाः सर्वे प्रणमन्ति ससिद्धयः ॥
ये केचिच्छत्रवस्तस्य उग्रा राक्षसमानिनः ।
पतन्ति पादयोस्तस्य उग्राकर्षितमानसाः ॥
सागराः स्थलतां यान्ति वह्निर्गच्छति शीतताम् ।
गिरयः समतां यान्ति तमो भास्वरतां व्रजेत् ॥
प्रचण्डाः सौम्यतां यान्ति साधकस्यास्य दर्शनात् ।
यः पठेत् कवचं दिव्यं महोग्राया इदं शुभम् ॥
मन्त्रसिद्धिर्भवेत् तस्य पुरश्चर्यां विना द्रुतम् ।
सिद्धयोऽष्टौ करस्थाः स्युर्देवीपुत्रोऽयमीरितः ॥
धर्मार्थकाममोक्षाणां भाजनोऽयं न संशयः ।
चिताधूमं यस्य पश्येत् कवची पर्यटन् भुवम् ॥
सोऽपि मोक्षमवाप्नोति का कथा सिद्धिमागताः ।
यस्मिन् यज्ञे प्रयात्येष ब्रह्मवर्मविभूषितः ॥
दर्शनात् तृप्तिमायान्ति पितरः साग्नयः सुराः ।
नारिष्टं तत्र दुर्भिक्षं धर्मव्यतिक्रमो नहि ॥
यत्रास्ते कवची शुद्धः सदा जपपरः सुधीः ।
पठित्वा कवचं यस्तु पुष्पाञ्जलिं ददाति वै ॥
नमो महोग्रतारायै पूजा वर्षायुतं फलम् ।
लभते केन तुष्टा सा उग्रापत्तारिणी शुभा ॥
महाविद्योपासका ये ते पठन्ति शुभेच्छया ।
अन्ये भक्त्या धारयन्तु ते चाप्नुवन्ति तत्फलम् ॥
या स्त्रियो भाग्यतो लब्ध्वा धारयन्ति इदं महत् ।
कवचं तत्प्रभावेण विख्यान् पुत्रान् समाप्नुयुः ॥
सौभाग्यं विपुलं भोग्यमारोग्यं सर्वसम्पदः ।
प्राप्नुवन्ति जयपराः साक्षाद् देवीति सोच्यते ॥
इतीदं कवचं वत्स कथितं तव भक्तितः ।
मम प्राणाधिकं ह्येतद् गोप्तव्यं तत् प्रयत्नतः ॥

राज्यं देयं शिरो देयं नेदं कवचमद्भुतम् ।
न कस्मैचित् प्रदातव्यं सत्यं सत्यं शिखिध्वज ॥
त्वं मे प्राणाधिको यस्माद् देवानामपि रक्षकः ।
अतस्ते गदितं वत्स सावधानं तु साधय ॥
अनेन कवची पूर्वं त्रिपुरं जितवानहम् ।
तारकाख्यं जघानोग्रं संहराऽनेन दर्पितः ॥

श्रीभैरव उवाच—

इति ब्रह्ममयं दिव्यं कवचं शङ्करोदितम् ।
सम्प्राप्य कार्त्तिकेयस्तु जघान तारकासुरम् ॥
इदं गुह्यं मया देवि कवचं प्रकटीकृतम् ।
गोपनीयं प्रयत्नेन स्वयोनिरिव भैरवि ॥
अश्वमेधसहस्राणि राजसूयशतानि च ।
कवचस्य समं नैव ये चाऽन्ये क्रतुकोटयः ॥
ब्रह्महत्यां सुरापानमगम्यागमनं तथा ।
सकृत् स्मृतं दहत्याशु यथाग्निस्तूलराशिकान् ॥
तारिण्याः कालिकायास्तु यः कश्चित् साधको भवेत् ।
अज्ञात्वा कवचं ह्येतन्न सिद्धिमधिगच्छति ॥
अपि कोटिजपेनैव सुप्रीता देवता भवेत् ।
यथा तारा तथा काली या तारा सैव कालिका ॥
उभयोर्नहि भेदोऽस्ति कवचस्यास्य धारणे ।
त्रिशृङ्खलमयं दिव्यं कवचं ब्रह्मसम्मितम् ॥
धारयेद् यस्तु विधिना गुरूपूजापुरःसरम् ।
तस्य प्रीता तारिणी स्यात् सिद्धयस्तु करे स्थिताः ॥
गोभूहिरण्यवस्त्राद्यैः सन्तोष्य गुरुमात्मनः ।
गृहीत्वा कवचं दिव्यमभिषिञ्चेच्छिवोदितैः ॥
अघोराद्यैर्महामन्त्रैरापदुद्धरणेन च ।
मूलेन च सुरास्त्वाद्यैर्गुटिकामभिषेचयेत् ॥
पञ्चामृतैः पञ्चगव्यैः स्वर्णादिपात्रमध्यतः ।
स्थापयित्वाऽर्चयेद्धीमानुपचारैरुदाहृतैः ॥
पुरश्चरणमेतस्य शतार्द्धेनोपपद्यते ।

यथोक्तकुण्डे विहिते स्थापयित्वा हुताशनम् ॥
जुहुयात् त्रिमधुयुक्तैर्विल्वपत्रैः सवज्रकैः ।
अष्टोत्तरसहस्रैस्तु सम्पातैः सेचयेदिदम् ॥
शान्तिमन्त्रैः समभ्यर्च्य धारयेद् यतमानसः ।
यद् यद् वाञ्छति तत् सर्वं प्राप्नोत्यत्र न संशयः ॥
इति निगदितमाद्यं तारिणीवर्म दिव्यं
कवचमतिसुगुप्तं धारयेद् यस्तु भक्त्या ।
शिवमथ उदगीशो(?) ब्रह्मताराप्रसादात्
त्रिभुवनजयलक्ष्मीस्तस्य हस्तस्थितैव ॥

इत्युत्तरगन्धर्वतन्त्रे ताराकल्पे त्रैलोक्यविजयं नाम कवचं सम्पूर्णम् ।

## अथ सामान्यतो यन्त्रलिखनप्रकारः

कालिके—ह्सौर्यन्त्रस्य जीवः स्यान्मध्यबीजादधो न्यसेत् ।
हंसः सोहमिति प्राणश्चैशान्यादिक्रमाल्लिखेत् ॥
इइं नेत्रे न्यसेत् पार्श्वे उऊं श्रोत्रे तथैव च ।
विशेषोऽष्टदलादौ तु गायत्रीलेखनं स्मृतम् ॥
इत्यर्णान् यन्त्रगायत्र्याः प्रतिपत्रं त्रिशो लिखेत् ।
अग्रे रेखावकाशेषु प्रतिष्ठां प्राणदां लिखेत् ॥ इति ॥

तन्त्रान्तरेऽपि—यन्त्रस्य हृदयं बिन्दुयुतं च लेखनं स्मृतम् ।
हंसः सोहं प्राणजीवौ यन्त्रे लेख्यौ प्रयत्नतः ॥
ह्सौर्विसर्गसंयुक्तौ यन्त्रान्तर्विलिखेद् बुध ॥ इति ।

यन्त्रगायत्री यथा—यन्त्रराजाय विद्महे वरप्रदाय धीमहि तन्नो यन्त्रः प्रचोदयादिति ।

## अथ यन्त्रसंस्कारः

वामकेश्वरतन्त्रे— भैरव्युवाच—
चक्रभेदो महादेव त्वत्प्रसादान् मया श्रुतः ।
इदानीं श्रोतुमिच्छामि प्रतिष्ठाकर्मनिर्णयम् ॥

श्रीशङ्कर उवाच—
शृणु देवि प्रवक्ष्यामि जगत्तारिणि कौलिनि ।
तस्योद्यापन-कर्माङ्ग-सर्ववर्ण-विनिर्णयम् ॥
स्नात्वा सङ्कल्पयेन्मन्त्री गुरोरर्चनमाचरेत् ।

गुरुमन्त्रेण विलिखेद् यन्त्रं स्वर्णशलाकया ॥
पञ्चगव्यं ततः कृत्वा शिवमन्त्रेण मन्त्रितम् ।
तत्र चक्रं क्षिपेन्मन्त्री प्रणवेन समाकुलम् ॥
तस्मादुद्धृत्य तच्चक्रं स्थापयेत् स्वर्णपीठके ।
पञ्चामृतेन दुग्धेन शीतलेन जलेन च ॥
स्नापयेच्चन्दनेनाऽपि कस्तूरीकुङ्कुमेन च ।
हाटकैः कलशैर्देवि अष्टभिर्वारिपूरितैः ॥
कषायजलसम्पन्नैः स्नापयेन् मन्त्रमुच्चरन् ।
तत उत्तोल्य तद्यन्त्रं स्थापयेद्धेमपात्रके ॥
यन्त्रराजाय विद्महे महायन्त्राय धीमहि ।
उच्चरेदेतदन्ते तु तन्नो यन्त्रः प्रचोदयात् ॥
स्पृष्ट्वा यन्त्रं कुशाग्रेण गायत्र्या चाभिमन्त्रयेत् ।
अष्टोत्तरं शतं देवि देवताभावसिद्धये ॥
आत्मशुद्धिं ततः कृत्वा षडङ्गैर्देवतां यजेत् ।
तत्रावाह्य महादेवीं जीवन्यासं च कारयेत् ॥
फलताम्बूलनैवेद्यैर्देवीं तत्र समर्चयेत् ।
पट्टसूत्रादिकं दद्याद् वस्त्रालङ्करणादिभिः ॥
मुकुरं चामरं घण्टां यथायोग्यं महेश्वरि ।
सर्वमेतत् प्रयत्नेन दद्यादात्महिते रतः ॥
ततो जपेत् सहस्रं च सकलेप्सितसिद्धये ।
बलिदानं ततः कृत्वा प्रणमेद् यन्त्रराजकम् ॥
अष्टोत्तरं शतं हुत्वा सम्पाताज्यं विनिःक्षिपेत् ।
हेतिसम्पातरीत्या तु गुरुः सर्वं समाचरेत् ॥
गुरवे दक्षिणां दत्त्वा यथाशक्त्या विसर्जयेत् ।

## अथ काम्यबलिः

दक्षिणामूर्त्तिः—पूर्वाह्णे बलिदानं तु कुर्याद् विघ्नोपशान्तये ।
द्विविधो बलिराख्यातो राजसः सात्त्विको बुधैः ॥
राजसो मांसरक्ताद्यः फलत्रयविभूषितः ।
मधुपायससंयुक्तो मधुरत्रयलोलितः ॥
सात्त्विको मांसरहितः शेषमन्यत् पुरोक्तवत् ।

ब्राह्मणो नियतः शुद्धः सात्त्विकं बलिमाहरेत् ॥
बलिहोमक्रियार्थं हि विना पात्रं न सिध्यति ।
अन्नोदकैः पूर्णपात्रं तन्मध्ये निक्षिपेद् बलिम् ॥

नरसिंहपुराणे—आर्द्रामलकमानेन कुर्याद्धोमहविर्बलीन् ।

त्र्यैपुरपद्धत्याम्—बल्यन्ते छागलबलिं तथा मेषं सुरेश्वरि ।
प्रदद्यात् सर्वकालेषु सर्वकामार्थसिद्धये ॥
नित्ये नैमित्तिके काम्ये माहिषं बलिमाहरेत् ।
जयाय सर्वकामाय देवीलोकाप्तिसिद्धये ॥
सर्वलक्षणसंयुक्तं पशुं संस्नाप्य मन्त्रतः ।
देव्यग्रे स्थापयित्वाऽर्घ्योदकैः संप्रोक्षयेत् ततः ॥
अस्त्रमन्त्रेण संरक्ष्य कवचेनाऽवगुण्ठ्य च ।
मूलमन्त्रं समुच्चार्य धेनुमुद्रामृतीकृतम् ॥
गन्धपुष्पाक्षतैः सम्यक् परिपूज्योपचारकैः ।
कर्णे तस्य पठेन् मन्त्रं पशुपाशविमोचनम् ॥

ॐ पशुपाशाय विद्महे विप्रकर्णाय धीमहि तन्नो जीवः प्रचोदयात् ।

गायत्रीयं समाख्याता पशुपाशविमोचिनी ।
इमां पठेद् दक्षकर्णे तस्य मुक्तिप्रसिद्धये ॥

## खड्गमन्त्रः

ततः खड्गं यजेन् मन्त्री मन्त्रेणाऽनेन दक्षतः ।
तारं च भुवनेशानीं कालियुग्मं समालिखेत् ॥
वज्रेश्वरिपदं पश्चाल्लोहदंष्ट्रां ततः परम् ।
ङेन्तां हृद् वसुयुग्मैकसंख्यवर्णो मनुर्मतः ॥
अनेन गन्धपुष्पाद्यैः खड्गमभ्यर्चयेद् बुधः ।
ततस्तस्य मुष्टिदेशे मध्ये चाग्रे यथाक्रमम् ॥
गन्धपुष्पाक्षतैर्मन्त्री मिथुनत्रितयं यजेत् ।
वागीशीसहितो ब्रह्मा लक्ष्मीनारायणौ तथा ॥
उमामहेश्वरौ चेति संप्रोक्तं मिथुनत्रयम् ।
ततश्चाऽनेन मन्त्रेण तं खड्गमभिमन्त्रयेत् ॥
खड्गायाऽसुरनाशाय शक्तिकार्याय तत्पर ।
पशुश्छेद्यस्तया शीघ्रं खड्गनाथ नमोऽस्तु ते ॥

ततस्तु ताम्रपात्रस्थ-कुशाक्षतजलादिकम्।
गृहीत्वा मूलमुच्चार्य सङ्कल्प्य पशुमुत्सृजेत् ॥
गृहीत्वाऽक्षततोयादि पशोः शिरसि संत्यजेत्।
ततस्तेनैव खड्गेन मूलमन्त्रेण साधकः ॥
पशुच्छेदं प्रकुर्वीत स्वयं देवीमनुस्मरन् ॥

## बलिमस्तकपतनफलम्

दक्षिणे पतिते वृद्धिर्वामभागे च निन्दितम्।
सव्ये तु पतिते छेदे देवीमन्त्रं स्मरेद् बुधः ॥
ततः कुण्डादिके हुत्वाहुतिभिर्दशपञ्चभिः।
शमयेद्धूंकृतेर्दोषं बलिलक्षणलक्षितम् ॥

श्रीक्रमसंहितायाम्—यत्नतस्तं बलिं दद्यान्न हन्यादात्मना पुनः।
न हिंसेदखिलान् जन्तून् न हिंसेद् वीरवन्दितान् ॥
स्वहस्तैर्न बलिं दद्यादतो हिंसां विवर्जयेत्।
यदि हन्यात् प्रमादेन रौरवं नरकं व्रजेत् ॥

एतत्प्रायश्चित्तं तु—सर्वं भुक्त्वा जगद्भूत्वा दुर्गां नत्वा विमुच्यते।

## ग्राह्यबलिः

कालिकापुराणे—साधकैर्बलिदानेषु ग्राह्यः सर्वसुरस्य तु।
पक्षिणः कच्छपा ग्राह्या मत्स्या नवविधा मृगाः ॥
महिषो गवयो गावश्छागो वभ्रूश्च शूकरः।
खड्गश्च कृष्णसारश्च गोधिका सरभो हरिः।
शार्दूलश्च नरश्चैव स्वगात्ररुधिरं तथा ॥
चण्डिकाभैरवादीनां बलयः परिकीर्त्तिताः।
बलिभिः साध्यते मुक्तिर्बलिभिः साध्यते दिवम् ॥
बलिदानेन सततं जयेच्छत्रून् नृपान् नृपः।
मत्स्यानां कच्छपानां च रुधिरैः सततं शिवा ॥
मासैकं तृप्तिमायाति ग्राहैर्मासांस्तु त्रीनथ।
मृगाणां शोणितैर्देवी नराणां च विशेषतः ॥
अष्टौ मासानवाप्नोति तृप्तिं कल्याणदा च सा।
गोगोधिकानां रुधिरैर्वार्षिकीं तृप्तिमाप्नुयात् ॥
कृष्णसारस्य रुधिरैः शूकरस्य च शोणितैः।

प्राप्नोति सततं देवी तृप्तिं द्वादशवार्षिकीम् ॥
अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम् ।
महिषाणां च खड्गा(छागा)नां रुधिरैः शतवार्षिकीम् ॥
तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा ।
सिंहस्य सरभस्याऽथ स्वगात्रस्य च शोणितैः ॥
देवी तृप्तिमवाप्नोति सहस्रं परिवत्सरान् ।
मांसैरपि तथा तृप्ती रुधिरैर्यस्य यावती ॥
कृष्णसारस्य मांसेन तथा खड्गेन चण्डिका ।
वर्षान् पञ्चशतान्येव तृप्तिमाप्नोति निश्चितम् ॥
रोहितस्य तु मत्स्यस्य मांसैर्वाध्रीणसस्य च ।
तृप्तिमाप्नोति वर्षाणां शतानि त्रीणि चण्डिका ॥
नीलग्रीवो रक्तशीर्षः कृष्णपादः सितच्छदः ।
वाध्रीणसः स्यात् पक्षीशो देव्याः शम्भोरपि प्रियः ॥
नरेण बलिना देवी सहस्रं परिवत्सरान् ।
तृप्तिमाप्नोति कामाख्या भैरवो मम रूपधृक् ॥
मन्त्रपूतं शोणितं च पीयूषं जायते सदा ।
मस्तकं चापि तस्यास्ति मांसं चापि सदा शिवा ॥
तस्मात् तत्पूजने दद्याद् बलेः शीर्षं च लोहितम् ।
अमन्त्रपूतं यद् दत्तं दातुः सर्वविनाशकृत् ॥
भोज्ये होमे च मांसानि नियुञ्जीयाद् विचक्षणः ।
पूजासु नाम मांसानि दद्याद् वै साधकः क्वचित् ॥
ऋते तु लोहितं शीर्षममृतं तत् तु जायते ।
कूष्माण्डमिक्षुदण्डं च मद्यमासवमेव च ॥
एते च बलयः प्रोक्तास्तृप्तौ छागसमाः स्मृताः ।
चन्द्रहासेन कर्त्र्या वा छेदनं मुख्यमुच्यते ॥
दात्रासि-धेनु-क्रकच-शङ्कुलाभिस्तु मध्यमम् ।
( असिधेनुः स्वल्पखड्गः शङ्कुला वक्रकर्त्तरी ॥ )
क्षुरक्षुरप्रभल्लैश्चैवाऽधमं परिकीर्त्तितम् ।
एभ्योऽन्यैः शक्तिबाणाद्यैर्बलिश्छेद्यः कदापि न ॥
नास्ति देवो बलिं तं तु दाता मृत्युमवाप्नुयात् ।

हस्तेन छेदयेद् यस्तु प्रोक्षितं साधकः पशुम् ॥
पक्षिणं वा ब्रह्महत्यां समाप्नोति सुदुःसहाम् ।
नामन्त्र्य खड्गं तु बलिं नियुञ्जीत विचक्षणः ॥
खड्गस्यामन्त्रणे मन्त्रा यावन्तः कथिताः पुरा ।
महामायाबलौ ते वै योज्यास्तत्रोदिता बुधैः ॥

### खड्गमन्त्रः

ह्रिः कालीति ततो देव्या वज्रेश्वरिपदं तथा ।
ततोऽनु लोहदण्डायै नमः शेषे नियोजयेत् ॥
सम्पूज्याऽनेन मन्त्रेण खड्गमादाय पाणिना ।
कालरात्र्यास्तु मन्त्रेण तं खड्गमभिमन्त्रयेत् ॥
नेत्रबीजस्य मध्यं तु द्विरावृत्य प्रयोजयेत् ।
ततस्तु कालीकालीति विकटदंष्ट्रे करालिनि ॥
हान्तादीनां तृतीयेन स्वरेणैकादशेन वै ॥
योजितो नादबिन्दुभ्यां द्वौ तत्पश्चान् नियोजयेत् ।
फेत्कारिणिपदं पश्चात् खादय छेदयेति च ।
सर्वदुष्टानिति ततो द्विर्मारय लुलापकम् ॥
खड्गेन छिन्धि छिन्धीति ततः किल किलेति वै ।
ततश्चिकि चिकीत्येवं ततः पिब पिबेति च ॥
ततो हं रुधिरं चेति स्फौं स्फौं किरिकिरीति च ।
कालिकायै नम इति कालरात्र्यास्तु मन्त्रकम् ॥
इत्यनेन तु मन्त्रेण करवालेऽभिमन्त्रिते ।
कालरात्रिः स्वयं तस्मिन् प्रसीदत्यरिहानये ॥
ततो देवतामुद्दिश्य काममुद्दिश्य चात्मनः ।
छेदयेत् तेन खड्गेन बलिं पूर्वमुखं तु तम् ॥
अथ उत्तरवक्त्रं तं स्वयं पूर्वाननस्तथा ।
पूर्वोक्तान् सैन्धवादींश्च रक्ते तस्य नियोजयेत् ॥
उत्तराभिमुखो भूत्वा बलिं पूर्वमुखं तथा ।
निरीक्ष्य साधकः पश्चादिमं मन्त्रमुदीरयेत् ॥
पशुस्त्वं बलिरूपेण मम भाग्यादुपस्थितः ।
प्रणमामि ततः सर्वरूपिणं बलिरूपिणम् ॥

चण्डिकाप्रीतिदानेन दातुरापद्विनाशनम् ।
चामुण्डाबलिरूपाय बले तुभ्यं नमोऽस्तु ते ॥
यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
अतस्त्वां घातयाम्यद्य तस्माद् यज्ञे बधोऽबधः ॥
इमं देहं परित्यज्य भूत्वा देववपुर्धरः ।
मोदस्व प्रमथैः सार्द्धं यावदिन्द्राश्चतुर्दश ॥
ऐं ह्रीं श्रीं इति मन्त्रेण तं बलिं मत्स्यरूपिणम् ।
चिन्तयित्वा न्यसेत् पुष्पं तस्य मूर्धनि भैरव ॥
ततो देवीं समुद्दिश्य काममुद्दिश्य यत्नतः ।
अभिषिच्य ततः पश्चात् करबालं प्रपूजयेत् ॥
ध्यानं यथा—कृष्णं पिनाकपाणिं च कालरात्रिस्वरूपिणम् ।
रक्ताक्षं रक्तवस्त्रं च सपाशं पीतशोणितम् ॥
ॐ असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपालनमोऽस्तु ते ॥
पूजयित्वा ततः खड्गं आं हूं फड़िति मन्त्रकैः ।
गृहीत्वा विमलं खड्गं छेदयेद् बलिमुत्तमम् ॥
ॐ ह्रीं ऐं ह्रीं श्रीं कौशिकि रुधिरेणाप्यायतामिति ।
पात्रे नियोजयेद्रक्तं शिरसि च प्रदीपकम् ।
एवं दत्त्वा बलिं पूर्णं फलं प्राप्नोति साधकः ॥
हीनं तु स्याद्धीनतायां निष्फलः स्याद् विपर्ययात् ।
बलिदाने तु दुर्गायाः सर्वत्राऽयं विनिश्चयः ॥

## बलिपात्रनिरूपणम्

सौवर्णं राजतं ताम्रं रैत्यं पत्रपुटं तथा ।
माहेयं कांस्यमथवा यज्ञकाष्ठमय च वा ॥
पात्रं रुधिरदानाय कर्त्तव्यं विभवावधि ।
न लौहे वाल्कले वापि न त्रपौ नापि सीसके ॥
दद्याद्रक्तं बलीनां तु भूमौ स्रुचि स्रुवेऽथवा ।
न घटे भूतले नापि न क्षुद्रे पान-भाजने ॥
रुधिराणि प्रदद्यात् तु भूतिकामो नरोत्तमः ।
हयमेधमृते दद्यान्न कदाचिद् बलिं हयम् ॥

तथा दिक्पालमेधेषु गजं दद्यान्नराधिपः ।
न कदाचित् तथा देव्यै प्रदद्याद्धयहस्तिनौ ॥
सिंहं व्याघ्रं नरं वापि स्वगात्ररुधिरं तथा ।
न दद्याद् ब्राह्मणो मद्यं तथा देव्यै कथञ्चन ॥
सिंहव्याघ्रनरान् दत्त्वा ब्राह्मणो नरकं व्रजेत् ।
इहापि स्यात् स हीनायुः सुखसौख्यविवर्जितः ॥
स्वगात्ररुधिरं दत्त्वा चात्महत्यामवाप्नुयात् ।
मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ॥
न कृष्णसारं वितरेद् बलिं तु क्षत्रियादयः।
ददतः कृष्णसारांस्तु ब्रह्महत्यामवाप्नुयात् ॥
प्रभूतबलिदाने तु द्वौ वा त्रीन् स्वाग्रतः कृतान् ।
पूजयेत् प्रमुखान् कृत्वा सर्वान् तन्त्रेण साधकः ॥
दद्याच्च महिषं देव्यै भैरव्यै भैरवाय च ।
अनेनैव तु मन्त्रेण तथा तं पूजयेद् बलिम् ॥
यथावाहं भवान् द्वेष्टि यथा वहसि चण्डिकाम् ।
तथा मम रिपून् हिंस शुभं वह लुलापक ।
यमस्य वाहनं त्वं तु बहुरूपधराऽव्यय ।
आयुर्वित्तं यशो देहि कासराय नमोऽस्तु ते ॥
अन्येभ्योऽपि च देवेभ्यो देव्यै यद् यत् प्रदीयते ।
तदाऽर्चितं प्रदद्यात् तु पूजिताय सुराय वै ॥

## निषिद्धबलिः

काणं व्यङ्गं चातिवृद्धं रोगिणं च गलव्रणम् ।
क्लीबं हीनाङ्गमथवा वृद्धलिङ्गं गलत्कफ(द्व्रण)म् ॥
श्वित्रिणं चातिह्रस्वं च महापातकिनं तथा ।
पशूनां पक्षिणां चापि नराणां च विशेषतः ॥
स्त्रियं न दद्यात् तु बलिं दत्त्वा नरकमाप्नुयात् ।
न च त्रिपक्षकान् न्यूनं प्रदद्याद् वै पतत्रिणम् ॥
काणव्यङ्गादिदुष्टं वै न पशुं न पतत्रिणम् ।
छिन्नलाङ्गूलकर्णादि भग्नश्टङ्गं तथैव च ॥
भग्नदन्तादिकं चापि न दद्यात् तु कदाचन

सिंहं च दक्षिणे दद्यान् महिषं वितरेत् पुरः ॥
पक्षिणं वामतो दद्यादग्रतो देहशोणितम् ।
क्रव्यादानां पशूनां च पक्षिणां च शिरोऽसृजम् ॥
वामे निवेदयेत् पार्श्वे जलजानां तु सर्वशः ।
कृष्णसारस्य कूर्मस्य खड्गस्य शशकस्य च ॥
ग्राहाणामथ मत्स्यानामग्र एव निवेदयेत् ।
पृष्ठदेशे न दद्यात् तु शिरो वा रुधिरं बलेः ॥

महाकालसंहितायाम्—

कृष्णसारं तथा छागं मृगादानां विधानपि ।
मेषं च महिषं घृष्टिं तथा पञ्चनखानपि ॥
कपोतं टिट्टिभं हंसं चक्रवाकं च लावकम् ।
शरालि-तित्तिरिमत्स्यान् कलविङ्कं च फेरवम् ॥
अनुक्तं नैव दातव्यं द्विजवर्गं कदाचन ।
सिंहं व्याघ्रं नरं तद्वत् क्षत्रियः परिकल्पयेत् ॥
विहाय कृष्णसारं च क्षत्रियादेर्भवेद् बलिः ।
सिंहं व्याघ्रं नरं दत्त्वा ब्राह्मणो ब्रह्महा भवेत् ।
मूषं मार्जारकं चाषं शूद्रो दत्त्वा पतत्यधः ॥
चन्द्रहासेन खड्गेन हन्यादेकप्रहारतः ।
उत्थाय हननं कुर्यान् नोपविश्य कदाचन ॥
स्वहस्तेन पशुं हत्वा पशुयोनिमवाप्नुयात् ।
किं च त्रिपक्षतो न्यूनं महिषादींस्त्रिवर्षतः ॥
अन्यं त्रिमासतो न्यूनं न दद्याच्च कदाचन ।
वृद्धं वा विकृताङ्गं वा न कुर्याद् बलिकर्मणि ॥
स्वगात्ररुधिरं दातुं क्षत्रियादेर्भवेद् विधिः ।
सात्त्विको जीवहत्यां हि कदाचिदपि नो चरेत् ॥
इक्षुदण्डं च कुष्माण्डं तथा वन्यफलादिकम् ।
क्षीरपिण्डैः शालिचूर्णैः पशुं कृत्वा चरेद् बलिम् ॥
तत्तत्फलविशेषेण तत्तत्पशुमुपानयेत् ।
कूष्माण्डं महिषत्वेन छागत्वेनैव कर्कटीम् ॥

इति महामहोपाध्याय-ठक्कुर-श्रीनरसिंह-विरचिते ताराभक्ति-सुधार्णवे
काम्यविधिर्नाम दशमस्तरङ्गः ॥ १० ॥

## एकादशस्तरङ्गः

### अथ ताराभेदाः

ब्रह्मसंहितायाम्—विद्या बहुविधा वक्ष्ये शृणुष्वैकमना मुने ।
पर्वते उज्जटे वापि निर्जने वा चतुष्पथे ॥
जलावर्त्ते दंष्ट्रिभये राजादिभय आगते ।
नगरे हट्टके वापि महावृक्षतलेषु च ॥
नदीतीरे व्यालभये वृश्चिकादिभयेषु च ।
जपेद् बहुविधानेतान् भयमाशु विनाशयेत् ॥
पर्वते विगतिं याति इमं मन्त्रमुदीरयन् ।
ॐकारं च समुद्धृत्य भये महाभये ततः ॥
रमाबीजं वह्निजाया दशाक्षरीमनूत्तमम् ।
मूलविद्यां पुरो जप्त्वा इमं मन्त्रं ततः परम् ॥
उग्रताराप्रसादेन पर्वते विहरेन् मुदा ।
उज्जटे च भये जाते इमं मन्त्रं शतं जपेत् ॥
ॐकारबीजमुद्धृत्य विकटे च ततः परम् ।
शीघ्रं विघ्नं ततः पश्चान्नाशयद्वितयं ततः ॥
स्वाहेति च ततः पश्चाद् दशकृत्वो जपेन् मनुम् ।
इमां विद्यां च दशधा चान्ते मूलमनुं दश ॥
एकजटाप्रसादेन उज्जटे विहरेन् मुदा ।
निर्जने च भये प्राप्ते जपेद् विद्यां दशाक्षरीम् ॥
कालीति च समुद्धृत्य महाकालि ततः परम् ।
ॐ ॐ स्वाहेति च ततो मन्त्रोऽयं सर्वसिद्धिदः ॥
महाविद्यां प्रवक्ष्यामि अनुत्तरमनूत्तमम् ।
यस्याः साधनमात्रेण वश्यो भवति चापरः ॥
ऋषिर्वाक्स्तम्भको देवश्छन्दो निवृत्तथैव च ।
देवतानुत्तरः प्रोक्तः शिवोऽहमित्युदीरितम् ॥
तत्र पूजां विधायादौ सप्तलक्षं जपेन् मनुम् ।
तस्य दर्शनमात्रेण वैरिश्चिन्द्र इवाऽपरः ॥

दशदशगुणं जप्त्वा रोचनातिलकं यदि ।
राजानोऽपि च दासत्वं किं पुनः क्षुद्रमानुषाः ॥
पर्वते विपिने दुर्गे विघ्नं च यदि जायते ।
क्षणं ध्यात्वा मनुं जप्त्वा नरो गच्छेद् यथासुखम् ॥
शृणु विप्र महागुह्यं गुह्याद् गुह्यतरं परम् ।
येन विज्ञानमात्रेण सत्वरं सुखदायकम् ॥
रतियोगात् सदा जाप्यं महापातकनाशनम् ।
केवलं कुलयोगेन प्रसन्ना मोक्षदायिनी ॥
धनार्थी प्रजपेद् विद्यां परयोषित्समागमे ।
विद्यार्थी प्रजपेद् विद्यां कुलीनाश्रयमेव वा ॥
विपरीतरतासक्तो भवेच्च हृदयोपरि ।
तस्या हस्ते सदा कार्यं पूजाद्रव्यं समुच्छ्रितम् ॥
मकारपञ्चकैर्युक्तं दद्याद् देव्यैर्विशेषतः ।
पञ्चद्रव्यविहीनेन न सिध्यति कदाचन ॥
कुलयोगविहीनेन तारामन्त्रं न सिध्यति ।
एतद्रहस्यमतुलं संक्षेपाद् गदितं मया ॥
एतत्प्रकारेण तारां यो दशवारान् जपेत् सुधीः ।
उग्रताराप्रसादेन निर्जने च सुखी भवेत् ॥
चतुष्पथभये विद्यां जपेदष्टादशाक्षरीम् ।
प्रणवं पूर्वमुद्धृत्य मथयुग्मं ततः परम् ॥
स्फोट स्फोट ततस्तूक्त्वा महामहेश्वरीति च ।
स्वाहान्ते प्रणवं दद्याद् दशवारान् जपेत् सुधीः ॥
चतुष्पथनिवासिनीमुग्रतारास्वरूपिणीम् ।
उग्रताराप्रसादेन चतुष्पथे भयं नहि ॥
प्रजपेच्छमनीं तारां रक्षिणीं सर्वसिद्धिदाम् ।
प्रणवं पूर्वमुद्धृत्य तारे तुतारे तुरे च ॥
ततः स्वाहेति मन्त्रोऽयं मया प्रोक्तो दशाक्षरः ।
तत्क्षणात् स्मरणादेव भयमाशु विनाशयेत् ॥
जलाद् भयं भवेन्नैव उग्रताराप्रसादतः ।
दंष्ट्रिणां भयमुत्पन्ने दूर्द्वं भूत्वा जपेन् मनुम् ॥

प्रणवं पूर्वमुद्धृत्य उग्रतारे ततः परम् ।
मां तारय तारय स्वाहा दशवारान् जपेन् मनुम् ॥
दंष्ट्रिभयात् समुत्तीर्य उग्रताराप्रसादतः ।
यदि राजभयापत्तिस्तदा विद्यां जपेत् सुधीः ॥
प्रणवं पूर्वमुद्धृत्य रमाबीजं ततः परम् ।
सर्ववशङ्करि स्वाहा वेदाद्यं त्रिगुणीकृतम् ॥
सर्वसम्मोहिनी स्वाहा एकविंशतिमेव च ।
जपेद् द्वादशवाराणि राजा वश्यश्च तत्र वै ॥
नगरे यदि भयं विन्द्यादिमं मन्त्रमुदीरयेत् ।
कामबीजं समुच्चार्य प्रणवं स्वाहया युतम् ॥
जपेद् विद्यां दशकृत्वस्तत्क्षणाद् भयनाशनम् ।
हट्टके विगतिं याति कामबीजं ततो जपेत् ॥
प्रजपेद् दशवाराणि भयमाशु विनाशयेत् ।
महावृक्षतले ज्ञातिभयं यदि प्रमादतः ॥
मकारं बिन्दुना युक्तं पञ्चवारं जपेत् सुधीः ।
भयं नाशयते तत्र देवीपुत्रस्तु जायते ॥
नदीतीरे च कुगतिं जपेद् विद्यां तथा शुचिः ।
प्रणवं वायुबीजं च कामबीजं त्रपात्मकम् ॥
अन्ते वह्निवधूं दद्याद् दशकृत्वो जपेन् मनुम् ।
व्यालं दृष्ट्वा यदि भयं दर्पदृष्टिर्जपेन् मनुम् ॥
व्यालव्यालं समुच्चार्य गरुडाय ततः परम् ।
स्वाहा स्वाहेति वक्तव्यं व्यालभीतिर्न जायते ॥
वृश्चिकालोकनात् त्रासे जपेन् मन्त्रमनन्यधीः ।
सदा ॐकारान् जप्त्वा तु तत् स्थाने करमर्दनम् ॥
दूरीभवति तत्सर्वं सर्वेश्वरीप्रसादतः ।
एतन्मन्त्राणि सर्वाणि जपेदयुतमात्रया ॥
तेन वीर्यवती विद्या विनिर्यात् तज्जपं विना ।
तथा—राजवश्यकरा मन्त्राः करिवश्यकरास्तथा ॥
लुलाप-खर-शार्दूलवश्या मन्त्राः प्रकाशिताः ।
सिद्धिमन्त्रस्तु तारायाः कथितो भुवि दुर्लभः ॥

धनुर्विद्यावश्यमन्त्रं खड्गवश्यं तथैव च ।
शस्त्रनिवारिणी विद्या काण्डनिवारिणी तथा ॥
अग्निस्तम्भं वैरिस्तम्भं जलस्तम्भं यथाविधि ।
श्रीमदेकजटा देवी सर्वसिद्धिप्रदायिनी ॥
उन्मत्तकरिणो वाजिकर्णपुटे जपेद् यदि ।
तत्क्षणं वश्यतां याति चूर्णकुम्भसमो भवेत् ॥
कङ्कालीति च वक्तव्यं गुह्यकाली वदेत् ततः ।
ॐ कालि स्वाहेति मन्त्रं तथा यथा दशावधि ॥
वत्सलोहिकरी(?) यस्माद्धस्तं दत्त्वा शिरोपरि ।
अयुतं च जपं कृत्वा सर्वगुणान्वितो भवेत् ॥
पञ्चान्तकं बिन्दुयुतं गणेश्वराय ततः परम् ।
एवंकरी स्थिरीकृत्य ॐ ॐ स्वाहेति तद्विधा ॥
गजवश्यकमन्त्रोऽयं राजपुत्रप्रियङ्करः ।
महिषं महत्तरं दृष्ट्वा मुद्रां बद्ध्वा तु अङ्कुशम् ॥
अग्रे भूत्वा मनुं जप्त्वा वश्यं याति दिने दिने ।
ॐकारं बीजमुद्धृत्य शिवायेति ततः परम् ॥
दुर्गे दुर्गे ततः पश्चादग्निजायान्तको मनुः ।
षड्वारं प्रजपेन् मन्त्रं सिद्धिरेव न संशयः ॥
खरश्च दृष्टिमात्रेण स्वाहेति च जपेन् मनुम् ।
स्वरस्य याति वशतां सिद्धिश्च नान्यथा भवेत् ॥
शार्दूलदर्शमात्रेण जपेत् कालीमहामनुम् ।
दशवारं जपेद् विद्यां भयमाशु विनाशयेत् ॥

## कार्मुकसिद्धिप्रकारः

अथातः संप्रवक्ष्यामि धनुर्मन्त्रं विशेषतः ।
कार्मुकस्य मध्यदेशे कामबीजं लिखेत् ततः ॥
पूजयेत् कामबीजं सद्गन्धपुष्पैश्च धूपकैः ।
दृश्वग्रे प्रणवं लेख्यं मध्ये मायां लिखेत् ततः ॥
अन्ते वह्निवधूं दद्यात् पूजयेच्च यथाविधि ।
एवं विधिक्रमेणैव मासमेकं प्रपूज्य च ॥
मासान्ते च बलिं दत्त्वा करे धृत्वा तु कार्मुकम् ।

यस्योद्देशे क्षिप्यते तु यद्ध गात्रे पतति खलु ॥
ब्रह्मास्त्रस्य समो भूत्वा तिष्ठेद्ध बाणः सकार्मुकः ।

## खड्गसिद्धिप्रकारः

अष्टलोहं समाहृत्य खड्गं कृत्वा तु निश्चितम् ।
तन्मध्ये च लिखेच्चक्रं रम्यं वसुदलात्मकम् ॥
षट्कोणं मध्यदेशे तु तत्र बीजं समालिखेत् ।
बीजं कामकलायुक्तं पक्षमात्रं जपेन् मनुम् ॥
जपान्ते तु श्मशाने च निखनेन् मध्यदेशके ।
अयुतं तत्र संजप्य खड्गसिद्धिस्ततो भवेत् ॥
खड्गं धृत्वा तु वक्तव्यं वैरिस्कन्धं द्विधा कुरु ।
एवमुक्त्वा तु खड्गं वै मुञ्चेच्छत्रुप्रदेशके ॥
छित्वा छित्वा पुनश्छित्वा पुनरायाति कौलिकम् ।

## अस्त्रनिवारिणी विद्या

अस्त्रनिवारणीं विद्यां कथयामि महामुने ।
हृल्लेखां चरमां शक्तिं कामं वह्निवधूं तथा ॥
ठान्तत्रयं बिन्दुयुतं प्रणवाद्येन संयुतम् ।
चतुष्पथस्य रजसा मन्त्रितं गात्रभूषितम् ॥
एवं कृत्वा दृढो भूत्वा परास्त्रेण न वाध्यते ।
इमां विद्यां जपित्वा तु श्रीबीजादौ यदा भवेत् ॥
रजसा पाटलं गात्रं काण्डनिवारणी तथा ।
लिखित्वा स्वकरे मन्त्रं मुष्टिबन्धं तु कारयेत् ॥
स्तम्भयत्याशु सर्वाणि यावन् मुष्टिं न मुञ्चति ।
अग्निं जलं वैरिणं च एष स्तम्भविधिः परः ॥
एकजटाप्रसादेन महासिद्धीश्वरो भवेत् ।
उग्रताराप्रसादेन सिद्धयोऽष्टौ भवन्ति हि ॥
महानीलप्रसादेन वाणी-प्रसरता भवेत् ।
हंसताराप्रसादेन वैरिपक्षक्षयङ्करी ॥
बीजखण्डाप्रसादेन राजवल्लभतां व्रजेत् ।
उग्रजटाप्रसादेन हृष्टिः पुष्टिः प्रजायते ॥

श्रीवज्रिणीप्रसादेन वज्रदेहो भविष्यति ।
महाकालीप्रसादेन गुटिका चैव सिध्यति ॥
महाघोराप्रसादेन नानाविद्या प्रसिध्यति ।
मूलविद्यां जपित्वा तु एतां विद्यां जपेद् यदि ॥
सर्वसिद्धिपरिप्राप्तिर्देववद् विहरेत् भुवि ।

## अथ महामन्त्राः

मायातन्त्रे— श्रीभगवानुवाच—

अथ तारामनून् वक्ष्ये भुक्तिमुक्तिफलप्रदान् ।
यस्य स्मरणमात्रेण जगद् वश्यं भवेद् ध्रुवम् ॥
तारा चोग्रा महोग्रा च वज्रा नीला सरस्वती ।
कामेश्वरी भद्रकाली इत्यष्टौ तारिणी स्मृता ॥
ऊष्मवर्णगतो जीवो निगमस्वरसंयुतः ।
नादबिन्दुसमाक्रान्तस्तत्त्वरश्मिसमन्वितः ॥
कपिला वामकर्णश्च नादाद्यं बिन्दुशेखरम् ।
पार्श्वान्त्यं च तथा आन्तं शवार्णं परिकीर्त्तितम् ॥

जीवो हकारः । ऊष्मवर्णो रेफस्तद्गतः । निगमस्वरः ईकारः । एतेन भुवनेश्वरीबीजम् । तत्त्वरश्मिशब्देन वधूबीजमुच्यते । कपिला हकारः । वामकर्णो दीर्घ उकारः । एतेन कूर्चबीजम् । पार्श्वः पकारः । तदन्त्यः फकारः । अन्तष्टकारः । तेन फडिति सिद्धम् ।

मध्यादिमायाकवचं द्वितीयं मन्त्रमुत्तमम् ।
विपरीतं त्रिधा ज्ञेयं कूर्चाद्यं च तुरीयकम् ॥
मायादिकवचान्तं च पञ्चमं परिकीर्त्तितम् ।
मायामध्यगतं षष्ठं द्वितीयान्त्यं च सप्तमम् ॥
अष्टमं कवचमध्यं स्यादेवं भेदाष्टकं भवेत् ।
त्र्यक्षरस्य विशेषोऽयं फटो यत्र न तत्र वै ॥
जपे तु त्र्यक्षरं ज्ञेयं न्यासे सर्वं प्रतिष्ठितम् ।

त्रिधेति तृतीयामित्यर्थः ।

ऋषिः स्यादष्टकश्छन्दो ह्यनुष्टुब् देवता तथा ।
शम्भुपत्नी महेशानि चतुर्वर्गेषु यो जपेत् ॥
काललक्षं जपेन् मन्त्रमेवमुक्तेन वर्त्मना ।

ध्यानपूजादिकं सर्वं पूर्ववत् समुपाचरेत् ॥

काललक्षं षड्लक्षम्। भैरवतन्त्रे—

वेदाद्यं चैव लज्जां च वधूकूर्चं नमोऽन्वितम्।
तारा षड्क्षरी विद्या सर्वतन्त्रेषु गोपिता ॥
कूर्चं मायां वधूं चैव पुनः कूर्चं च फट्युतम्।
एषा विद्या महाविद्या बीजतारा प्रकीर्त्तिता ॥
कामं लज्जां च स्त्रीबीजं कूर्चबीजं तथाहि फट्।
एषा हि परमा विद्या सर्वकामप्रदायिका ॥
प्रणवं चैव लज्जां च कूर्चयुग्मं नमोऽन्वितम्।
एषा षड्क्षरी विद्या सर्वतन्त्रेषु गोपिता ॥
वाग्भवं प्रथमं देवि बालायाश्च तृतीयकम्।
वेदाद्यं वाग्भवं देवि कामं च स्वाहया युतम् ॥
एषा त्वष्टाक्षरी विद्या ब्रह्मविद्या प्रकीर्त्तिता।
बीजमन्त्राः स्वतन्त्राः स्युस्तारिण्याः सर्वसिद्धिदाः ॥
एते भेदा महोग्रायाः पुरुषार्थप्रवर्त्तकाः।
आयुःश्रीकान्तिकविता-विद्यासौभाग्यदायिकाः ॥
अन्ते निरामयं ब्रह्म जीवन्मुक्तिप्रदायिकाः।

स्वच्छन्दसंग्रहे—शिवबीजं महेशानि शक्तिबीजं ततः परम्।
बिन्दुसर्गसमायुक्तं वेदाद्यं तदधः पठेत् ॥
माया-त्रीं-वर्मबीजान्तं हंसबीजमुदाहृतम्।
एषा त्वष्टाक्षरी विद्या कथिता भुवि दुर्लभा ॥
आज्ञासिद्धिमवाप्नोति त्र्यैलोक्यं वशमानयेत्।
वशमायान्ति सहसा वेदविद्याश्चतुर्दश ॥
हंसतारामहाविद्या तव स्नेहात् प्रकाशिता।
कवित्वमाहरेत् पुंसां धनार्थी धनमाप्नुयात् ॥
मोक्षार्थी लभते मोक्षं नात्र कार्या विचारणा।

मातृकार्णवे—विद्यान्तरं प्रवक्ष्यामि शृणु सावहिताऽनघे।
वाग्भवं कुलदेवीञ्च तारकं वाग्भवं तथा ॥
हृल्लेखा चास्त्रमन्त्रान्ते वह्निजायावधिर्मनु।
अष्टाक्षरः परः प्रोक्तो वेदमातुरनुत्तमः ॥

पञ्चाङ्गं चास्य मन्त्रस्य पञ्चबीजेन कल्पयेत् ।
अस्त्रं शेषाक्षरैर्न्यस्य कृतकृत्यो भवेन्नरः ॥
ध्यानपूजादिकं सर्वं पूर्ववत् समुपाचरेत् ।
उग्रतारा महाविद्या कथ्यते मम पौरुषम् ॥
पञ्चाक्षरी महाविद्या हंसाद्यन्ता महोदया ।
केवलं तत्प्रयत्नेन तव स्नेहात् प्रकाशिता ॥
अनयोर्जपपूजादीन् पञ्चाक्षरीवदाचरेत् ।
बीजखण्डा महाविद्यास्ताराद्याश्च पृथक् पृथक् ॥
केवलं कवितासिद्धिदायिकाः कुलभूतिदाः ।
षड्दीर्घमायया चैव षडङ्गं समुपाचरेत् ॥
पूजा पूर्ववदुद्दिष्टा प्रयोगा अपि तत्समाः ।

एकवीराकल्पे—शिवशक्तिस्ततो माया फट्कारश्च उदाहृतः ।
सार्धत्र्यक्षरमन्त्रोऽयं ज्ञानदीपः कवित्वदः ॥

शिवशक्तिः ह्रीं । माया हूं ।

तारो माया शैवशक्तिः फट्कारान्ता परा स्मृता ।
एतयोः कल्पमुदितमहोग्राकल्पमुत्तमम्(?) ॥

तथा—लिखेत् खं कूर्चसंयुक्तं रौद्रं त्र्यैगुण्यमेव च ।
विधिविष्णुमहेशानां स्वशक्तिक्रमयोगतः ॥
एषा मता महाविद्या सर्वसिद्धिप्रदा सताम् ।

खं बिन्दुः । रौद्रं प्रासादम् । त्र्यैगुण्यं प्रणवम् । विधिशक्तिर्वाग्भवम् । विष्णुशक्तिः श्रीबीजम् । महेशशक्तिर्भुवनेश्वरीबीजम् ।

ध्यानार्चनप्रयोगांश्च तारिण्याः पूर्ववद् भवेत् ।

गन्धर्वतन्त्रे—जलापच्छमनीं तारां वक्ष्येऽन्यां शृणु तत्त्वतः ।
यस्याः स्मरणमात्रेण भयमाशु विनाशयेत् ॥
प्रणवं पूर्वमुद्धृत्य तारे तत्तारे च तथा ।
तुरे स्वाहेति मन्त्रोऽयं दशाक्षर इतीरितः ॥
ध्यानं वक्ष्ये शृणु प्राज्ञे समस्तापन्निवारणम् ।
यस्मात् सर्वत्र तोयेषु बाधा न भवति स्मृते ॥
श्यामवर्णां त्रिनयनां द्विभुजां वरपङ्कजे ।
दधानां बहुवर्णाभिर्बहुरूपाभिरावृताम् ॥

शक्तिभिः स्मेरवदनां स्फुरन्मौक्तिकभूषणाम् ।
रत्नपादुकयोर्न्यस्तपादाम्बुजयुगां स्मरेत् ॥
वर्णलक्षं जपेद् विद्यां नियमेन यथा वशी ।
दशांशं जुहुयान् मन्त्री घृताक्तै रक्तपुष्पकैः ॥
इति सिद्धा महाविद्या दद्यात् सर्वमनोरथान् ।

भैरवतन्त्रे—तारं माया वधूः कूर्चं काली कामकला ततः ।
उग्रतारे भर्ग कामः परा लक्ष्मीः शिवांकुशौ ॥
सा महाषोड़शी प्रोक्ता तारा देव्या मयाऽधुना ।

तारं प्रणवम् । मायाबीजं भुवनेश्वरी । वधूबीजं स्त्रीबीजम् । कूर्चबीजं कवचबीजम् । कालीबीजं क्रीं । कामकला सबिन्दुरीकारः । उग्रतारे स्वरूपम् । भर्ग बिन्दुयुक्त एकारः । कामः कामबीजम् । पराबीजं भुवनेश्वरी । लक्ष्मीबीजं श्रीबीजम् । शिवबीजं प्रासादबीजम् । अङ्कुशबीजं क्रोमिति ।

इति ते कथितं देवि गुह्याद् गुह्यतरं ततः ।
यस्मै कस्मै न दातव्यं नाऽशिष्याय कदाचन ॥
ध्यानपूजादिकं सर्वं पूर्ववच्च समाचरेत् ।

## अथ गुप्तषोड़शीमन्त्रः

मत्स्यसूक्ते—प्रणवं पूर्वमुच्चार्य पद्मेयुग्मं तथैव च ।
महापद्मे पदं ब्रूयात् पद्मावतिपदं ततः ॥
माये स्वाहेति मन्त्रोऽयं प्रोक्तः सप्तदशाक्षरः ।
पूजां च पूर्ववत् कृत्वा अर्धरात्रे चतुष्पथे ॥
जपमस्याचरेद् यस्तु स वै द्रुतकविर्भवेत् ।

तथा—अथाऽन्यां संप्रवक्ष्यामि तारां भुवनतारिणाम्
स्मरणात् सर्वसत्त्वानां भयमाशु विनाशयेत् ॥
प्रणवं पूर्वमुद्धृत्य हृल्लेखाबीजमुद्धरेत् ।
गगनं शेषसंयुक्तं बिन्दुनादविभूषितम् ॥
कूर्चबीजं च हृदयं तारायै च समुद्धरेत् ।
सकलदुस्तरांस्तारय तारय तथा पुनः ॥
तारयुग्मं बह्निजाया मन्त्रोऽयं सुरपादपः ।
गद्यपद्यमयीं वाणीं कथयामि विधायिनीम् ॥
चतुर्लक्षं जपेद् यस्तु सिद्धयोऽष्टौ भवन्ति हि

ध्यानपूजादिकं सर्वं पूर्ववत् समुपाचरेत् ॥

सिद्धसारस्वते—वाङ्मायाकमलाबीजमीशो भृगुनिषेषितः ।
चतुर्दशेन्दुसंयुक्तः पराभृगुमहेश्वरौ ॥
चतुर्दशविसर्गाढ्यो वदद्वन्द्वं च वाक्पदम् ।
वादिनीति पदं पश्चात् त्रींकारत्रितयात् ततः ॥
नीलसरस्वतिपदं त्रिधावृत्तिश्च वाङ्मनोः ।
कहशब्दद्वयं पश्चात् कलरीं वह्निवल्लभा ॥
चतुस्त्रिंशद्वर्णयुक्तो नीलसारस्वतो मनुः ।
षाट्कौशिकोऽसौ विज्ञेयः षड्भिर्मन्त्रैर्युतः कृतः ॥
ऋषिच्छन्दोदेवतानां विभागं शृणु पार्वति ।
गङ्गाप्रवाहनामर्षि मत्स्यरूपी जनार्दनः ॥
अतिशयवाक्कविता छन्दो नीलसरस्वती ।
सर्ववागैश्वर्यमयी समस्ताभीष्टदायिनी ॥
हूं बीजं कीलकं ज्ञेयं ह्सौः शक्तिः समीरिता ।
नीलो वर्णश्च विज्ञेयस्तरिता कविताफलम् ॥
मुद्रा तु सर्ववागीन्द्रमुखमुद्रा समीरिता ।
हृल्लेखया षडङ्गानि कुर्यात् षड्दीर्घयुक्तया ॥

### ध्यानम्

नीलांशुकां मणिमयीं च करेषु वीणां
मुद्रां च पात्रमथ पूर्णसुधं दधानाम् ।
उद्यच्चतुर्मुखवहत्कवितां प्रवाहां
नीलां भजामि हृदयेन सरस्वतीं ताम् ॥

लक्षमेकं जपेद् विद्यां तद्दशांशं सितोत्पलैः ।
हुनेत् पूजा पुरश्चर्या सर्वं नीलासमं भवेत् ॥

तन्त्रान्तरे—लज्जाबीजं वधूबीजं ततो दीर्घतनुच्छदम् ।
सारस्वतः परो मन्त्रः संप्रोक्तश्चतुरक्षरः ॥
तदन्ते यदि फट्कारो मनुः पञ्चाक्षरो भवेत् ।

तथा—तारशक्तिवधूबीजान्यन्ते दीर्घतनुच्छदम् ।
अस्त्रमग्निवधूरन्ते मनुः सप्ताक्षरो भवेत् ॥
मन्त्रशास्त्रेषु संप्रोक्तस्तथा दीर्घेण वर्मणा ।

पुटितं च वधूबीजमपरोऽसौ गुणाक्षरः ॥

तन्त्रशेखरे—तृतीयं भुवनेशानी वर्मशक्ती तनुत्रकम् ।

अस्त्रोन्ता प्रणवाद्येयं विद्या धातृप्रपूजिता ॥

तृतीयं त्रीम् । तथा—

तृतीयं भुवनेशानी कमलामीनकेतनः ।

भृगुर्मनुयुतः सर्गी शिवः कर्णेन्दुसंयुतः ॥

उग्रतारे पुनर्वर्म फडन्ता विष्णुपूजिता ।

प्रणवो वर्म हृल्लेखा स्मरौ तार्त्तीयवर्मणी ॥

अस्त्रमेषा समादिष्टा द्वितीया विष्णुपूजिता ।

हृल्लेखा-स्मरौ ह्रींकार-क्लींकारौ ।

तथा—एतासु पूर्वयुक्तासु तार्त्तीयं त्र्यैपुरं यदि ।

तदा चतुर्मुखोपास्या भवेयुस्ताः सुशोभनाः ॥

तार्त्तीयं पूर्वमादौ यदीत्यन्वयः ।

तृतीयरहिता विद्या पूर्वोक्तैकजटा मता ।

मायया प्रणवेनाऽथ रहिता सैव सा पुनः ॥

पूर्वोक्तविद्या पञ्चाक्षरी तृतीयरहिता सती एकजटा भवति । तेन चतुरक्षरोऽयम् । सैव पञ्चाक्षरी मायया प्रणवेन च रहिता सैव एकजटा भवेदिति । तेन त्र्यक्षरोऽयम् ।

तृतीयकवचास्त्राणि रतीशो वाग्भवान्तिमः ।

एषा नारायणोपास्यविद्या सर्वसमृद्धिदा ॥

तृतीयं कवचास्त्राणि त्रीं हूं फट्रूपाणि । रतीशः क्लीं । वाग्भव ऐकारः अन्तिमो यस्येति रतीशविशेषणम् । तेन पञ्चाक्षरोऽयम् ।

तथा—अमीषां मन्त्रराजानामृषिः शक्त्रिः समीरितः ।

गायत्री छन्द आदिष्टं तारा स्याद् देवता परा ॥

पूर्ववन्न्यासक्लृप्तिः स्यादथो देवीं विचिन्तयेत् ।

कर्पूरेन्दुनिभां सितां वरयुगां रत्नोल्लसद्भूषणां

चन्द्रार्धाङ्कितभालकां त्रिनयनां हारावलीभूषिताम् ।

बिभ्राणां नृकपालकर्तृकलते संशोभिवक्त्राम्बुजां

चेटीभिः परिवारितां भगवतीं तारां परामाश्रये ॥

पूर्वोक्ते पूजयेत् पीठे पूर्ववत् परमेश्वरीम् ।

विद्याकामश्चरेद्धोमं शर्करापायसैः शुभैः ॥

रक्तां ध्यायेदिमां वश्ये स्तम्भे स्वर्णनिभां स्मरेत् ।
धूम्रामुच्चाटने ध्यायेत् कृष्णां मारणकर्मणि ॥
तारोऽपरा नमो वान्तभगवत्येकजटे मम ।
वज्रपुष्पं प्रतीच्छेति द्विठान्तो मनुरुच्यते ॥
मुनिः पतञ्जलिः प्रोक्तो गायत्री छन्दो भावितम् ।
देवतैकजटा प्रोक्ता शवसंसाधनी परा ॥
षड्दीर्घभाजा बीजेन मायाख्येनाऽङ्गकल्पनम् ।
ध्यानपूजादिकं सर्वं विदध्यात् पूर्ववत्मना ॥
तारः श्रीशक्तितार्त्तीये हूं फट् नीलसरस्वती ।
ङेन्ता वह्निवधूमन्त्रः प्रोक्तो मनुलिपिः परः ॥
ऋषिर्ब्रह्मा समुद्दिष्टो गायत्री छन्द आहृतम् ।
देवता प्रोच्यते देवि सद्भिर्नीलसरस्वती ॥
द्व्येकैकद्वयषण्णेत्रे मन्त्रार्णैरङ्गकल्पनम् ।
खड्गं त्रिशूलं करपल्लवैः स्वैर्घण्टाहृतं छिन्नशिरो दधाना ।
पशुं पदाधः परिमर्दयन्ती तनोतु भव्यानि सरस्वती नः ॥
पूर्वोक्ते पूजयेत् पीठे पूर्वोक्तविधिना सुधीः ।
अथ न्यासं प्रवक्ष्यामि विद्यां देवि सुदुर्लभाम् ॥
वाक् शक्तिः कमला कामो भृगुरौबिन्दुमण्डितः ।
पञ्चबाणः परावाचौ कुटिलान्तेन्द्रसंयुक्तः ॥
वामकर्णो लवाधारस्ततः स्त्रीमात्मको मनुः ।
नीलतारे पदात् पश्चात् सरस्वति पदं वदेत् ॥
अत्री रैफयुतौ दीर्घ-वामनेत्रेन्दुभूषितौ ।
कामबीजं बलौ षष्ठस्वरकुण्डल-मण्डितौ ॥
चन्द्रः सर्गी ततः पञ्चबाणाद्यं बीजपञ्चकम् ।
सौः परा वह्निजाया स्यान् मन्त्रो द्वात्रिंशदक्षरः ॥

वाक् ऐंकारः । शक्तिः ह्रींकारः । कमला श्रींकारः । कामः क्लीं । भृगुः सकारः । औबिन्दुमण्डित औकारानुस्वारयुक्तः । पञ्चबाणः क्लींकारः । परा-वाचौ ह्रींऐंरूपौ । कुटिलान्ता फकारान्ता बकारः । इन्द्रो लकारः । वामकर्णो दीर्घ ऊकारः । लवो बिन्दुः । तेन ब्लूं । स्त्रीमात्मकः स्त्रीं । नीलतारे स्वरूपम् । सरस्वतीत्यपि स्वरूपम् । अत्री दकारौ रैफयुतौ । दीर्घ आकारः ।

वामनेत्र ईकारः। इन्दुरनुस्वारः तैर्युतौ। तेन ग्रां ग्रीं। कामबीजं क्लीं। बलौ बकार-लकारौ। षष्ठस्वर ऊकारः। कुण्डलमनुस्वारः। चन्द्रः सकारः। सर्गो विसर्गवान्। पञ्चबाण ऐकारः। तदाद्यं बीजपञ्चकं ऐं क्लीं ब्लूं स्त्रीं सः इत्यात्मकम्। सौरिति स्वरूपम्। परा ह्रींकारः। वह्निजाया स्वाहा। तथा—

ऋष्याद्याः पूर्वमुक्ताः स्युः पूर्ववन्न्यासकल्पनम्।

नौकारूढां त्रिनेत्रामहिलसिततनुं सच्चिदानन्दरूपां
हस्तैः स्वीयैः कपालं त्रिशिखकृकचके कर्त्तृकां संदधाना।
अट्टाट्टाहास्ययुक्तामनवरतलसन्मुण्डमालाभिरम्यां
चीरोद्यत्कटीरस्थलललितलसत्किङ्किणीं भासमानाम्॥

इति ध्यात्वा जपेन् मन्त्रं चतुर्लक्षं समाहितः।
जुहुयात् किंशुकैः फुल्लैर्मधुरत्रयलोलितैः।
चतुरस्रे वह्निवाय्वोर्माहेशे विधुरक्षसोः।
विघ्नेशं वटुनामानं क्षेत्रेशं भैरवं तथा॥
योगिनीमथ सम्पूज्य गुरुमीशे समर्चयेत्।
भूगृहस्याद्यरेखायामणिमाद्याः समर्चयेत्॥
अणिमा प्रथमा प्रोक्ता द्वितीया लघिमा तथा।
तृतीया महिमा प्रोक्ता चतुर्थीशित्वसंज्ञिका॥
वशिता पञ्चमी ख्याता षष्ठी प्राकाम्यसंज्ञिका।
सप्तमी भुक्तिराख्याता भवेदिच्छाऽष्टमी ततः॥
असिताङ्गो रुरुश्चण्डः क्रोधोन्मत्तकपालिनः।
भीषणाख्यं च संहारं द्वितीयायां समर्चयेत्॥
तृतीयायां यजेन मन्त्री ब्राह्म्याद्याः प्रोक्तलक्षणाः।
प्रथमावरणे मन्त्री योनिमुद्रां प्रदर्शयेत्॥
कुलेशी कुलनन्दा च वागीशी भैरवी उमा।
श्रीशान्ते च तथा चण्डा धूम्रा काली करालिनी॥
महालक्ष्मी च कङ्काली रुद्रकाली सरस्वती।
वाग्वादिनी च नकुली भद्रकाली शिवा प्रभा॥
प्रत्यङ्गिरा सिद्धलक्ष्मीरमृतेशी च चण्डिका।
खेचरी भूचरी सिद्धा कामाख्या हिङ्गुला बला॥
जया च विजयाऽजिता नित्यायुक्ताऽपराजिता।

विलासिनी तथा घोरा चित्रा मुग्धा कुलेश्वरी ॥
सोमेश्वरी महाचन्द्रा विद्या हंसा विनायकी ।
वेदगा च तथा भीमा उग्रा वेद्या सती गतिः ॥
उग्रेश्वरी चन्द्रगर्भा ज्योत्स्ना सत्या यशोवती ।
कुलिका कामिनी ज्ञाना डाकिनी काकिनी ततः ॥
लाकिनी काकिनी पश्चात् साकिनी हाकिनी तथा ।
चतुःषष्टिदले पूज्या द्वितीयावरणे त्विमाः ॥
खेचरीं दर्शयेन् मुद्रां खेचरत्वप्रवर्त्तिनीम् ।
किराता योगिनी वीरा वेताला यक्षिणी हरा ॥
ऊर्ध्वकेशी च मातङ्गी मोहिनी वंशवर्द्धिनी ।
मालिनी ललिता दूती मनोज्ञा पद्मिनी परा ॥
बर्वरी छत्रहस्ता च रक्तनेत्रा विचर्चिका ।
मातृका दूरदर्शा च क्षेत्रेशी रङ्गिणी नटी ॥
शान्ता दीप्ता वज्रहस्ता धूम्रा श्वेता सुमङ्गला ।
अमूः समर्चयेन् मन्त्री द्वात्रिंशत्पत्रमध्यगाः ॥
तृतीयावरणे मुद्रां बीजाह्वामभिदर्शयेत् ।
मुग्धा श्रीकुरुकुल्ला च त्रिपुरा त्रोतना क्रिया ॥
रतिः प्रीतिस्तथा बाली सुमुखी श्यामला विला ।
पिशाची च विदारी च शीतला वज्रयोगिनी ॥
सर्वेश्वरी शक्तियुक्ता चतुर्थावरणे इमाः ।
पूजयेद् दर्शयेन् मुद्रामङ्कुशाख्यां महेश्वरि ॥
अष्टपत्रे यजेन् मन्त्री सरस्वत्यष्टकं शुभः ।
प्रणवो हृदयं पद्मासने शब्दपदात् पुनः ॥
रूपे वाक् शम्भुवनिता कामो वदवदेति च ।
वाग्वादिनि प्रिया वह्नेश्चतुर्विंशाक्षरो मनुः ॥
अनेनाऽभिजयेद् देवीं वागीशीं शुभलक्षणाम् ।
शम्भुजीवकलेशाग्निमण्डिता बिन्दुमालिनी ॥
वदयुग्मं ततश्चित्रेश्वरि वाग्वह्निसुन्दरी ।
चित्रेश्वरीं यजेद् देवीममुना मनुना सुधीः ॥

शम्भुर्हकारः । जीवः सकारः । कल इति स्वरूपम् । ईशो ईकारः । अग्नी

रेफः। मण्डितेत्यनन्तरमकारप्रश्लेपः। तेन च बिन्दुरूपं लक्ष्यते। बिन्दुमालिनी ईकारः। तेन हसकलह्रीं। वाक् ऐं। वह्निसुन्दरी स्वाहा। शेषं स्वरूपम्।

वाग्लज्जः कुलजे शब्दः सरस्वति शिरो नमः।
कुलजां पूजयेद् देवीं मन्त्रेणाऽनेन साधकः॥

वाक् ऐं। शिरः स्वाहा।

परा वाक् कमला रुद्धा वदशब्दयुगं ततः।
कीर्त्तीश्वरि प्रिया वह्नेः हृदयं मनुनाऽमुना॥
कीर्तीश्वरीं यजेन् मन्त्री ततो वाक् शम्भुसुन्दरी।
अन्तरिक्षपदादग्रे सरस्वति शुचिप्रिया॥
अमुना मनुना देवीमन्तरिक्षपदान्तिकाम्।
सरस्वतीं यजेन् मन्त्री हसखफ्रें मनुस्वरः॥
शिवजीवाग्निसंयुक्तो बिन्दुनादविभूषितः।
वराहहंसकुटिलबलिप्रद्युम्नसंयुतम्॥
वामाक्षि वाक् परा लक्ष्मीर्वाणो घ्रीं-घटशब्दतः।
सरस्वति घटे शब्दाद् वदेद्वतरद्वयम्॥
तृतीयान्ता च रुद्राज्ञा ममाऽभिलषितं वदेत्।
कुरुयुक् प्रेयसी वह्नेरमुना मनुना यजेत्॥
त्रिलोकीप्रथितां देवीं मन्त्री घटसरस्वतीम्।

मनुस्वर इत्यस्य विशेषणं शिवेत्यादिद्वयम्। शिवो हः। जीवः सः। अग्नी रेफः। वामाक्षीत्यस्य विशेषणं वराहेत्यादि। वराहो हकारः। हंसः सकारः। कुटिलः फकारः। बली रेफः। प्रद्युम्नोऽनुस्वारः। वामाक्षि ईकारः। तेन हसफ्रीं। वाक् ऐं। परा ह्रीं। लक्ष्मी श्रीं। वाणो द्रां द्रीं क्लीं ब्लूं सः। घ्रीमिति स्वरूपम्। तृतीयान्तेति रुद्राज्ञाविशेषणम्। तेन रुद्राज्ञया। शेषं सुगमम्।

भूधरो भूधरः प्रोक्तो वामकर्णेन्दुखण्डवान्।
भगवच्चन्द्रवन्नीरं वदयुग्मं तृतीयकम्॥
क्रोधः फट् मनुना तेन मन्त्री नीलां समर्चयेत्।

भूधरो बकारः। भूधरो लकारधरः। वामकर्ण ऊकारः। इन्दुखण्डोऽर्धचन्द्रः। तेन ब्लूं। भग एकारः। तद्वत् तद्युक्तम्। चन्द्रोऽर्धचन्द्रः। तद्वत् तद्युक्तम्। नीरं वकारः। तेन वें। तृतीयकं श्रींकारः। क्रोधः हूंकारः।

वाग्भवो वाग्युतः शम्भुर्ह्रीं पुनः किलियुग्मकम्।

विच्चे नवाक्षरीमेनां किलिनाम्नीं समर्चयेत् ॥

वाग्युतः एकारयुतः। शम्भुर्हकारः। तेन ह्रैं। शेषं स्वरूपम्।

पञ्चमावरणे क्षोभमुद्रामादर्शयेत् सुधीः।
डाकिन्याद्या यजेदङ्गं कोणेषु मनुवित्तमः ॥
दर्शयेद् द्राविणीं मुद्रां षष्ठमावरणं मतम्।
परां बालां भैरवीं च त्रिकोणे च समर्चयेत् ॥
दर्शयेत् कर्षणीं मुद्रां सप्तमावरणं स्मृतम् ॥
पुनर्देवीं समभ्यर्चेदुपचारैर्मनोहरैः।
अथ मन्त्री बलिं दद्यात् प्रत्यहं च चतुष्पथे ॥
गणप-क्षेत्रपालाभ्यां योगिन्यै भैरवाय च।
देव्यै रुधिरमांसान्नमाषदीपाश्रितं दधि ॥
बलिद्रव्यमिति ख्यातं समीहितसमृद्धिदम्।
त्रिविधं ध्यानमाख्यातं सृष्टिस्थितिलयक्रमात् ॥
तत्तत्कर्मविशेषे तु तत्तद्ध्यानं समाचरेत्।
चतुर्वक्त्रामष्टभुजां मुक्ताभरणभूषिताम् ॥
श्वेताम्बरामक्षमुद्रां शक्तिं पाशं कमण्डलुम्।
पङ्कजं पुष्पमालां च वराभीती भुजेषु च ॥
शब्दाम्भोनिधिमध्यस्थां हंसयाने विचिन्तयेत्।
रक्ताम्बरां हेमरत्न-नानालङ्कारभूषिताम् ॥
रत्नदीपे महातन्यां(?) परिवारैः समावृताम्।
रत्नसिंहासनारूढां वराभीत्यक्षमालिकाम् ॥
दधती रत्नचषकं स्थितिरूपे विचिन्तयेत्।
रक्ताम्भोनिधिमध्ये तु नौकारूढां विचिन्तयेत् ॥
नववक्त्रां भालनेत्रां कृष्णाम्बरभयानकाम्।
वराभये च दधतीं परशुं दर्विकां तथा ॥
संहारास्त्रं वामहस्ते दक्षे पाशुपतं तथा।
त्रिशीर्षं वामहस्तेन त्रिशूलं खड्गकर्त्तृके ॥
पद्मं पाशं हलं शक्तिं त्रिमूर्त्तिं डिण्डिमं तथा।
खट्वाङ्गं मुशलं दोर्भिः शत्रुभक्षणमानसाम् ॥
भक्तानां वरदात्रीं च रक्षयन्तीं च साधकम्।

अनेन ध्यानयोगेन तत् तत् कर्म समाचरेत् ॥
एवं सिद्धमनुर्मन्त्री कवीनामग्रणीर्भवेत् ।
अछिन्ननालबालस्य रसनायां लिखेन् मनुम् ॥
अष्टमे वत्सरे बालः सर्वाशासातिगो भवेत् ।
अभिमन्त्र्य वचाकाण्डमयुतं च वसूत्तरम् ॥
बलिं दत्त्वा यथा पूर्वं तद् कुर्याद् बालकण्ठगम् ।
सम्प्राप्ते द्वादशे वर्षे भक्षितं कविताकरम् ॥
चन्द्रसूर्योपरागे तु तैलं ज्योतिष्मतीभवम् ।
कर्षमात्रं प्रजप्तं तन्मन्त्रेणाऽनेन भक्षयेत् ॥
जलमध्यस्थितोऽनेडः शिशुर्वाचस्पतिर्भवेत् ।
श्मशाने च चतुर्मार्गे प्रेतमारुह्य साधकः ॥
भयलज्जाविनिर्मुक्तो जपेद् विद्यामनन्यधीः ।
अर्द्धरात्रे भवेच्छब्दो भवविद्यार्थपारगः ॥
अष्टवर्षशिशुद्वन्द्वं सुस्नातं स्वकुलोद्भवम् ।
संस्थाप्य साधको दद्यात् तयोर्मूर्ध्नि कराबुभौ ॥
कुरुतो न्यायवेदान्तविवादं तुमुलं महत् ।
विपिने विजनेऽरण्ये रम्भामण्डपमण्डिते ।
विधाय वेदिकां तत्र निषण्णः सस्मितः सुखम् ॥
चम्पकाशोकपुन्नाग-कदलीमण्डिते वने ।
दोलारूढां प्रसन्नास्यां चेटीभिः प्रेषितां शुभाम् ॥
इति ध्यायन् जपेन्मन्त्रं रविलक्षं समाहितः ।
जपान्ते वितरेद् देव्यै परिवारयुजे बलिम् ॥
अमुना विधिना देवी लभते सुसमीहितम् ।

## अथ तारिणीकल्पः

तारिणीतन्त्रे— ईश्वर उवाच—

श्रूयतां शैलतनये जाड्यनाशकरी परा ।
चतुर्वर्गफला विद्या मन्त्रसिद्धिप्रदायिका ॥
वर्गाद्यं वह्निसंयुक्तं वामाक्षिपरिभूषितम् ।
नादबिन्दुसमायुक्तं वसुसिद्धिप्रदायकम् ॥
पुनश्चतुर्मुखं देवि तकारेण विभूषितम् ।

स्वरेणैव चतुर्थेन चन्द्रखण्डेन च प्रिये ॥
लाञ्छितं वै महाबीजं चतुर्वर्गफलप्रदम् ।
ततः कृष्णपदं चोक्त्वा ततो देवि पदं स्मृतम् ॥
ह्रींकारं च ततो दद्यात् वपूर्वमुद्धरेत् ततः ।
ईकारेण च रेफेण मकारेण च भूषितम् ॥
ततो वाग्भवमुच्चार्य मन्त्रमेनं समुद्धरेत् ।
नवाक्षरो मनुर्देवि तारिण्याः समुदीरितः ॥
इयमेव महाविद्या स्वर्गे मर्त्ये सुदुर्लभा ।
अष्टसिद्धिप्रदा देवि चतुर्वर्गफलप्रदा ॥
नानया सदृशी विद्या नानेन सदृशो मनुः ।
अनया सदृशी सिद्धिर्न भूता न भविष्यति ॥
यो विद्यां लभते देवि किंवा तस्य न जायते ।
अचिराल्लभते वाणीं गद्यपद्यप्रदायिनीम् ॥
ज्ञानमात्रेण विद्यायाः क्षिप्रं द्रुतकविर्भवेत् ।
विना छन्दो विना शिक्षां विनाऽभ्यासेन पार्वति ॥
विना ज्ञानं विना यत्नं विनालापं कवेरपि ।
जिह्वायां जायते तस्य कवित्वं रसनिर्म्मितम् ॥

## तत्र पूजाक्रमः

प्रथमं जलमानीय पादप्रक्षालनं स्मृतम् ।
द्विराचम्य शिखां बद्ध्वा ततो भूमिविशोधनम् ॥
विघ्नस्योत्सारणं कृत्वा ततः पुष्पविशोधनम् ।
करौ संशोध्य देवेशि चाऽस्त्रमन्त्रेण तत्परः ॥
गुरून् गणपतिं नत्वा भूतशुद्धिं समाचरेत् ।
स्वाधिष्ठाने स्थितं बीजं वाग्भवं सर्वसिद्धिदम् ॥
तत्तदुद्भूताग्निरर्चिर्भिः शरीरं दहते बुधैः ।
तद्भस्मपुञ्जमुत्सार्य ह्रीं समुद्भूतवायुना ।
ललाटे कामबीजं तु तदुद्भूतामृतेन च ।
तदस्थिप्लावितं कृत्वा दृढीभूतं चरेत् ततः ॥
निर्लेपं निर्गुणं शुद्धमात्मानं देवतामयम् ।
सर्वपापविनिर्मुक्तं देहं संचिन्त्य साधकः ॥

शरीरस्य विशोधेन प्राणायामं चरेत् ततः ।
अघोरमूलबीजेन प्राणायामत्रयं स्मरेत् ॥
मन्त्रन्यासं ततो देवि श्रूयतां मन्त्रसिद्धिदम् ।
शक्तित्रयस्य ऋषिः प्रोक्तो बृहती छन्द ईरितम् ॥
तारिणी देवता प्रोक्ता ह्रींकारं बीजमुच्यते ।
वाग्भवं शक्तिरित्युक्तमिति ऋष्यादिकं चरेत् ॥
बीजेन तु षडङ्गेन षडङ्गानि प्रकल्पयेत् ।
धर्मादि विन्यसेन् मन्त्री ततोऽधर्मादि विन्यसेत् ॥
उपर्य्युपरि मध्ये च क्रमेणैतान् न्यसेत् ततः ।
कल्पवृक्षं समुच्चार्य मणिपीठं समुच्चरेत् ॥
शवमुण्डं धारयित्वा ततो रक्तकपालकम् ।
चतुर्दिक्षु न्यसेद् देवि चितामग्निसमन्विताम् ॥
हृत्पद्माष्टदले तत्र चाष्टशक्तीर्न्यसेत् ततः ।
दुर्गा जया ततो मेधा विजया सुप्रभा मता ॥
काली गौरी शिवा चैव इत्यष्ट शक्तयः स्मृताः ।
अत एवं स्वदेहेषु पञ्चयोनिं न्यसेद् बुधः ॥
केशान्ते दक्षिणे भागे योनिवीरां न्यसेत् ततः ।
केशान्ते वामभागे च योनिविद्यां ततो न्यसेत् ॥
नासामूले च देवेशि योनिरूपां विभागतः ।
योनिकामां योनिहारां नेत्रयोः सव्यवामयोः ।
योनिरूपां न्यसेदोष्ठे सर्वकामार्थसिद्धये ।
मुखे कर्णे च देवेशि दक्षवामादिभेदतः ॥
चिबुके च महादेवि न्यसेत् साधकसत्तमः ।
योनिहारां योनिकायां योनिरूपां ततः परम् ॥
बाहुमूले तथा वामे हृदि चैव वरानने ।
योनिचित्तां योनिनिष्ठां योनिरूपां स्मरेत् ततः ॥
स्तनयोर्नाभिदेशेषु योनिस्थानं सदा स्मरेत् ।
योनिसिद्धां योनिविद्धां योनिरूपां न्यसेत् ततः ॥
एताः स्मृताश्चतुर्थ्यन्ता नमोऽन्ताश्च विचक्षणैः ।
देहपीठे ततो देवीं ध्यायेत् सुस्थिरमानसः ॥

कृष्णां लम्बोदरीं भीमां नागकुण्डलशोभिताम् ।
रक्तमुखीं ललज्जिह्वां रक्ताम्बधरां कटौ ॥
पीनोन्नतस्तनीमुग्रां महानागेन वेष्टिताम् ।
शवस्योपरि देवेशि तस्योपरि कपालके ॥
नासाग्रध्याननिरतां महाघोरां वरप्रदाम् ।
चतुर्भुजां दीर्घकेशीं दक्षिणस्योर्ध्वबाहुना ॥
बिभ्रतीं नलिनीमेकं वामार्द्धे पानपात्रकम् ।
वराभयधरां देवीमधस्ताद्दु दक्षवामयोः ॥
पिबन्तीं रौधिरीं धारां पानपात्रे सदाशिवे ।
सर्वसिद्धिप्रदां देवीं नित्यां गिरिनिवासिनीम् ॥
लोचनत्रयसंयुक्तां नागयज्ञोपवीतिनीम् ।
दीर्घनासां दीर्घजङ्घां दीर्घाङ्गीं दीर्घजिह्विकाम् ॥
चन्द्रसूर्याग्निभेदेन त्रिलोचनसमन्विताम् ।
शत्रुनाशकरीं देवीं महाभीमां वरप्रदाम् ॥
व्याघ्रचर्मशिरोबद्धां जगत्त्रयविभाविताम् ।
साधकानां सुखकर्त्रीं सर्वलोकभयङ्करीम् ॥
एवम्भूतां महादेवीं तारिणीं प्रणमाम्यहम् ।

एवं ध्यात्वा मानसैः सम्पूज्यार्घ्यस्थापनं तारावत् । अस्याः पूजायन्त्रं तथा ।

यन्त्रं निर्माय देवेशि स्थापयेद् यन्त्रमध्यतः ।
रक्तमलयजेनापि वसुपत्रं लिखेत् ततः ॥
तद्बाह्ये ह्यष्टपत्राणि लिखेत् साधकसत्तमः ।
वह्निमण्डलयुग्मं च यन्त्रमध्ये लिखेत् ततः ॥
पूर्वदले च देवेशि चाद्यबीजं लिखेत् ततः ।
द्वितीयं दक्षिणे पत्रे तृतीयं पश्चिमे दले ॥
उत्तरपत्रे देवेशि फट् वाणीं च लिखेत् ततः ।
चतुर्द्वारसमायुक्तमष्टवज्रसमन्वितम् ॥
ततः पूर्वोक्तक्रमेण पीठं सम्पूज्य सर्वतः ।
तत्रावाह्य महेशानीं यजेद् वै मन्त्रमुच्चरन् ॥
षडङ्गेनैव देवेशि पूजयित्वा तु पार्वतीम् ।
क्षेत्रपालं भैरवं च गणनाथं महान्तकम् ।

एतच्चतुष्टयं देवि यजेद् द्वारचतुष्टये ।
पूर्वाद्यष्टदले देवि एतान् सम्पूज्य साधकः ॥
अणिमाऽनङ्गमदना लघिमा मदनातुरा ।
अनङ्गकुसुमा देवि ततोऽष्टकर्णिका तथा ॥
कपालिका च देवेशि ततोऽष्टयोगिनी तथा ।
तथा षोड़शपत्रेषु पूजयेत् परिवारिकाः ॥
सुखदां मोक्षदां तत्र भक्तिदां भोगदां तथा ।
मुक्तिदां सिद्धिदां चैव कामदां कुलदां तथा ॥
क्षेमदां शिवदां वापि वरदामात्मदां तथा ।
रागदां भोगदां देवि मुक्तिदां सर्वसिद्धिदाम् ॥
अणिमाद्यष्टसिद्धिं च पूर्वद्वारे यजेत् ततः ।
वह्नेर्दशकलां देवि द्वारे च दक्षिणे तथा ॥
पाश्चात्यद्वारदेशेऽपि कलाश्चन्द्रस्य पूजयेत् ।
उत्तरे च तथा देवि रवेरपि कलां ततः ॥
षड़ङ्गेन यजेद् देवीं ततोऽस्त्राणि प्रपूजयेत् ।
एताश्च देवदेवेशि चतुर्थ्यन्ताः समीरिताः ॥
नमोऽन्ताश्च महादेवि प्रोक्ताः सकलसिद्धिदाः ।
पुष्पैर्बहुविधैश्चैव रक्तचन्दनचर्चितैः ॥
रक्तपुष्पैर्महादेवि नानागन्धसमन्वितैः ।
बिल्वपत्रैस्तथा गन्धैर्जवापुष्पैर्विशेषतः ॥
श्वेतरक्तपरागैश्च चम्पकैः कैतकैस्तथा ।
एभिः पुष्पैर्महादेवीं पूजयेन्नित्यतारिणीम् ॥
मालती-बकपुष्पैश्च सदूर्वैर्नार्चयेत् तदा ।
कदम्बैः श्वेतकुसुमैः कुङ्कुमैः काञ्चनैस्तथा ॥
एवं सम्पूजयित्वा च एभिर्द्रव्यैर्महेश्वरि ।
लक्षमेकं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ॥

इति तारिणीकल्पः समाप्तः

इति महामहोपाध्याय-ठक्कुर श्रीनरसिंह-विरचिते ताराभक्ति-
सुधार्णवे एकादशस्तरङ्गः ॥ ११ ॥